श्रीवेदव्यासप्रणीतमहाभारतान्तर्गता

# श्रीमद्भगवद्गीता

## श्रीमच्छंकराचार्यप्रणीतभाष्यसमेता ।

---

### अथ भाष्यकाराणामुपोद्घातः ।

[1]ॐ नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम् ।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥ १ ॥

[2]स भगवान्सृष्ट्वेदं जगत्तस्य च स्थितिं चिकीर्षुर्मरीच्यादीनग्रे सृष्ट्वा प्रजापतीन्प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तम् । ततोऽन्यांश्च सनकसनन्दनादीनुत्पाद्य निवृत्तिलक्षणं धर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास । द्विविधो हि धर्मः वेदोक्तो प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च । जगतः स्थितिकारणं प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुर्यः ।

[3]स धर्मो ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिश्च श्रेयोऽर्थिभिरनुष्ठीयमानः (प्रचयं गच्छति) । दीर्घेण कालेनानुष्ठातृणां कामोद्भवाद्धीयमानविवेकविज्ञानहेतुकेनाधर्मेणाभिभूयमाने धर्मे प्रवर्धमाने चाधर्मे जगत. स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुर्भौमस्य ब्रह्मणो ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन किल सम्बभूव । ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मस्तदधीनत्वाद्वर्णाश्रमभेदानाम् ।

---

1. Mangala

2 Dharma is the cause of the continuation of the world. It is two-fold Activity and Renunciation

3 Krsna born to uphold that Dharma and thereby to sustain the world.

[4]स च भगवाञ्ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा संपन्नस्त्रिगुणात्मिकां वैष्णवीं स्वां मायां मूलप्रकृतिं वशीकृत्याजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन्स्वमायया देहवानिव जात इव च लोकानुग्रहं कुर्वन्निव लक्ष्यते। स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया वैदिकं हि धर्मद्वयमर्जुनाय शोकमोहमहोदधौ निमग्नायोपदिदेश गुणाधिकैर्हि गृहीतोऽनुष्ठीयमानश्च धर्मः प्रचयं गमिष्यतीति ।

[5]तं धर्मं भगवता यथोपदिष्टं वेदव्यासः सर्वज्ञो भगवद्गीताख्यैः सप्तभिः श्लोकशतैरुपनिबबन्ध ।

[6]तदिदं गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूतं दुर्विज्ञेयार्थम्। तदर्थाविष्करणायानेकैर्विवृतपदपदार्थवाक्यार्थन्यायमप्यत्यन्तविरुद्धानेकार्थत्वेन लौकिकैर्गृह्यमाणमुपलभ्याहं विवेकतोऽर्थनिर्धारणार्थं संक्षेपतो विवरणं करिष्यामि ।

[7]तस्यास्य गीताशास्त्रस्य संक्षेपतः प्रयोजनं परं निःश्रेयसं सहेतुकस्य संसारस्यात्यन्तोपरमलक्षणम्। तच्च सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठारूपाद्धर्माद्भवति ।

(a) तथेममेव गीतार्थधर्ममुद्दिश्य भगवतैवोक्तम्—

'स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने' इत्यनुगीतासु ( महा. अश्व. )। तत्रैव चोक्तम्—'नैव धर्मी न चाधर्मी न चैव हि शुभाशुभी ।

यः स्यादेकासने लीनस्तूष्णीं किंचिदचिन्तयन् ॥'

'ज्ञानं संन्यासलक्षणम्' इति च ।

(b) इहापि चान्ते उक्तमर्जुनाय—'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज' इति। ( भ. गी. १८.६६ )

[8]अभ्युदयार्थोऽपि यः प्रवृत्तिलक्षणो धर्मो वर्णाश्रमांश्चोद्दिश्य विहितः स देवादिस्थानप्राप्तिहेतुरपि सन्नीश्वरार्पणबुद्ध्यानुष्ठीयमानः सत्त्वशुद्धये भवति फला-

---

4. Krsna's birth due to Māyā ( Power of Illusion ). Krsna the preceptor of Arjuna in the tow-fold Dharma.

5. Vyāsa the author of the Gitā in 700 verses

6 Many mutually inconsistent Commentaries on the Gitā, prior to Sankara.

7. The Aim of the Gitā : Final Beatitude through Renunciation of all Actions

Proofs : (a) Anugitā, (b) Gitā.

8. The Dharma of Action *is subsidiary* to the Dharma of Renunciation of Actions. (N. B.—This rule will be applied by Śankara to the Yoga and Sāmkhya of the Gitā.)

भिसंधिवर्जितः; शुद्धसत्त्वस्य च ज्ञाननिष्ठायोग्यताप्राप्तिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुत्वमपि प्रतिपद्यते। तथा चेममेवार्थमभिसंधाय वक्ष्यति —'ब्रह्मण्याधाय कर्माणि' (भ. गी. ५.१०), 'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये' इति (भ. गी. ५.११)।

[9]इमं द्विप्रकारं धर्मं निःश्रेयसप्रयोजनं परमार्थतत्त्वं च वासुदेवाख्यं परं ब्रह्माभिधेयभूतं विशेषतोऽभिव्यञ्जयद्विशिष्टप्रयोजनसम्बन्धाभिधेयवद्गीताशास्त्रम्। यतस्तदर्थे विज्ञाते समस्तपुरुषार्थसिद्धिरित्यतस्तद्विवरणे यत्नः क्रियते मया।

अत्र च—

9. Sankara attracted by the Gita.



# अथ प्रथमोऽध्यायः ।

धृतराष्ट्र उवाच—

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत संजय ! ॥ १ ॥

संजय उवाच—

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुंगवः ॥ ५ ॥

युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥

अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७ ॥

भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥

अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥

अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥

तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥

ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥

ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥

पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५ ॥

अनंतविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥

काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥

द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक् पृथक् ॥ १८ ॥

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥

अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः ।
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥
हृषीकेशं तदा वाक्यमिदमाह महीपते ।

अर्जुन उवाच—

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥

यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥

योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥

संजय उवाच—

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥

भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति ॥ २५ ॥

तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान् ।
आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ।
श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ॥ २६½ ॥
तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ।
कृपया परयाविष्टो विषीदन्निदमब्रवीत् ॥ २७½ ॥

अर्जुन उवाच—

दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ।
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ॥ २८½ ॥

वेपथुश्च शरीरे मे रोमहर्षश्च जायते ।
गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ॥ २९½ ॥

न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ।
निमित्तानि च पश्यामि विपरीतानि केशव ॥ ३०½ ॥

न च श्रेयो नु पश्यामि हत्वा स्वजनमाहवे ।
न काङ्क्षे विजय कृष्ण न च राज्यं सुखानि च ॥ ३१½ ॥
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ ३२ ॥
येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ ३३ ॥
आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः श्यालाः संबन्धिनस्तथा ॥ ३४ ॥
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥ ३५ ॥
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ॥ ३६ ॥

तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव　॥ ३७ ॥

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम्　॥ ३८ ॥

कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन　॥ ३९ ॥

कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत　॥ ४० ॥

अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः　॥ ४१ ॥

संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः　॥ ४२ ॥

दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः　॥ ४३ ॥

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम　॥ ४४ ॥

अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः　॥ ४५ ॥

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत्　॥ ४६ ॥

संजय उवाच—

एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४७ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि
श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुन-
संवादेऽर्जुनविषादयोगो नाम प्रथमोऽध्यायः ॥ १ ॥

2 तत्र केचिदाहु-सर्वकर्मसन्न्यासपूर्वकादात्मज्ञाननिष्ठामात्रादेव केवला-त्कैवल्य न प्राप्यत एव, किं तर्हि अग्निहोत्रादिश्रौतस्मार्तकर्मसहिताज्ज्ञानात्कैवल्यप्राप्तिरिति सर्वासु गीतासु निश्चितोऽर्थ इति।

(a) ज्ञापक चाहुरस्यार्थस्य–'अथ चेत्त्वमिम धर्म्यं सग्राम न करिष्यसि' (II 33) 'कर्मण्येवाधिकारस्ते' (II 47) 'कुरु कर्मैव तस्मात्त्वम्' (IV 15) इत्यादि।

(b) हिंसादियुक्तत्वाद्वैदिक कर्माधर्मायेनियमप्याशङ्का न कार्या, कथ, क्षात्र कर्म युद्धलक्षण गुरुभ्रातृपुत्रादिहिंसालक्षणमत्यन्तक्रूरमपि स्वधर्म इति कृत्वा नाधर्माय, तदकरणे च 'ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि' (II 33) इति ब्रुवता यावज्जीवादिश्रुतिचोदितानां पश्वादिहिंसालक्षणानां च कर्मणां प्रागेव नाधर्मत्वमिति सुनिश्चितमुक्त भवतीति।

3 तदसत्,

I ज्ञानकर्मनिष्ठयोर्विभागवचनाद्बुद्धिद्वयाश्रययो।

(a) अशोच्यानित्यादिना (II 11) भगवता यावत् 'स्वधर्ममपि चावेक्ष्य' (II, 31) इत्येतदन्तेन ग्रन्थेन यत्परमार्थात्मतत्त्वनिरूपण कृत तत्साख्य तद्विषया बुद्धिरात्मनो जन्मादिषड्विक्रियाभावादकर्तात्मेति प्रकरणार्थनिरूपणाद्या जायते सा साख्यबुद्धि सा येषा ज्ञानिनामुचिता भवति ते साख्या। एतस्या बुद्धेर्जन्मन प्रागात्मनो देहादिव्यतिरिक्तत्वकर्तृत्वभोक्तृत्वाद्यपेक्षो धर्माधर्मविवेकपूर्वको मोक्षसाधनानुष्ठाननिरूपणलक्षणो योग, तद्विषया बुद्धिर्योगबुद्धि। सा येषा कर्मिणामुचिता भवति ते योगिन।

---

2 A Predecessor of Sankara Combination of Jnāna and certain Karmans is the means to Moksa

Its evidence —

(a) Gitā

(b) Vaidika actions as a help

3 Sankara's Refutation.

I The two standpoints of Jnāna and Karman are mentioned in the Gitā *as applicable to two distinct cases* (*vibhāga*):—

(a) The Samkhya and Yoga The latter *precedes* the former

(b) तथा च भगवता विभक्ते द्वे बुद्धी निर्दिष्टे—'एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु' (II. 39) इति। तयोश्च साङ्ख्यबुद्ध्याश्रया ज्ञानयोगेन निष्ठा सांख्यानां **विभक्तां** वक्ष्यति—'पुरा वेदात्मना मया प्रोक्ता' (III. 3) इति। तथा च योगबुद्ध्याश्रयां कर्मयोगेन निष्ठां **विभक्तां** वक्ष्यति—'कर्मयोगेन योगिनाम्' (III. 3) इति। एवं साङ्ख्यबुद्धिं योगबुद्धिं चाश्रित्य द्वे निष्ठे **विभक्ते** भगवतैवोक्ते ज्ञानकर्मणोः कर्तृत्वाकर्तृत्वैकत्वानेकत्वबुद्ध्याश्रययोरेकपुरुषाश्रयत्वासम्भवं पश्यता।

(c) यथैतद्विभागवचनं तथैव दर्शितं शातपथीये ब्राह्मणे—'एतमेव प्रव्राजिनो लोकमिच्छन्तो ब्राह्मणाः प्रव्रजन्ति' इति सर्वकर्मसंन्यासं विधाय तच्छेषेण—'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' (Br Upa IV 4. 22) इति। तत्रैव च—"प्राग्दारपरिग्रहात्पुरुष आत्मा प्राकृतो धर्मजिज्ञासोत्तरकालं लोकत्रयसाधनं पुत्रं द्विप्रकारं च वित्तं मानुषं दैवं च, तत्र मानुषं वित्तं कर्मरूपं पितृलोकप्राप्तिसाधनं विद्यां च, दैवं वित्तं देवलोकप्राप्तिसाधनं सोऽकामयत" इत्यविद्याकामवत एव सर्वाणि कर्माणि श्रौतादीनि दर्शितानि। "तेभ्यो व्युत्थाय प्रव्रजन्ति" इति व्युत्थानमात्मानमेव लोकमिच्छतोऽकामस्य विहितम्। **तदेतद्विभागवचनमनुपपन्नं स्याद्यदि श्रौतकर्मज्ञानयोः समुच्चयोऽभिप्रेतः स्याद्भगवतः।**

II (a) न चार्जुनस्य प्रश्न उपपन्नो भवति 'ज्यायसी चेत्कर्मणस्ते' (III 1) इत्यादिः। एकपुरुषानुष्ठेयत्वासम्भवं बुद्धिकर्मणोर्भगवता पूर्वमनुक्तं कथमर्जुनोऽश्रुतं बुद्धेश्च कर्मणो ज्यायस्त्वं भगवत्यध्यारोपयेन्मृषैव ज्यायसी चेत्कर्मणस्ते मता बुद्धिरिति (III 1)।

(b) किं च यदि बुद्धिकर्मणोः सर्वथा समुच्चय उक्तः स्यादर्जुनस्यापि स उक्त एवेति—'यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम्' (V 1) इति कथमन्यतरविषय एव प्रश्नः स्यात्। न हि पित्तप्रशमार्थिनो वैद्येन मधुरं शीतं च भोक्तव्यमित्युपदिष्टे तयोरन्यतरत्पित्तप्रशमनकारणं ब्रूहीति प्रश्नो भवति।

---

(b) The statement of the Lord also distinguishes between the two

(c) Authority of the Sruti

II Arjuna's Queries also go against *jñānakarmasamuccaya* :—

(a) Arjuna's query in Bha Gi III. 1 takes granted the superiority of Renunciation to Action

(b) Arjuna's query in Bha Gi V. 1 shows that the two are not to be combined.

2 तत्र केचिदाहुः-सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठामात्रादेव केवलात्कैवल्यं न प्राप्यत एव, किं तर्ह्यग्निहोत्रादिश्रौतस्मार्तकर्मसहिताज्ज्ञानात्कैवल्यप्राप्तिरिति सर्वासु गीतासु निश्चितोऽर्थ इति।

(a) ज्ञापकं चाहुरस्यार्थस्य-'अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि' (II. 33) 'कर्मण्येवाधिकारस्ते' (II. 47) 'कुरु कर्मैव तस्मात्त्वम्' (IV. 15) इत्यादि।

(b) हिंसादियुक्तत्वाद्वैदिकं कर्माधर्मायेतीयमप्याशङ्का न कार्या, कथं, क्षात्रं कर्म युद्धलक्षणं गुरुभ्रातृपुत्रादिहिंसालक्षणमत्यन्तक्रूरमपि स्वधर्म इति कृत्वा नाधर्माय, तदकरणे च 'ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि' (II 33) इति ब्रुवता यावज्जीवादिश्रुतिचोदितानां पश्वादिहिंसालक्षणानां च कर्मणां प्रागेव नाधर्मत्वमिति सुनिश्चितमुक्तं भवतीति।

3 तदसत्,

I ज्ञानकर्मनिष्ठयोर्विभागवचनाद्बुद्धिद्वयाश्रययोः।

(a) अशोच्यानित्यादिना (II. 11) भगवता यावत् 'स्वधर्ममपि चावेक्ष्य' (II, 31) इत्येतदन्तेन ग्रन्थेन यत्परमार्थात्मतत्त्वनिरूपणं कृतं तत्सांख्यं तद्विषया बुद्धिरात्मनो जन्मादिषड्विक्रियाभावादकर्तात्मेति प्रकरणार्थनिरूपणाद्या जायते सा सांख्यबुद्धिः सा येषां ज्ञानिनामुचिता भवति ते सांख्याः। एतस्या बुद्धेर्जन्मनः प्रागात्मनो देहादिव्यतिरिक्तत्वकर्तृत्वभोक्तृत्वाद्यपेक्षो धर्माधर्मविवेकपूर्वको मोक्षसाधनानुष्ठाननिरूपणलक्षणो योगः, तद्विषया बुद्धिर्योगबुद्धिः। सा येषां *कर्मिणामुचिता भवति ते योगिनः।*

---

2 A Predecessor of Śankara : Combination of Jñāna and certain Karmans is the means to Moksa

Its evidence :—

(a) Gitā.

(b) Vaidika actions as a help

3 Śankara's Refutation.

I The two standpoints of Jnāna and Karman are mentioned in the Gitā *as applicable to two distinct cases (vibhāga)*:—

(a) The Samkhya and Yoga : The latter *precedes* the former

(b) तथा च भगवता विभक्ते द्वे बुद्धी निर्दिष्टे—'एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु' (II 39) इति। तयोश्च साङ्ख्यबुद्ध्याश्रया ज्ञानयोगेन निष्ठा साङ्ख्यानां विभक्तां वक्ष्यति—'पुरा वेदात्मना मया प्रोक्ता' (III 3) इति। तथा च योगबुद्ध्याश्रया कर्मयोगेन निष्ठा विभक्ता वक्ष्यति—'कर्मयोगेन योगिनाम्' (III 3) इति। एवं साङ्ख्यबुद्धिं योगबुद्धिं चाश्रित्य द्वे निष्ठे विभक्ते *भगवतैवोक्ते ज्ञानकर्मणो कर्तृत्वाकर्तृत्वैकत्वानेकत्वबुद्ध्याश्रययोरेकपुरुषाश्रयत्वासंभवं पश्यता।*

(c) यथैतद्विभागवचनं तथैव दर्शितं शातपथीये ब्राह्मणे—'एतमेव प्रव्राजिनो लोकमिच्छन्तो ब्राह्मणाः प्रव्रजन्ति' इति सर्वकर्मसन्यासं विधाय तच्छेषेण—'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' (Br Upa IV 4 22) इति। तत्रैव च—"प्रागदारपरिग्रहात्पुरुष आत्मा प्राकृतो धर्मजिज्ञासोत्तरकालं लोकत्रयसाधनं पुत्रं द्विप्रकारं च वित्तं मानुषं दैवं च, तत्र मानुषं वित्तं कर्मरूपं पितृलोकप्राप्तिसाधनं, विद्यां च, दैवं वित्तं देवलोकप्राप्तिसाधनं सोऽकामयत" *इत्यविद्याकामवत एव सर्वाणि कर्माणि श्रौतादीनि दर्शितानि।* 'तेभ्यो व्युत्थाय प्रव्रजन्ति" इति व्युत्थानमात्मानमेव लोकमिच्छतोऽकामस्य विहितम्। तदेतद्विभागवचनमनुपपन्नं स्याद्यदि श्रौतकर्मज्ञानयोः समुच्चयोऽभिप्रेतः स्याद्भगवतः।

II (a) न चार्जुनस्य प्रश्न उपपन्नो भवति 'ज्यायसी चेत्कर्मणस्ते' (III 1) इत्यादि। एकपुरुषानुष्ठेयत्वासंभवं बुद्धिकर्मणोर्भगवता पूर्वमनुक्तं कथमर्जुनोऽश्रुतं बुद्धेश्च कर्मणो ज्यायस्त्वं भगवत्यध्यारोपयेन्मृषैव ज्यायसी चेत्कर्मणस्ते मता बुद्धिरिति (III 1)।

(b) किं च यदि बुद्धिकर्मणोः सर्वेषां समुच्चय उक्तः स्यादर्जुनस्यापि स उक्त एवेति—'यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम्' (V 1) इति कथमन्यतरविषय एव प्रश्नः स्यात्। न हि पित्तप्रशमार्थिनो वैद्येन मधुरं शीतं च भोक्तव्यमित्युपदिष्टे तयोरन्यतरत्पित्तप्रशमनकारणं ब्रूहीति प्रश्नो भवति।

---

(b) The statement of the Lord also distinguishes between the two

*(c) Authority of the Sruti*

II Arjuna's Queries also go against *jñānakarma-samuccaya* —

(a) Arjuna's query in Bha Gi III. 1 takes granted the superiority of Renunciation to Action

(b) Arjuna's query in Bha Gi V 1 shows that the two are not to be combined.

(c) अथार्जुनस्य भगवदुक्तवचनार्थविवेकानवधारणनिमित्तः प्रश्नः कल्प्येत, तथापि भगवता प्रश्नानुरूपं प्रतिवचनं देयं, मया बुद्धिकर्मणोः समुच्चय उक्तः किमर्थमित्थं त्वं भ्रान्तोऽसीति । न तु पुनः प्रतिवचनमननुरूपं पृष्टादन्यदेव द्वे निष्ठे मया पुरा प्रोक्ते ( III. 3 ) इति वक्तुं युक्तम् ।

(*d*) नापि स्मार्तेनैव कर्मणा बुद्धेः समुच्चयेऽभिप्रेते विभागवचनादि सर्वमुपपन्नम् ।

किञ्च क्षत्रियस्य युद्धं स्मार्तं कर्म स्वधर्म इति जानतस्तत्किं **कर्मणि घोरे** मां नियोजयसि ( *III.* 1 ) इत्युपालम्भोऽनुपपन्नस्तस्मादीताशास्त्र ईषन्मात्रेणापि श्रौतेन स्मार्तेन वा कर्मणात्मज्ञानस्य समुच्चयो न केनचिद् दर्शयितुं शक्यः ।

III. ( a ) यस्य त्वज्ञानाद्रागादिदोषतो वा कर्मणि प्रवृत्तस्य यज्ञेन दानेन तपसा वा विशुद्धसत्त्वस्य ज्ञानमुत्पन्नं परमार्थतत्त्वविषयमेकमेवेदं सर्वं ब्रह्माकर्तृ चेति, तस्य कर्मणि कर्मप्रयोजने च निवृत्तेऽपि **लोकसंग्रहार्थं यत्नपूर्वं यथा प्रवृत्तस्तथैव कर्मणि प्रवृत्तस्य यत्प्रवृत्तिरूपं दृश्यते न तत्कर्म येन बुद्धेः समुच्चयः स्यात् ।**

(b) यथा भगवतो वासुदेवस्य क्षात्रकर्मचेष्टितं न **ज्ञानेन समुच्चीयते** पुरुषार्थसिद्धये तद्वत्तत्फलाभिसंध्यहंकाराभावस्य तुल्यत्वाद्विदुषः । तत्त्ववित्तु नाहं करोमीति मन्यते न च तत्फलमभिसंधत्ते ।

(c) यथा च स्वर्गादिकामार्थिनोऽग्निहोत्रादिकामसाधनानुष्ठानायाहिताग्नेः काम्य एवाग्निहोत्रादौ प्रवृत्तस्य सामि कृते विनष्टेऽपि कामे तदेवाग्निहोत्राद्यनुतिष्ठतोऽपि न तत्काम्यमग्निहोत्रादि भवति ।

---

( c ) The Lord's answer ( in Bha. Gi. III. 3 ) also says that *two* standpoints have been described by Him in the second Adhyāya.

( d ) Bha. Gi. III. 1 shows that in Yoga the Śrauta *karmāni* also are to be performed. And this finally proves that the Renunciation of the Gitā is not combined with the *smārta karmani* at all.

III The Actions done by a Brahmajñānin are no help to him in the achievement of his goal:—

( a ) Such actions are only semblance of actions.

( b ) Such actions are like the Ksatriya's duties done by Krṣṇa.

( c ) They are like the niskāma agnihotra rite.

(d) तथा च दर्शयति भगवान् 'कुर्वन्नपि' (V 7) 'न करोति न लिप्यते' (XIII. 31) इति तत्र तत्र ।

IV यच्च 'पूर्वैः पूर्वतरं कृतम्' (IV. 15) कर्मणैव हि संसिद्धिमास्थिता जनकादयः' (III. 20) इति तत्तु प्रविभज्य विज्ञेयम् ।

(a) तत्कथम्, यदि तावत्पूर्वे जनकादयस्तत्त्वविदोऽपि प्रवृत्तकर्माणः स्युस्ते लोकसंग्रहार्थं 'गुणा गुणेषु वर्तन्त (III. 28) इति ज्ञानेनैव संसिद्धिमास्थिताः, कर्मसंन्यासे प्राप्तेऽपि कर्मणा सहैव संसिद्धिमास्थिता न कर्मसंन्यासं कृतवन्त इत्यर्थः । अथ न ते तत्त्वविदः, ईश्वरसमर्पितेन कर्मणा साधनभूतेन संसिद्धिं सत्त्वशुद्धिं ज्ञानोत्पत्तिलक्षणां वा संसिद्धिमास्थिता जनकादय इति व्याख्येयम् ।

(b) एतमेवार्थं वक्ष्यति भगवान्सत्त्वशुद्धये कर्म कुर्वन्तीति (Cf V. 11)। 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' (XVIII. 46) इत्युक्त्वा सिद्धिं प्राप्तस्य च पुनर्ज्ञाननिष्ठां वक्ष्यति 'सिद्धिं प्राप्तो यथा ब्रह्म' (XVIII 50) इत्यादिना ।

**तस्माद्गीतासु केवलादेव तत्त्वज्ञानान्मोक्षप्राप्तिर्न कर्मसमुच्चितादिति निश्चितोऽर्थः** । यथा चायमर्थस्तथा प्रकरणशो विभज्य तत्र तत्र दर्शयिष्यामः ।

तत्रैवं धर्मसंमूढचेतसो महति शोकसागरे निमग्नस्यार्जुनस्यान्यत्रात्मज्ञानादुद्धरणमपश्यन्भगवान्वासुदेवस्ततोऽर्जुनमुद्दिधारयिषुरात्मज्ञानायावतारयन्नाह—

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥**

अशोच्यानित्यादि । न शोच्या अशोच्या भीष्मद्रोणादयः सद्वृत्तत्वात्परमार्थरूपेण च नित्यत्वात्, तानशोच्यानन्वशोचोऽनुशोचितवानसि ते म्रियन्ते मन्निमित्तमहं तैर्विनाभूतः किं करिष्यामि राज्यसुखादिनेति । त्वं प्रज्ञावतां बुद्धिमतां वादांश्च वचनानि च भाषसे । तदेतन्मौढ्यं पाण्डित्यं च विरुद्धमात्मनि दर्शयस्युन्मत्त इवेत्यभिप्रायः । यस्माद्गतासून्गतप्राणान्मृतानगतासूनगतप्राणाञ्जीवतश्च नानुशोचन्ति पण्डिता आत्मज्ञाः पण्डात्मविषया बुद्धिर्येषां ते हि पण्डिताः 'पाण्डित्यं निर्विद्य'

---

(d) Bha Gi. IV. 20, 41; V. 7–10, etc. support this view.

IV A double Interpretation of verses like Bha Gi IV. 15, III. 20—

(a) If Janaka was a Brahmajñānin and if he was not a Brahmajñānin.

(b) Texts in support of this Interpretation

(Br Upa III 5 1) इति श्रुते' । परमार्थतस्तु नित्यानशोच्यानतुशोचस्यतो मूढोऽसीत्यभिप्राय' ॥ ११ ॥

कुतस्तेऽशोच्या । यतो नित्या । कथम्—

**न त्वेवाहं जातु नाऽऽसं न त्वं नेमे जनाधिपाः ।**
**न चैव न भविष्यामः सर्वे वयमतः परम् ॥ १२ ॥**

न त्वेव जातु कदाचिदह नास किं त्वासमेवातीतेषु देहोत्पत्तिविनाशेषु नित्य एवाहमासमित्यभिप्राय । तथा न त्व नासी' किं त्वासीरेव । तथा नेमे जनाधिपा नासन् किंत्वासन्नेव । तथा न चैव न भविष्याम', किं तु भविष्याम एव सर्वे वयम"तोऽ"स्माद्देहविनाशात्परमुत्तरकालेऽपि त्रिष्वपि कालेषु नित्या आत्मस्वरूपेणेत्यर्थ । **देहभेदानुवृत्त्या बहुवचनं नात्मभेदाभिप्रायेण ॥ १२ ॥**

तत्र कथमिव नित्य आत्मेति दृष्टान्तमाह—

**देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥**

देहिन इति । देहोऽस्यास्तीति देही तस्य देहिनो देहवदात्मनोऽस्मिन्वर्तमाने देहे यथा येन प्रकारेण कौमार कुमारभावो बाल्यावस्था यौवन यूनो भावो मध्यमावस्था जरा वयोहानिर्जीर्णावस्थेत्येतास्तिस्रोऽवस्था अन्योन्यविलक्षणास्तासां प्रथमावस्थानाशे न नाशो (आत्मनः) द्वितीयावस्थोपजनने नोपजननमात्मन. किं तर्ह्यविक्रियस्यैव द्वितीयतृतीयावस्थाप्राप्तिरात्मनो दृष्टा यथा तथा तद्वदेव देहादन्यो [देहो] देहान्तर तस्य प्राप्तिर्देहान्तरप्राप्तिरविक्रियस्यैवात्मन इत्यर्थ । धीरो धीमांस्तत्रैव सति न मुह्यति न मोहमापद्यते ॥ १३ ॥

यद्यप्यात्मविनाशनिमित्तो मोहो न सभवति नित्य आत्मेति विजानतस्तथापि शीतोष्णसुखदु खप्राप्तिनिमित्तो मोहो लौकिको दृश्यते सुखवियोगनिमित्तो दु खसयोगनिमित्तश्च शोक इत्येतदर्जुनस्य वचनमाशङ्क्याह—

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।**
**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥**

मात्रास्पर्शा इति । "मात्रा" आभिर्मीयन्ते शब्दादय इति श्रोत्रादीनीन्द्रियाणि, मात्राणां "स्पर्शा" शब्दादिभि संयोगास्ते शीतोष्णसुखदु खदाः शीतमुष्ण सुख दु ख च प्रयच्छन्तीति । अथवा स्पृश्यन्त इति स्पर्शा विषयाः शब्दादय', मात्राश्च स्पर्शाश्च शीतोष्णसुखदु खदाः शीतं कदाचित्सुख कदाचिद्दु ख, तथोष्णमप्यनियतरूप, सुखदु खे पुनर्नियतरूपे यतो न व्यभिचरतोऽतस्ताभ्या पृथक्शीतोष्णयोर्ग्रहणम् । यस्मात्ते मात्रास्पर्शादय आगमापायिन आगमापायशीलास्तस्मादनित्या अतस्तान्शीतोष्णादीन्तितिक्षस्व प्रसहस्व तेषु हर्षं विषादं च मा कार्षीरित्यर्थ ॥ १४ ॥

शीतोष्णादीन्सहतः किं स्यादिति शृणु—

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥

यं हीति । यं हि पुरुषं समदुःखसुखं समे दुःखसुखे यस्य तं समदुःखसुखं सुखदुःखप्राप्तौ हर्षविषादरहितं धीरं धीमन्तं न व्यथयन्ति न चालयन्ति नित्यात्मदर्शनादेते यथोक्ताः शीतोष्णादयः स नित्यात्मदर्शननिष्ठो द्वंद्वसहिष्णुरमृतत्वायामृतभावाय मोक्षाय कल्पते समर्थो भवति ॥ १५ ॥

इतश्च शोकमोहावकृत्वा शीतोष्णादिसहनं युक्तं यस्मात्—

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥

नासत इति । 1 नासतोऽविद्यमानस्य शीतोष्णादेः सकारणस्य न विद्यते नास्ति भावो भवनमस्तिता । न हि शीतोष्णादि सकारणं प्रमाणैर्निरूप्यमाणं वस्तु संभवति । विकारो हि सः । विकारश्च व्यभिचरति, यथा घटादिसंस्थानं चक्षुषा निरूप्यमाणं मृद्व्यतिरेकेणानुपलब्धेरसत्तथा सर्वो विकारः कारणव्यतिरेकेणानुपलब्धेरसन् । जन्मप्रध्वंसाभ्यां प्रागूर्ध्वं चानुपलब्धेः । मृदादिकारणस्य च तत्कारणव्यतिरेकेणानुपलब्धेरसत्त्वम् ।

( a ) तदसत्त्वे च सर्वाभावप्रसङ्ग इति चेत् । न, सर्वत्र बुद्धिद्वयोपलब्धेः सद्बुद्धिरसद्बुद्धिरिति । यद्विषया बुद्धिर्न व्यभिचरति तत्सत्, यद्विषया बुद्धिर्व्यभिचरति तदसदिति सदसद्विभागे बुद्धितन्त्रे स्थिते, सर्वत्र द्वे बुद्धी सर्वैरुपलभ्येते समानाधिकरणेन * नीलोत्पलवत्, सन्घटः सन्पटः सन्हस्तीति । एवं सर्वत्र । तयोर्बुद्ध्योर्घटादिबुद्धिर्व्यभिचरति । तथा च दर्शितम् । न तु सद्बुद्धिः तस्माद्घटादिबुद्धिविषयोऽसन्व्यभिचारात्, न तु सद्बुद्धिविषयोऽव्यभिचारात् ।

---

1 The non-existence of the Cause viz, मृदादि the Earth, etc. Objections answered:—

(a) Denial of the Earth, etc; does not mean the denial of all (because it does not affect the *existence of sat or Atman or Being*). Or, 'Being' being the only reality exists even when we deny the existence of the Earth the cause of घट.

घटादिबुद्धिविषयः=मृत्तिका, तन्तु, etc. (?)
सद्बुद्धिविषयः=आत्मन् only (?)

---

* POS and ASS read समानाधिकरणे न for समानाधिकरणेन ।

(b) घटे विनष्टे घटबुद्धौ व्यभिचरन्त्या सद्बुद्धिरपि व्यभिचरतीति चेत् । न, पटादावपि सद्बुद्धिदर्शनात् ।

(c) विशेषणविषयैव सा सद्बुद्धिः, सद्बुद्धिवद्घटबुद्धिरपि घटान्तरे दृश्यत इति चेत् । न, पटादावदर्शनात् ।

(d) सद्बुद्धिरपि नष्टे घटे न दृश्यत इति चेत् । न, विशेष्याभावात् । सद्बुद्धिर्विशेषणविषया सती विशेष्याभावे विशेषणानुपपत्तौ किंविषया स्यात्, न तु पुनः सद्बुद्धेर्विषयाभावात् ।

(e) एकाधिकरणत्वं घटादिविशेष्याभावे न युक्तमिति चेत् । न, इदमुदकमिति मरीच्यादावन्यतराभावेऽपि सामानाधिकरण्यदर्शनात् ।

तस्माद्देहादेर्द्वंद्वस्य च सकारणस्यासतो न विद्यते भाव इति ।

II तथा सतश्चात्मनोऽभावोऽविद्यमानता न विद्यते सर्वत्राव्यभिचारादित्यवोचाम । एवमात्मानात्मनोः सदसतोरुभयोरपि दृष्ट उपलब्धोऽन्तो निर्णयः सत्सदेवासदसदेवेति त्वनयोर्यथोक्तयोस्तत्त्वदर्शिभिः । तदिति सर्वनाम सर्वं च ब्रह्म तस्य नाम तदिति तद्भावस्तत्त्वं ब्रह्मणो याथात्म्यं तद्द्रष्टुं शीलं येषां ते तत्त्वदर्शिनस्तैस्तत्त्वदर्शिभिः । त्वमपि तत्त्वदर्शिनां दृष्टिमाश्रित्य शोकं मोहं च हित्वा शीतोष्णादीनि नियतानियतरूपाणि द्वंद्वानि विकारोऽयमसन्नेव मरीचिजलवन्मिथ्यावभासत इति मनसि निश्चित्य तितिक्षस्वेत्यभिप्रायः ॥ १६ ॥

किं पुनस्तद्यत्सदेव सर्वदैवास्तीति उच्यते—

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७ ॥

अविनाशीति । अविनाशि न विनष्टुं शीलमस्येति । तुशब्दोऽसतो विशेषणार्थः ।

---

(b) Even after the jar is destroyed, 'Being' exists, e. g., in 'The piece of cloth is.'

(c) The notion of a घट is not found in the place where we have a पट. (पट, घट, etc are the विशेषणs.)

(d) Even when one घट is destroyed, the notion of Being will exist because it will refer to another substratum.

(e) The notion of Being will exist even when the घट is destroyed, just as the notion of इदम् will exist even when the notion of उदक in a *mirage* is a non-entity.

II Interpretation of the second and subsequent Pādas of the verse

तद्विद्धि विजानीहि । किं, येन सर्वमिदं जगत्ततं व्याप्तं सदाख्येन ब्रह्मण साकाशमाकाशेनेव घटादयः । विनाशमदर्शनमभावमव्ययस्य न क्वेति, उपचयापचयौ न यातीत्यव्ययं तस्याव्ययस्य । नैतत्सदाख्यं ब्रह्म स्वेन रूपेण व्येति व्यभिचरति निरवयवत्वाद्देहादिवत् । नाप्यात्मीयेनात्मीयाभावाद्यथा देवदत्तो धनहान्या व्येति न त्वेवं ब्रह्म व्येत्यतोऽव्ययस्यास्य ब्रह्मणो विनाशं न कश्चित्कर्तुमर्हति न कश्चिदात्मानं विनाशयितुं शक्नोतीश्वरोऽपि । आत्मा हि ब्रह्म । स्वात्मनि च क्रियाविरोधात् ॥ १७ ॥

किं पुनस्तदसद्यत्स्वात्मसत्तां व्यभिचरतीति । उच्यते—

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥

अन्तवन्त इति ।

( a ) अन्तवन्तोऽन्तो विनाशो विद्यते येषां तेऽन्तवन्तो यथा मृगतृष्णिकोदकादौ सद्बुद्धिरनुवृत्ता प्रमाणनिरूपणान्ते विच्छिद्यते स तस्या अन्तस्तथेमे देहाः स्वप्नमायादेहादिवच्चान्तवन्तः ।

( b ) नित्यस्य शरीरिणः शरीरवतोऽनाशिनोऽप्रमेयस्यात्मनोऽन्तवन्त इत्युक्ता विवेकिभिरित्यर्थः । नित्यस्यानाशिन इति न पुनरुक्तं नित्यत्वस्य द्विविधत्वाल्लोके नाशस्य च । यथा देहो भस्मीभूतोऽदर्शनं गतो नष्ट उच्यते विद्यमानोऽप्यन्यथापरिणतो व्याध्यादियुक्तो जातो नष्ट उच्यते । तत्रानाशिनो नित्यस्येति द्विविधेनापि नाशेनासंबन्धोऽस्येत्यर्थः । अन्यथा पृथिव्यादिवदपि नित्यत्वं स्यादात्मनस्तन्मा भूदिति नित्यस्यानाशिन इत्याह ।

( c ) अप्रमेयस्य न प्रमेयस्य प्रत्यक्षादिप्रमाणैरपरिच्छेद्यस्येत्यर्थः ।

( i ) नन्वागमेनात्मा परिच्छिद्यते *प्रत्यक्षादिना चेति चेद्, न पूर्वमात्मनः स्वतः सिद्धत्वात् । । सिद्धे ह्यात्मनि प्रमातरि प्रमित्सोः प्रमाणान्वेषणा भवति । न

(a) Meaning of *anta* 'end': 'End' is also illusory.
(b) Meaning of *nitya* and अनाशिन्: Eternal and Changeless.
(c) Proof of Atman.
 (i) Atman is self-evident.

* *ASS* reads प्रत्यक्षादिना न पूर्वम् । न, आत्मनः । स्वतः सिद्धत्वात् ।, and gives as v. l. our reading.

* POA-प्रत्यक्षादिना च पूर्वम् । न, आत्मनः स्वतः सिद्धत्वात् ।

हि पूर्वमित्थमहमित्यात्मानमप्रमाय पश्चात्प्रमेयपरिच्छेदाय प्रवर्तते। न ह्यात्मा नाम कस्यचिदप्रसिद्धो भवति ।

( ii ) शास्त्रं त्वन्त्यं प्रमाणमतद्धर्माध्यारोपणमात्रनिवर्तकत्वेन *प्रमाणत्वमात्मनि प्रतिपद्यते न त्वज्ञातार्थज्ञापकत्वेन । तथा च श्रुतिः—"यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" ( Br Upa III 4 1 ) इति

( d ) यस्मादेव नित्योऽविक्रियश्चात्मा तस्माद्युध्यस्व युद्धादुपरमं मा कार्षीरित्यर्थः । न ह्यत्र युद्धकर्तव्यता विधीयते । युद्धे प्रवृत्त एव ह्यसौ शोकमोहप्रतिबद्धस्तूष्णीमास्ते तस्य कर्तव्यप्रतिबन्धापनयनमात्रं भगवता क्रियते । तस्माद्युध्यस्वेत्यनुवादमात्रं न विधिः ॥ १८ ॥

शोकमोहादिसंसारकारणनिवृत्त्यर्थं गीताशास्त्रं न प्रवर्तकमित्येतस्यार्थस्य साक्षिभूते ऋचावानिनाय भगवान् । यत्तु मन्यसे युद्धे भीष्मादयो मया हन्यन्तेऽहमेव तेषां हन्तेत्येषा बुद्धिर्मृषैव ते । कथम्-

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥

य एनमिति । य एनं प्रकृतं देहिनं वेत्ति जानाति हन्तारं हननक्रियायाः कर्तारं, यश्चैनमन्यो मन्यते हतं देहहननेन× हतोऽहमिति हननक्रियायाः कर्मभूतं, तावुभौ न विजानीतो न ज्ञातवन्तावविवेकेनात्मानमहंप्रत्ययविषयम् । हन्ताहं हतोऽस्म्यहमिति देहहननेनात्मानमहंप्रत्ययविषयं यौ विजानीतस्तावात्मस्वरूपानभिज्ञावित्यर्थः । यस्मान्नायमात्मा हन्ति न हननक्रियायाः कर्ता भवति, न हन्यते न च कर्म भवतीत्यर्थः, अविक्रियत्वात् ॥ १९ ॥

कथमविक्रिय आत्मेति द्वितीयो मन्त्रः—

न जायते म्रियते वा कदाचिन्नायं भूत्वा(ऽ)भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥२०॥

न जायते नोत्पद्यते जनिलक्षणा वस्तुविक्रिया नात्मनो विद्यत इत्यर्थः । न म्रियते वा । वाशब्दश्चार्थे । न म्रियते चेत्यन्त्या विनाशलक्षणा विक्रिया प्रतिषिध्यते । कदाचिच्छब्दः सर्वविक्रियाप्रतिषेधैः सम्बध्यते न कदाचिज्जायते न कदाचिन्म्रियत इत्येवम् । यस्मादयमात्मा भूत्वा भवनक्रियामनुभूय पश्चादभवि-

(ii) The Scripture's function.

(d) Conclusion. The purpose of (d) is to show that the Gitā does not favour प्रवृत्ति or action.

* POA-प्रामाण्यम् for प्रमाणत्वम्

× POA-देहहननेन

ताभाव गत्वा न भूय पुनस्तस्मान्न म्रियते । यो हि भूत्वा न भविता स म्रियत इत्युच्यते लोके । वाशब्दान्नशब्दाच्चायमाभाऽभूत्वा भविता वा* देहवन्न भूय पुनस्तस्मान्न जायते। यो ह्यभूत्वा भविता स जायत इत्युच्यते नैवमात्मातो न जायते। यस्मादेव तस्मादजो यस्मान्न म्रियते तस्मान्नित्यश्च ।

यद्यप्याद्यन्तयोर्विक्रिययो प्रतिषेधे सर्वा विक्रिया प्रतिषिद्धा भवन्ति तथापि मध्यभाविनीना विक्रियाणा स्वशब्दैरेव तन्र्थै प्रतिषेध कर्तव्य इत्यनुक्तानामपि यौवनादिसमस्तविक्रियाणा प्रतिषेधो यथा स्यादित्याह शाश्वत इत्यादिना । शाश्वत इत्य पक्षयलक्षणा विक्रिया प्रतिषिध्यते शश्वद्भव शाश्वत । नापक्षीयते स्वरूपेण निरवय वत्वात्, निर्गुणत्वाच्च नापि गुणक्षयेणापक्षय । अपक्षयविपरीतापि वृद्धिलक्षणा विक्रिया प्रतिषिध्यते पुराण इति । यो ह्यवयवागमेनोपचीयते स वर्धतेऽभिनव इति चोच्यते । अय त्वात्मा निरवयवत्वात्पुरापि नव एवेति पुराणो न वर्धत इत्यर्थ । तथा न हन्यते न विपरिणम्यते हन्यमाने विपरिणम्यमानेऽपि शरीरे । हन्तिरत्र विपरिणामार्थो द्रष्टव्योऽपुनरुक्ततायै न विपरिणम्य इत्यर्थ । **अस्मिन्मन्त्रे पड्भावविकारा लौकिकवस्तुविक्रिया आत्मनि प्रतिषिध्यन्ते ।** सर्वप्रकारविक्रियारहित आत्मेति वाक्यार्थ । यस्मादेव तस्मादुभौ तौ न विजानीत इति पूर्वेण मन्त्रेणास्य सबन्ध ॥ २० ॥

I य एन वेत्ति हन्तारमित्यनेन मन्त्रेण हननक्रियाया कर्ता कर्म च न भवतीति प्रतिज्ञाय ' न जायते ' इत्यनेनाविक्रियत्वे हेतुमुक्त्वा प्रतिज्ञार्थमुपसहरति—

वेदाविनाशिन नित्य य एनमजमव्ययम् ।
कथ स पुरुष पार्थ क घातयति हन्ति कम् ॥ २१ ॥

वेदाविनाशिनमिति । वेद विजानाति अविनाशिनमन्त्यभावविकाररहित नित्य विपरिणामरहित यो वेदेति सबन्ध । एन **पूर्वेण मन्त्रेणो**क्तलक्षणमज जन्मरहितमव्ययम पक्षयरहित कथ केन प्रकारेण स विद्वान्पुरुषोऽधिकृतो हन्ति हननक्रिया करोति । कथ वा घातयति हन्तार प्रयोजयति । न कथचित्कचिद्धन्ति न कथचित्कचिद्घातयतीत्युभयत्राक्षेप एवार्थ प्रश्नार्थासभवात् । **हेत्वर्थस्य तुल्यत्वाद्विदुष सर्वकर्मप्रतिषेध एव प्रकरणार्थोऽभिप्रेतो भगवत । हन्तेस्त्वाक्षेप उदाहरणार्थत्वेन ।**

II ( a ) विदुष कर्मासभवे हेतुविशेष पश्यन्कर्माण्याक्षिपति भगवान्कथ स पुरुष इति ।

---

I The soul is above all change Therefore he does no action The wise one should renounce all actions The verse teaches Renunciation of *all actions*

II (a) The attributes of the soul stated in the verse show that the soul ( the wise sage ) is *no agent* (अकर्तृ )

* *POA*-अभूत्वा वा भविता *for* अभूत्वा भविता वा ।

ननूक्त एवात्मनोऽविक्रियत्व सर्वकर्मासंभवकारणविशेष,

( b ) सत्यमुक्तो न तु स कारणविशेषोऽन्यत्वाद्विदुषोऽविक्रियादात्मन इति । न ह्यविक्रिय स्थाणु विदितवत कर्म न समवतीति चेत्, न । विदुष आत्मत्वात् । न देहादिसंघातस्य विद्वत्ता । अतः पारिशेष्यादसंहत आत्मा विद्वानविक्रिय इति तस्य विदुष कर्मासंभवादाक्षेपो युक्तः कथ स पुरुष इति ।

(c) यथा बुद्ध्याद्याहृतस्य शब्दाद्यर्थस्याविक्रिय एव सन्बुद्धिवृत्त्यविवेकविज्ञानेनाविद्ययोपलब्धात्मा कल्प्यते, एवमेवात्मानात्मविवेकज्ञानेन बुद्धिवृत्त्या विद्ययासत्यरूपयैव परमार्थतोऽविक्रिय एवात्मा विद्वानुच्यते ।

III विदुषः कर्मासंभववचनाद्यानि *कर्माणि शास्त्रेण विधीयन्ते* तान्यविदुषो विहितानीति भगवतो निश्चयोऽवगम्यते ।

(a) ननु विद्याऽप्यविदुष एव विधीयते विदितविद्यस्य पिष्टपेषणवद्विद्याविधानानर्थक्यात् । तत्राविदुष कर्माणि विधीयन्ते न विदुष इति विशेषो नोपपद्यते । न, अनुष्ठेयस्य भावाभावविशेषोपपत्ते । अग्निहोत्रादिविध्यर्थज्ञानोत्तरकालमग्निहोत्रादिकर्मानेकसाधनोपसंहारपूर्वकमनुष्ठेय कर्ताह मम कर्तव्यमित्येवप्रकारविज्ञानवतोऽविदुषो यथानुष्ठेय भवति न तु तथा न जायत इत्याद्यात्मस्वरूपविध्यर्थज्ञानोत्तरकालभावि किंचिदनुष्ठेय भवति । किंतु नाह कर्ता न भोक्तेत्याद्यात्मैकत्वाकर्तृत्वादिविषयज्ञानादन्यन्नोत्पद्यत इत्येष विशेष उपपद्यते । यः पुनः कर्ताऽहमिति वेत्त्यात्मान तस्य ममेद कर्तव्यमित्यवश्यभाविनी बुद्धिः स्यात्तदपेक्षया सोऽधिक्रियत इति त प्रति कर्माणि । स चाविद्वान्—' उभौ तौ न विजानीतः ' इति वचनात् । विशेषितस्य च विदुषः कर्माक्षेपवचनात्कथ स पुरुष इति । **तस्माद्विशेषितस्याविक्रियात्मदर्शिनो विदुषो मुमुक्षोश्च सर्वकर्मसंन्यास एवाधिकारः ।**

---

(b) The verse does not mean that the Sâmkhyayogin knows all individual souls (जीवात्मन्s) as imperishable, eternal, etc. etc.; but it means that the sage knows his own self as the Atman who is imperishable, eternal, etc

(c) The act of 'becoming wise' is also unreal. The soul really does no act

III From the verse we should conclude that all duties laid down by the Scripture are for the Ignorant.

(a) The Scripture distinguishes between (i) those who know that they have duties to perform and (ii) those who know that their soul is *no agent*

(b) अत एव भगवान्नारायण सांख्यान्विदुषोऽविदुषश्च कर्मिण प्रविभज्य द्वे निष्ठे ग्राहयति—'ज्ञानयोगेन सांख्याना कर्मयोगेन योगिनाम्' इति।

(c) तथा च पुत्रायाह भगवान्व्यास —'द्वाविमावथ पन्थानौ' इत्यादि।

*तथा च क्रियापथश्चैव पुरस्तात्पश्चात्सन्यासश्चेति। एतमेव विभाग पुन पुनर्दर्शयिष्यति भगवान्। अतत्त्वविदहकारविमूढात्मा कर्ताहमिति मन्यते, तत्त्ववित्तु नाह करोमीति। तथा च सर्वकर्माणि मनसा सन्यस्यास्ते इत्यादि।*

**IV तत्र केचित्पण्डितमन्या वदन्ति** जन्मादिषड्भावविक्रियारहितोऽविक्रियोऽकर्तैकोऽहमात्मेति न कस्यचिज्ज्ञानमुत्पद्यते यस्मिन्सति सर्वकर्मसन्यास उपदिश्यते। न, न जायत इत्यादिशास्त्रोपदेशानर्थक्यात्। यथा च शास्त्रोपदेशसामर्थ्याद्धर्मास्तित्व विज्ञान कर्तुश्च देहान्तरसबन्धिज्ञान चोत्पद्यते, तथा शास्त्रात्तस्यैवात्मनोऽविक्रियत्वाकर्तृत्वैकत्वादिविज्ञान कस्मान्नोत्पद्यत इति प्रष्टव्यास्ते।

(a) करणागोचरत्वादिति चेन्न, मनसैवानुद्रष्टव्यमिति श्रुते। शास्त्राचार्योपदेशशमदमादिसस्कृत मन आत्मदर्शने करणम्। तथा च तदधिगमायानुमान आगमे च सति ज्ञान नोत्पद्यत इति साहसमेतत्।

*(b) ज्ञान चोत्पद्यमान तद्विपरीतमज्ञानमवश्य बाधत इत्यभ्युपगन्तव्यम्। तच्चाज्ञान दर्शित हन्ताऽह हतोऽस्मीत्युभौ तौ न विजानीत इति। अत्र चात्मनो हननक्रियाया कर्तृत्व कर्मत्व हेतुकर्तृत्व चाज्ञानकृत दर्शितम्। तच्च सर्वक्रियास्वपि समान कर्तृत्वादेरविद्याकृतत्वमविक्रियत्वादात्मन। विक्रियावान्हि कर्तारमन्य कर्मभूतमन्य प्रयोजयति कुर्विति।*

---

(b) The साख्यनिष्ठा and the योगनिष्ठा of the Gita are respectively for the Sage and the Ignorant

(c) The same were taught by Vyāsa to his son

IV It should not be argued that none knows the nature of the Atman or that none knows that he is the अकर्तृ Atman

(a) Though Atman is not perceptible *to senses* (प्रत्यक्ष गोचर), he can be mentally realized with *the help of* Inference and the Scripture

(b) This Realization of Atman consists of the idea that 'I am no agent of the act of killing' or, in other words, 'I am no agent of any act whatsoever' (*killing* represents all actions)

(c) तदेतदविशेषेण विदुष सर्वक्रियासु कर्तृत्व हेतुकर्तृत्व च प्रतिषेधति भगवान्विदुष कर्माधिकाराभावप्रदर्शनार्थं वेदाविनाशिन कथ स पुरुष इत्यादिना । क पुनर्विदुषोऽधिकार इत्येतदुक्त पूर्वमेव ज्ञानयोगेन साख्यानामिति ॥ **तथा च सर्वकर्मसन्यास वक्ष्यति सर्वकर्माणि मनसेत्यादिना ।**

V (a) ननु मनसेति वचनान्न वाचिकाना कायिकाना च सन्यास इति चेन्न, सर्वकर्माणाति विशेषितत्वात् । मानसानामेव सर्वकर्माणामिति चेन्न, **मनोव्यापार पूर्वकत्वाद्वाक्कायव्यापाराणा मनोव्यापाराभावे तदनुपपत्ते ।**

(b) शास्त्रीयाणा वाक्कायकर्मणा कारणानि मानसानि वर्जयित्वान्यानि **सर्वकर्माणि मनसा सन्न्यसेदिति चेन्न, नैव कुर्वन्न कारयन्निति विशेषणात् ।**

(c) सर्वकर्मसन्यासोऽय भगवतोक्तो मरिष्यतो न जीवत इति चेन्न, नवद्वारे पुरे देहास्त इतिविशेषणानुपपत्ते । न हि सर्वकर्मसन्यासेन मृतस्य तद्देह आसन सभवति । अकुर्वतोऽकारयतश्च देहे सन्यस्यैति सबन्धो न देह आस्त इति चेन्न, सर्वत्रात्मनोऽविक्रियत्वावधारणात् । आसनक्रियायाश्चाधिकरणापेक्षत्वाच्च सन्यासस्य । सपूर्वस्तु न्यासशब्दस्त्यागार्थो न निक्षेपार्थ । **तस्माद्गीताशास्त्र आत्मज्ञानवत सन्यास एवाधिकारो न कर्मणीति तत्र तत्रोपरिष्टादात्मज्ञानप्रकरणे दर्शयिष्याम ॥ २१ ॥**

प्रकृत तु वक्ष्याम, तत्राऽत्मनोऽविनाशित्व प्रतिज्ञात तत्किमिवेत्युच्यते–

**वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ॥**
**तथा शरीराणि विहाय जीर्णान्यन्यानि सयाति नवानि देही ॥ २२ ॥**

---

(c) This knowledge will make him give up all actions

V Renunciation of all duties is the religious duty of the wise sage This is the sense of Bha. Gi. V 13

(a) Interpretation of सर्व in सर्वकर्माणि-Bha Gi. V 13 " सर्व " means mental, vocal and physical actions

(b) ' सर्व ' also means all, i. e , both the Scriptural and the worldly ( शास्त्रीय and लौकिक ) actions. नैव कुर्वन् etc. refers to both these types of actions.

(c) This Renunciation of all Actions is meant for the wise immediately on his attainment of wisdom ( आत्मज्ञान ) not when he is about to die

वासांसीति । वासांसि वस्त्राणि जीर्णानि दुर्बलतां गतानि यथा लोके विहाय परित्यज्य नवान्यभिनवानि गृह्णात्युपादत्ते नरः पुरुषोऽपराण्यन्यानि तथा तद्वदेव शरीराणि विहाय जीर्णान्यन्यानि संयाति संगच्छति नवानि देही आत्मा पुरुषवदविक्रिय एवेत्यर्थः ॥ २२ ॥

कस्मादविक्रिय एवेति । आह–

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३ ॥

नैनं छिन्दन्तीति । एनं प्रकृतं देहिनं न छिन्दन्ति शस्त्राणि निरवयवत्वात् अवयवविभागं कुर्वन्ति शस्त्राण्यस्यादीनि । तथा नैनं दहति पावकोऽग्निरपि न भस्मीकरोति । तथा नैनं क्लेदयन्त्यापः । अपां हि सावयवस्य वस्तुन आर्द्रीभावकरणेनावयवविश्लेषापादने सामर्थ्यं तन्न निरवयव आत्मनि संभवति । तथा स्नेहवद्द्रव्यं स्नेहशोषणेन नाशयति वायुरेनं स्वात्मानं न शोषयति मारुतोऽपि ॥२३॥

यत एव तस्मात्—

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥

अच्छेद्योऽयमिति । यस्मादन्योन्यनाशहेतूनि भूतान्येनमात्मानं नाशयितुं नोत्सहन्ते तस्मान्नित्यो नित्यत्वात्सर्वगतः सर्वगतत्वात्स्थाणुः स्थाणुरिव स्थिर इत्येतत् । स्थिरत्वादचलोऽयमात्माऽतः सनातनश्चिरन्तनो न कारणात्कुतश्चिन्निष्पन्नोऽभिनव इत्यर्थः । नैतेषां श्लोकानां पौनरुक्त्यं चोदनीयम् । यत एकेनैव श्लोकेनात्मनो नित्यत्वमविक्रियत्वं चोक्तं 'जायते म्रियते वा' इत्यादिना । तत्र यदेवात्मविषयं किञ्चिदुच्यते तदेतस्माच्छ्लोकार्थान्नातिरिच्यते किञ्चिच्छब्दतः पुनरुक्तं किञ्चिदर्थत इति । दुर्बोधत्वादात्मवस्तुनः पुनः पुनः प्रसङ्गमापाद्य शब्दान्तरेण तदेव वस्तु निरूपयति भगवान्वासुदेवः कथं नु नाम संसारिणामव्यक्तं तत्त्वं बुद्धिगोचरतामापन्नं सत्संसारनिवृत्तये स्यादिति ॥ २४॥

किंच—

*अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।*
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥

अव्यक्तोऽयमिति । **अव्यक्तः सर्वकरणाविषयत्वान्न** व्यज्यत इत्यव्यक्तोऽयमात्मा । अत एवाचिन्त्योऽयम् । यद्धीन्द्रियगोचरं वस्तु तच्चिन्ताविषयत्वमापद्यते अयं त्वात्माऽनिन्द्रियगोचरत्वादचिन्त्यः । अविकार्योऽयम् । यथा क्षीरं दध्यातञ्चनादिना विकारि न तथाऽयमात्मा । निरवयवत्वाच्चाविक्रियः । न हि निरवयवं किञ्चिद्विक्रियात्मकं दृष्टम् । अविक्रियत्वादविकार्योऽयमात्मोच्यते । तस्मादेवं

यथोक्तप्रकारेणैनमात्मानं विदित्वा त्वं नानुशोचितुमर्हसि हन्ताऽहमेषां मयेमे हन्यन्त इति ॥ २५ ॥

आत्मनोऽनित्यत्वमभ्युपगम्येदमुच्यते—

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथाऽपि त्वं महाबाहो नैवं शोचितुमर्हसि ॥ २६ ॥

अथ चैनमिति । अथ चेत्यभ्युपगमार्थः । एनं प्रकृतमात्मानं नित्यजातं लोकप्रसिद्ध्या प्रत्यनेकशरीरोत्पत्ति जातो जात इति मन्यसे । तथा प्रतितद्विनाशं नित्यं वा मन्यसे मृतं मृतो मृत इति । तथापि तथाभावित्यप्यात्मनि त्वं महाबाहो नैवं शोचितुमर्हसि जन्मवतो नाशवतो नाशश्चेत्येतावदवश्यंभाविनाविति ॥ २६ ॥

तथा च सति—

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ॥
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥

जातस्येति । जातस्य हि लब्धजन्मनो ध्रुवोऽव्यभिचारी मृत्युर्मरणं ध्रुवं जन्म मृतस्य च तस्मादपरिहार्योऽयं जन्ममरणलक्षणोऽर्थस्तस्मिन्नपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥

कार्यकरणसंघातात्मकान्यपि भूतान्युद्दिश्य शोको न युक्तः कर्तुं यतः—

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ॥
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥

अव्यक्तादीनीति । अव्यक्तादीन्यव्यक्तमदर्शनमनुपलब्धिरादिर्येषां भूतानां पुत्रमित्रादिकार्यकरणसंघातात्मकानां तान्यव्यक्तादीनि भूतानि प्रागुत्पत्तेः । उत्पन्नानि च प्राङ्मरणाद्व्यक्तमध्यानि । अव्यक्तनिधनान्येव पुनरव्यक्तमदर्शनं निधनं मरणं येषां तान्यव्यक्तनिधनानि । मरणादूर्ध्वमप्यव्यक्ततामेव प्रतिपद्यन्त इत्यर्थः । तथा चोक्तम्—

अदर्शनादापतितः पुनश्चादर्शनं गतः ।
नासौ तव न तस्य त्वं वृथा का परिदेवना ॥ इति । (MBh. XI. 2.13) तत्र का परिदेवना को वा प्रलापोऽदृष्टदृष्टप्रनष्टभ्रान्तिभूतेषु भूतेष्वित्यर्थः ॥ २८ ॥

दुर्विज्ञेयोऽयं प्रकृत आत्मा किं त्वामेवैकमुपालभे साधारणे भ्रान्तिनिमित्ते । कथं दुर्विज्ञेयोऽयमात्मेति । आह—

आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥ २९ ॥

आश्चर्यवदिति । आश्चर्यवदाश्चर्यमदृष्टमद्भुतमकस्माद्दृश्यमान तेन तुल्यमाश्चर्यवदाश्चर्यमिवैनमात्मान पश्यति कश्चित् । आश्चर्यवदेन वदति तथैव चान्य । आश्चर्यवच्चैनमन्य· शृणोति । श्रुत्वा दृष्ट्वोक्त्वाऽप्येनं वेद न चैव कश्चित् ॥ अथवा योऽयमात्मान पश्यति स आश्चर्यतुल्यो यो वदति यश्च शृणोति सोऽनेकसहस्रेषु कश्चिदेव भवति ॥ अतो दुर्बोध आत्मेत्यभिप्रायः ॥२९॥

अथेदानीं प्रकरणार्थमुपसंहरन्नाह—

**देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।**
**तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥**

देहीति ॥ सर्वस्य प्राणिजातस्य देहे वध्यमानेऽप्ययं देही न वध्यो यस्मात्तस्माद्भीष्मादीनि सर्वाणि भूतान्युद्दिश्य न त्वं शोचितुमर्हसि ॥ ३० ॥

इह परमार्थतत्त्वापेक्षाया शोको मोहो वा न संभवतीत्युक्त, न केवल परमात्मतत्त्वापेक्षायामेव किं तु—

**स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥ ३१ ॥**

स्वधर्ममिति । स्वधर्ममपि स्वो धर्मः क्षत्रियस्य युद्ध तमप्यवेक्ष्य त्वं न विकम्पितु प्रचलितु नार्हसि स्वाभाविकाद्धर्मादात्मस्वाभाव्यादित्यभिप्राय । तच्च युद्ध पृथिवीजयद्वारेण धर्मार्थं प्रजारक्षणार्थं चेति धर्मादनपेत परं धर्म्यं तस्माद्धर्म्याद्युद्धाच्छ्रेयो ऽन्यत्क्षत्रियस्य न विद्यते हि यस्मात् ॥ ३१ ॥

कुतश्च तद्युद्ध कर्तव्यमिति । उच्यते—

**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।**
**सुखिन· क्षत्रिया पार्थ लभन्ते युद्धमीदृशम् ॥ ३२ ॥**

यदृच्छयेति । यदृच्छया चाप्रार्थितयोपपन्नमागत स्वर्गद्वारमपावृतमुद्घाटितं ये तदीदृश युद्ध लभन्ते क्षत्रिया हे पार्थ किं न सुखिनस्ते ॥ ३२ ॥

एव कर्तव्यताप्राप्तमपि—

**अथ चेत्त्वमिमं धर्म्यं संग्राम न करिष्यसि ।**
**तत· स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥**

अथ चेत्त्वमिमं धर्म्यं धर्मादनपेत संग्राम युद्ध न करिष्यसि चेत्ततस्तदकरणात्स्वधर्मं कीर्तिं च महादेवादिसमागमनिमित्तां हित्वा केवल पापमवाप्स्यसि ॥ ३३ ॥

न केवल स्वधर्मकीर्तिपरित्याग—

**अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।**
**संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥**

अकीर्तिं चापि भूतानि कथयिष्यन्ति ते तवाव्यया दीर्घकालाम् । धर्मात्मा शूर इत्येवमादिभिर्गुणैः संभावितस्य चाकीर्तिर्मरणादतिरिच्यते । संभावितस्य चाकीर्तेर्वरं मरणमित्यर्थः ॥ ३४ ॥

किंच—

**भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।**
**येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५ ॥**

भयादिति । भयात्कर्णादिभ्यो रणाद्युद्धादुपरतं निवृत्तं मंस्यन्ते चिन्तयिष्यन्ति न कृपयेति त्वां महारथा दुर्योधनप्रभृतयः । येषां च त्वं दुर्योधनादीनां बहुमतो बहुभिर्गुणैर्युक्त इत्येवं बहुमतो भूत्वा पुनर्यास्यसि लाघवं लघुभावम् ॥ ३५ ॥

किंच—

**अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।**
**निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥**

अवाच्यवादानिति । अवाच्यवादानवक्तव्यवादांश्च बहूननेकप्रकारान्वदिष्यन्ति तवाहिताः शत्रवो निन्दन्तः कुत्सयन्तस्तव त्वदीयं सामर्थ्यं निवातकवचादियुद्धनिमित्तम् । तस्मात्ततो निन्दाप्राप्तेर्दुःखाद्दुःखतरं नु किम् । ततः कष्टतरं दुःखं नास्तीत्यर्थः ॥ ३६ ॥

युद्धे पुनः क्रियमाणे कर्णादिभिः—

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥**

हतो वेति । हतो वा प्राप्स्यसि स्वर्गं हतः सन्स्वर्गं प्राप्स्यसि जित्वा वा कर्णादीञ्शूरान्भोक्ष्यसे महीम् । उभयथाऽपि तव लाभ एवेत्यभिप्रायः । यत एव तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयो जेष्यामि शत्रून्मरिष्यामि वेति निश्चयं कृत्वेत्यर्थः ॥ ३७ ॥

तत्र युद्धं स्वधर्म इत्येवं युध्यमानस्योपदेशमिमं शृणु—

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥**

सुखदुःखे इति । सुखदुःखे समे तुल्ये कृत्वा रागद्वेषावकृत्वेत्येतत् । तथा

लाभालाभौ जयाजयौ च समौ कृत्वा ततो युद्धाय युज्यस्व घटस्व । नैवं युद्धं कुर्वन्पापमवाप्स्यसीत्यपि उपदेशः प्रासङ्गिकः ॥ ३८ ॥

शोकमोहापनयनाय लौकिको न्यायः स्वधर्ममपि चावेक्ष्येत्याद्यैः श्लोकैरुक्तो न तु तात्पर्येण । परमार्थदर्शनं त्विह प्रकृतं तच्चोक्तमुपसंहियते एषा तेऽभिहितेति शास्त्रविषयविभागप्रदर्शनाय । इह हि दर्शिते पुनः शास्त्रविषयविभागे उपरिष्टाज्ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनामिति निष्ठाद्वयविषयं शास्त्रं सुखं प्रवर्तिष्यते श्रोतारश्च विषयविभागेन सुखं ग्रहीष्यन्तीत्यत आह—

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९ ॥

एषा त इति । एषा ते तुभ्यमभिहितोक्ता सांख्ये परमार्थवस्तुविवेकविषये बुद्धिर्ज्ञानं साक्षाच्छोकमोहादिसंसारहेतुदोषनिवृत्तिकारणम् । योगे तु तत्प्राप्त्युपाये निःसङ्गतया द्वंद्वप्रहाणपूर्वकमीश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने समाधियोगे चेमामनन्तरमेवोच्यमानां बुद्धिं शृणु । तां बुद्धिं स्तौति प्ररोचनार्थं बुद्ध्या यया योगविषयया युक्तो हे पार्थ कर्मबन्धं कर्मैव धर्माधर्माख्यो बन्धः कर्मबन्धस्तं प्रहास्यसीश्वरप्रसादनिमित्तज्ञानप्राप्तेरित्यभिप्रायः ॥ ३९ ॥

किंचान्यत्—

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥

नेहाभीति । नेह मोक्षमार्गे कर्मयोगेऽभिक्रमनाशोऽभिक्रमणमभिक्रमः प्रारम्भस्तस्य नाशो नास्ति । यथा कृष्यादेर्योगविषये प्रारम्भस्य नानैकान्तिकफलत्वमित्यर्थः । किंच नापि चिकित्सावत्प्रत्यवायो विद्यते । किंतु* स्वल्पमप्यस्य योगधर्मस्यानुष्ठितं त्रायते रक्षति महतः संसारभयाज्जन्ममरणादिलक्षणात् ॥ ४० ॥

येयं सांख्ये बुद्धिरुक्ता योगे च वक्ष्यमाणलक्षणा सा—

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥

व्यवसायेति । व्यवसायात्मिका निश्चयस्वभावैकैव बुद्धिरितरविपरीतबुद्धिशाखाभेदस्य बाधिका सम्यक्प्रमाणजनितत्वादिह श्रेयोमार्गे हे कुरुनन्दन । या पुनरितरा बुद्धयो यासां शाखाभेदप्रचारवशादनन्तोऽपारोऽनुपरतः संसारो नित्यप्रततो

* ASS reads किं तु भवति and gives as v l किं ते भवति ॥ किं तु स्वल्प We have adopted किंन्तु स्वल्पम्

विस्तीर्णा भवति, प्रमाणजनितविवेकबुद्धिनिमित्तवशाच्चोपरतास्वनन्तभेदबुद्धिषु संसारोऽप्युपरमते। ता बुद्धयो बहुशाखा बह्व्यः शाखा यासां ता बहुशाखा बहुभेदा इत्येतत्। प्रतिशाखाभेदेन ह्यनन्ताश्च बुद्धयः केषामव्यवसायिनां प्रमाणजनितविवेकबुद्धिरहितानामित्यर्थः ॥ ४१ ॥

येषां व्यवसायात्मिका बुद्धिर्नास्ति ते—

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीतिवादिनः ॥ ४२ ॥

यामिति। यामिमां वक्ष्यमाणां पुष्पितां पुष्पितवृक्ष इव शोभमानां श्रूयमाणरमणीयां वाचं वाक्यलक्षणां प्रवदन्ति। केऽविपश्चितोऽल्पमेधसोऽविवेकिन इत्यर्थः। वेदवादरता बह्वर्थवादफलसाधनप्रकाशकेषु वेदवाक्येषु रता हे पार्थ नान्यत्स्वर्गप्राप्त्यादिफलसाधनेभ्यः कर्मभ्योऽस्तीत्येवंवादिनो वदनशीलाः ॥ ४२ ॥

ते च—

कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥

कामात्मान इति। कामात्मानः कामस्वभावाः कामपरा इत्यर्थः। स्वर्गपराः स्वर्गः परः पुरुषार्थो येषां ते स्वर्गपराः स्वर्गप्रधाना जन्मकर्मफलप्रदां कर्मणः फलं कर्मफलं जन्मैव कर्मफलं जन्मकर्मफलं तत्प्रददातीति जन्मकर्मफलप्रदा तां वाचं प्रवदन्तीत्यनुषज्यते। क्रियाविशेषबहुलां क्रियाणां विशेषाः क्रियाविशेषास्ते बहुला यस्यां वाचि तां स्वर्गपशुपुत्राद्यर्था यया वाचा बाहुल्येन प्रकाश्यन्ते। भोगैश्वर्यगतिं प्रति भोगश्चैश्वर्यं च भोगैश्वर्ये तयोर्गतिः प्राप्तिर्भोगैश्वर्यगतिस्तां प्रति साधनभूता ये क्रियाविशेषास्तद्बहुलां तां वाचं प्रवदन्तो मूढाः संसारे परिवर्तन्त इत्यभिप्रायः ॥ ४३ ॥

तेषां च—

भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥

भोगेति। भोगैश्वर्यप्रसक्तानां भोगः कर्तव्यमैश्वर्यं चेति भोगैश्वर्ययोरेव प्रणयवतां तदात्मभूतानां तया क्रियाविशेषबहुलया वाचाऽपहृतचेतसामाच्छादितविवेकप्रज्ञानां व्यवसायात्मिका सांख्ये योगे वा बुद्धिः समाधौ समाधीयतेऽस्मिन्पुरुषोपभोगाय सर्वमिति समाधिरन्तःकरणं बुद्धिस्तस्मिन्समाधौ न विधीयते न भवतीत्यर्थः ॥ ४४ ॥

य एवं विवेकबुद्धिरहितास्तेषां कामात्मनाम्—

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वंद्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥

त्रैगुण्येति । त्रैगुण्यविषयास्त्रैगुण्यं संसारो विषयः प्रकाशयितव्यो येषा ते वेदा- स्त्रैगुण्यविषयास्त्वं तु निस्त्रैगुण्यो भवार्जुन निष्कामो भवेत्यर्थः । निर्द्वंद्वः सुखदुःखहेतू सप्रतिपक्षौ* पदार्थौ द्वंद्वशब्दवाच्यौ ततो निर्गतो निर्द्वंद्वो भव । त्वं नित्यसत्त्वस्थः सदा सत्त्वगुणाश्रितो भव । तथा निर्योगक्षेमोऽनुपात्तस्योपादानं योगः उपात्तस्य रक्षणं क्षेमः, योगक्षेमप्रधानस्य श्रेयसि प्रवृत्तिर्दुष्करेत्यतो निर्योगक्षेमो भव । आत्मवान- प्रमत्तश्च भव । एष तवोपदेशः स्वधर्ममनुतिष्ठतः ॥ ४५ ॥

सर्वेषु वेदोक्तेषु कर्मसु यान्यनन्तानि फलानि तानि नापेक्ष्यन्ते चेत्किमर्थं तानीश्वरायेत्यनुष्ठीयन्त इति, उच्यते शृणु—

यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥

यावानिति । यथा लोके कूपतडागाद्यनेकस्मिन्नुदपाने परिच्छिन्नोदके यावान्या- वत्परिमाणः स्नानपानादिरर्थः फलं प्रयोजनं स सर्वोऽर्थः सर्वतः संप्लुतोदके तावा- नेव संपद्यते तत्रान्तर्भवतीत्यर्थः । एवं तावास्तावत्परिमाण एव संपद्यते सर्वेषु वेदेषु वेदोक्तेषु कर्मसु योऽर्थो यत्कर्मफलं×। सोऽर्थो ब्राह्मणस्य संन्यासिनः पर- मार्थतत्त्वं विजानतो योऽर्थो विज्ञानफलं सर्वतः संप्लुतोदकस्थानीयं तस्मिंस्ता- वानेव संपद्यते तत्रैवान्तर्भवतीत्यर्थः । 'सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेदेति' श्रुतेः ( Cha Upa. IV. 1.4 ) । 'सर्वं कर्माखिलम्' इति च ( Bha. Gi. IV, 33 ) वक्ष्यति ॥ तस्मात्प्राग्ज्ञाननिष्ठाधिकारप्राप्तेः कर्मण्यधिकृतेन कूपतडागाद्यर्थस्थानीयमपि कर्म कर्तव्यम् ॥ ४६ ॥

तव च—

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७ ॥

कर्मणीति । कर्मण्येवाधिकारो न ज्ञाननिष्ठायां ते तव । तत्र च कर्म कुर्वतो मा फलेष्वधिकारोऽस्तु कर्मफलतृष्णा मा भूत्कदाचन कस्यांचिदप्यवस्थाया- मित्यर्थः । यदा कर्मफले तृष्णा ते स्यात्तदा कर्मफलप्राप्तेर्हेतुः स्याः, एवं मा कर्म- फलहेतुर्भूः । यदा हि कर्मफलतृष्णाप्रयुक्तः कर्मणि प्रवर्तते तदा कर्मफलस्यैव जन्मनो हेतुर्भवेत् । यदि कर्मफलं नेष्यते किं कर्मणा दुःखरूपेणेति मा ते तव सङ्गोऽ- स्त्वकर्मण्यकरणे प्रीतिर्मा भूत् ॥ ४७ ॥

यदि कर्मफलप्रयुक्तेन न कर्तव्यं कर्म कथं तर्हि कर्तव्यमित्युच्यते—

* POA reads सप्रतिपक्षौ.

× POA does not put a दंड after कर्मफलम् ।

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८ ॥

योगस्थ इति । योगस्थ सन्कुरु कर्माणि केवलमीश्वरार्थं तत्रापीश्वरो मे तुष्यत्विति सङ्गं त्यक्त्वा धनंजय । फलतृष्णाशून्येन क्रियमाणे कर्मणि सत्त्वशुद्धिजा ज्ञानप्राप्तिलक्षणा सिद्धिस्तद्विपर्ययजासिद्धिस्तयोः सिद्ध्यसिद्ध्योरपि समस्तुल्यो भूत्वा कुरु कर्माणि । कोऽसौ योगो यत्रस्थ कुर्वित्युक्तमिदमेव तत्सिद्ध्यसिद्ध्योः समत्वं योग उच्यते ॥ ४८ ॥

यत्पुनः समत्वबुद्धियुक्तमीश्वराराधनार्थं कर्मैतस्मात्कर्मणः—

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥

दूरेणेति । दूरेणातिविप्रकर्षेण ह्यवरं निकृष्टं कर्म फलार्थिना क्रियमाणं बुद्धियोगात्समत्वबुद्धियुक्तात्कर्मणो जन्ममरणादिहेतुत्वाद्धनंजय । यत एव ततः* योगविषयायां बुद्धौ तत्परिपाकजायां वा सांख्यबुद्धौ शरणमाश्रयमभयप्राप्तिकारणमन्विच्छ प्रार्थयस्व परमार्थज्ञानशरणो भवेत्यर्थः । यतोऽवरं कर्म कुर्वाणाः कृपणा दीनाः फलहेतवः फलतृष्णाप्रयुक्ताः सन्तः "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः" इति श्रुतेः (Br Upa. III. 8 10) ॥ ४९ ॥

समत्वबुद्धियुक्तः सन्स्वधर्ममनुतिष्ठन्यत्फलं प्राप्नोति तच्छृणु—

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५० ॥

बुद्धीति । बुद्धियुक्तः समत्वविषयया बुद्ध्या युक्तो बुद्धियुक्तो जहाति परित्यजतीहास्मिँल्लोक उभे सुकृतदुष्कृते पुण्यपापे सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण यतस्तस्मात् समत्वबुद्धियोगाय युज्यस्व घटस्व । योगो हि कर्मसु कौशलं स्वधर्माख्येषु कर्मसु वर्तमानस्य या सिद्ध्यसिद्ध्योः समत्वबुद्धिरीश्वरार्पितचेतस्तया तत्कौशलं कुशलभावः । तद्धि कौशलं यद्बन्धस्वभावान्यपि कर्माणि समत्वबुद्ध्या स्वभावान्निवर्तन्ते । तस्मात्समत्वबुद्धियुक्तो भव त्वम् ॥ ५० ॥

यस्मात्—

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥

* ASS drops तत ।

कर्मजमिति । कर्मजं फलं त्यक्त्वेति व्यवहितेन संबन्धः । इष्टानिष्टदेहप्राप्तिः कर्मजं फलं कर्मभ्यो जातं बुद्धियुक्ताः समत्वबुद्धियुक्ता हि यस्मात्फलं त्यक्त्वा परित्यज्य मनीषिणो ज्ञानिनो भूत्वा जन्मबन्धविनिर्मुक्ताः जन्मैव बन्धो जन्मबन्धस्तेन विनिर्मुक्ता जीवन्त एव जन्मबन्धविनिर्मुक्ताः सन्तः पदं परमं विष्णोर्मोक्षाख्यं गच्छन्त्यनामयं सर्वोपद्रवरहितमित्यर्थः । अथवा बुद्धियोगाद्धनंजयेत्यारभ्य परमार्थदर्शनलक्षणैव सर्वतः संप्लुतोदकस्थानीया कर्मयोगजसत्त्वशुद्धिजनिता बुद्धिर्दर्शिता साक्षात्सुकृतदुष्कृतप्रहाणादिहेतुत्वश्रवणात् ॥ ५१ ॥

योगानुष्ठानजनितसत्त्वशुद्धिजा बुद्धिः कदा प्राप्यत इत्युच्यते—

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥

यदेति । यदा यस्मिन्काले ते तव मोहकलिलं मोहात्मकमविवेकरूपं कालुष्यं येनात्मानात्मविवेकबोधं कलुषीकृत्य विषयं प्रत्यन्तःकरणं प्रवर्तते तत्तव बुद्धिर्व्यतितरिष्यति व्यतिक्रमिष्यति शुद्धिभावमापत्स्यत इत्यर्थः । तदा तस्मिन्काले गन्तासि प्राप्स्यसि निर्वेदं वैराग्यं श्रोतव्यस्य श्रुतस्य च तदा श्रोतव्यं श्रुतं च निष्फलं प्रतिभाति इत्यभिप्रायः ॥ ५२ ॥

मोहकलिलात्ययद्वारेण लब्धात्मविवेकजप्रज्ञः कदा कर्मयोगजं फलं परमार्थयोगमवाप्स्यामीति चेत्तच्छृणु—

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥

श्रुतिविप्रतिपन्नेति । श्रुतिविप्रतिपन्नानेकसाध्यसाधनसंबन्धप्रकाशनश्रुतिभिः श्रवणैर्विप्रतिपन्ना नानाप्रतिपन्ना श्रुतिविप्रतिपन्ना विक्षिप्ता सती ते तव बुद्धिर्यदा यस्मिन्काले स्थास्यति स्थिरीभूता भविष्यति निश्चला विक्षेपचलनवर्जिता सती समाधौ समाधीयते चित्तमस्मिन्निति समाधिरात्मा तस्मिन्नात्मनीत्येतत् । अचला तत्रापि विकल्पवर्जितेत्येतत् ॥ बुद्धिरन्तःकरणं तदा तस्मिन्काले योगमवाप्स्यसि विवेकप्रज्ञां समाधिं प्राप्स्यसि ॥ ५३ ॥

प्रश्नबीजं प्रतिलभ्यार्जुन उवाच लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया—

अर्जुन उवाच—

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४ ॥

स्थितप्रज्ञस्येति । स्थिता प्रतिष्ठिताहमस्मि परं ब्रह्मेति प्रज्ञा यस्य स स्थित

प्रज्ञस्य का भाषा किं भाषणं वचनं कथमसौ परैर्भाष्यते समाधिस्थस्य समाधौ स्थितस्य केशव। स्थितधीः स्थितप्रज्ञः स्वयं वा किं प्रभाषेत। किमासीत व्रजेत किम्। आसनं व्रजनं वा तस्य कथमित्यर्थः। स्थितप्रज्ञस्य लक्षणमनेन श्लोकेन पृच्छति ॥५४॥

यो ह्यादित एव संन्यस्य कर्माणि ज्ञानयोगनिष्ठायां प्रवृत्तो यश्च कर्मयोगेन तयोः *स्थितप्रज्ञस्य* +*प्रजहातीत्यारभ्याध्यायपरिसमाप्तिपर्यन्तं स्थितप्रज्ञलक्षणं साधनं* चोपदिश्यते। सर्वत्रैव ह्यध्यात्मशास्त्रे कृतार्थलक्षणानि यानि तान्येव साधनान्युपदिश्यन्ते यत्नसाध्यत्वात्। यानि यत्नसाध्यानि साधनानि लक्षणानि च भवन्ति तानि–

## श्रीभगवानुवाच—

प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।
आत्मन्येवाऽऽत्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥

प्रजहातीति। प्रजहाति प्रकर्षेण जहाति परित्यजति यदा यस्मिन्काले सर्वान्समस्तान्कामानिच्छाभेदान् हे पार्थ मनोगतान्मनसि प्रविष्टान्हृदि प्रविष्टान्। सर्वकामपरित्यागे तुष्टिकारणाभावाच्छरीरधारणनिमित्तशेषे च सत्युन्मत्तप्रमत्तस्येव प्रवृत्तिः प्राप्तेत्यत उच्यते—आत्मन्येव प्रत्यगात्मस्वरूप एवात्मना स्वेनैव बाह्यलाभनिरपेक्षस्तुष्टः परमार्थदर्शनामृतरसलाभेनान्यस्मादलंप्रत्ययवान्स्थितप्रज्ञः※ स्थिता प्रतिष्ठितात्मानात्मविवेकजा प्रज्ञा यस्य स स्थितप्रज्ञो विद्वांस्तदोच्यते *त्यक्तपुत्रवित्तलोकैषणः संन्यास्यात्माराम आत्मक्रीड. स्थितप्रज्ञ इत्यर्थः* ॥ ५५ ॥

किं च—

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥

दुःखेष्विति। दुःखेष्वाध्यात्मिकादिषु प्राप्तेषु नोद्विग्नं न प्रक्षुभितं दुःखप्राप्तौ मनो यस्य सोऽयमनुद्विग्नमनाः। तथा सुखेषु प्राप्तेषु विगता स्पृहा तृष्णा यस्य नाग्निरिवेन्धनाद्याधाने सुखान्यनु विवर्धते स विगतस्पृहः। वीतरागभयक्रोधो रागश्च भयं च क्रोधश्च वीता विगता यस्मात्स वीतरागभयक्रोधः स्थितधीः स्थितप्रज्ञो मुनिः संन्यासी तदोच्यते ॥ ५६ ॥

किं च—

---

+ POA and VVP drop स्थितप्रज्ञस्य.

※ ASS, PGA, VVP read अन्यस्मात्, but to us the correct reading seems to be अनन्यस्मात्.

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥

य' सर्वत्रेति। यो मुनिः सर्वत्र देहजीवितादिष्वप्यनभिस्नेहोऽभिस्नेहवर्जित-स्तत्तत्प्राप्य शुभाशुभ तत्तच्छुभमशुभ वा लब्ध्वा नाभिनन्दति न द्वेष्टि शुभ प्राप्य न तुष्यति न हृष्यत्यशुभ च प्राप्य न द्वेष्टीत्यर्थ । तस्यैव हर्षविषादवर्जितस्य प्रज्ञा विवेकजा प्रज्ञा प्रतिष्ठिता भवति ॥ ५७ ॥

किं च—

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥

यदा संहरत इति। यदा संहरते सम्यगुपसंहरते चायं ज्ञाननिष्ठायां प्रवृत्तो यति कूर्मोऽङ्गानीव सर्वशो यथा कूर्मो भयात्स्वान्यङ्गान्युपसंहरति सर्वत एव ज्ञान-निष्ठ इन्द्रियाणीन्द्रियार्थेभ्यः सर्वविषयेभ्य उपसंहरते। तस्य प्रज्ञा प्रतिष्ठितेत्युक्तार्थं वाक्यम् ॥ ५८ ॥

तत्र विषयाननाहरत आतुरस्यापीन्द्रियाणि निवर्तन्ते कूर्माङ्गाणीव संह्रियन्ते× नतु तद्विषयो राग', स कथ संह्रियत इति। उच्यते—

विषया विनिवर्तन्ते निराहारस्य देहिन' ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥

विषया इति। यद्यपि विषयोपलक्षितानि (विषयशब्दवाच्यानीन्द्रियाण्यथवा विषया एव निराहारस्यानाह्रियमाणविषयस्य कष्टे तपसि स्थितस्य मूर्खस्यापि विनिवर्तन्ते देहिनो देहवतो, रसवर्जं रसो रागो विषयेषु यस्त वर्जयित्वा । रसशब्दो रागे प्रसिद्ध स्वरसेन प्रवृत्तो रसिको रसज्ञ इत्यादिदर्शनात् । सोऽपि रसो रञ्जनरूप. सूक्ष्मोऽस्य यतेः पर परमार्थतत्त्व ब्रह्म दृष्ट्वोपलभ्य "अहमेव तदिति वर्तमानस्य" निवर्तते निर्बीज विषयविज्ञान संपद्यत इत्यर्थ. । नासति सम्यग्दर्शने रसस्यो-च्छेद । तस्मात्सम्यग्दर्शनात्मिकाया प्रज्ञाया स्थैर्यं कर्तव्यमित्यभिप्राय ॥५९॥

सम्यग्दर्शनलक्षणप्रज्ञास्थैर्यं चिकीर्षतादाविन्द्रियाणि स्ववशे स्थापयितव्यानि यस्मात्तदनवस्थापने दोषमाह—

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६० ॥

× VVP-इन्द्रियाणि कूर्माङ्गानीव संह्रियन्ते
POA-इन्द्रियाणि [ निवर्तन्ते कूर्माङ्गाणीव ] संह्रियन्ते We follow ASS

यतत इति । यतत: प्रयत्नं कुर्वतोऽपि हि यस्मात्कौन्तेय पुरुषस्य विपश्चितो मेधाविनोऽपीति व्यवहितेन संबन्ध । इन्द्रियाणि प्रमाथीनि प्रमथनशीलानि विषयाभिमुख हि पुरुष विक्षोभयन्त्याकुलीकुर्वन्ति । आकुलीकृत्य च हरन्ति प्रसभं प्रसह्य प्रकाशमेव पश्यतो विवेकविज्ञानयुक्तं* मन: ॥ ६० ॥

यतस्तस्मात्—

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥

तानीति । तानि सर्वाणि संयम्य संयमनं वशीकरण कृत्वा युक्त: समाहित: सन्नासीत । मत्परोऽहं वासुदेव सर्वप्रत्यगात्मा परो यस्य स मत्परो नान्योऽहं तस्मादित्यासीतेत्यर्थ । एवमासीनस्य यतेर्वशे हि यस्येन्द्रियाणि वर्तन्तेऽभ्यासबला त्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥

अथेदानीं पराभविष्यत: सर्वानर्थमूलमिदमुच्यते—

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्संजायते काम. कामात्क्रोधोऽभिजायते ॥ ६२ ॥

ध्यायत इति । ध्यायतश्चिन्तयतो विषयाञ्छब्दादिविषयविशेषानालोचयत पुंस पुरुषस्य सङ्ग आसक्ति प्रीतिस्तेषु विषयेषूपजायते सङ्गात्प्रीते संजायते समुत्पद्यते कामस्तृष्णा । कामात्कुतश्चित्प्रतिहतात्क्रोधोऽभिजायते ॥ ६२ ॥

क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६३ ॥

क्रोधाद्भवति संमोहोऽविवेक कार्याकार्यविषयः । क्रुद्धो हि संमूढ सन्गुरुमप्याक्रोशति । संमोहात्स्मृतिविभ्रम शास्त्राचार्योपदेशाहितसंस्कारजनिताया स्मृते: स्याद्विभ्रमो भ्रंश: स्मृत्युत्पत्तिनिमित्तप्राप्तावनुत्पत्ति: । तत स्मृतिभ्रंशाद्बुद्धेर्नाश: । कार्याकार्यविषयविवेकायोग्यताऽन्त:करणस्य बुद्धेर्नाश उच्यते । बुद्धिनाशात्प्रणश्यति । तावदेव हि पुरुषो यावदन्त:करणं तदीयं कार्याकार्यविषयविवेकयोग्यं तदयोग्यत्वे नष्ट एव पुरुषो भवत्यतस्तस्यान्त:करणस्य बुद्धेर्नाशात्प्रणश्यति पुरुषार्थायोग्यो भवतीत्यर्थ ॥ ६३ ॥

सर्वानर्थस्य मूलमुक्त विषयाभिध्यानम् । अथेदानीं मोक्षकारणमिदमुच्यते—

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
/ आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥

---

* आविवेकविज्ञानयुक्तम् is suggested by "विषयाभिमुख पुरुषम्"

रागद्वेषेति। रागद्वेषवियुक्तै रागश्च द्वेषश्च रागद्वेषौ। तत्पुरःसरा हीन्द्रियाणां प्रवृत्तिः स्वाभाविकी। तत्र यो मुमुक्षुर्भवति। स ताभ्यां वियुक्तैः श्रोत्रादिभिरिन्द्रियैविषयानवर्जनीयांश्चरन्नुपलभमान आत्मवश्यैरात्मनो वश्यानि वशीभूतानि तैरात्मवश्यैर्विधेयात्मेच्छातो विधेय आत्मान्तःकरणं यस्य सोऽयं प्रसादमधिगच्छति। प्रसादः प्रसन्नता स्वास्थ्यम् ॥ ६४ ॥

प्रसादे सति किं स्यादित्युच्यते—

प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥

प्रसाद इति। प्रसादे सर्वदुःखानामाध्यात्मिकादीनां हानिर्विनाशोऽस्य यतेरुपजायते। किंच प्रसन्नचेतसः स्वस्थान्तःकरणस्य हि यस्मादाशु शीघ्रं बुद्धिः पर्यवतिष्ठत आकाशमिव परि समन्तादवतिष्ठत आत्मस्वरूपेणैव निश्चलीभवतीत्यर्थः। एवं प्रसन्नचेतसोऽवस्थितबुद्धेः कृतकृत्यता यतस्तस्माद्रागद्वेषवियुक्तैरिन्द्रियैः शास्त्राविरुद्धेष्ववर्जनीयेषु युक्तः समाचरेदिति वाक्यार्थः ॥ ६५ ॥

सेयं प्रसन्नता स्तूयते—

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६६ ॥

नास्तीति। नास्ति न विद्यते न भवतीत्यर्थः। बुद्धिरात्मस्वरूपविषयायुक्तस्यासमाहितान्तःकरणस्य। न चास्त्ययुक्तस्य भावनात्मज्ञानाभिनिवेशः। तथा न चास्त्यभावयत आत्मज्ञानाभिनिवेशमकुर्वतः शान्तिरुपशमः। अशान्तस्य कुतः सुखम्, इन्द्रियाणां हि विषयसेवातृष्णातो निवृत्तिर्या तत्सुखं, न विषयविषया तृष्णा, दुःखमेव हि सा, न तृष्णायां सत्यां सुखस्य गन्धमात्रमप्युपपद्यत इत्यर्थः ॥ ६६ ॥

अयुक्तस्य कस्माद्बुद्धिर्नास्तीत्युच्यते—

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥

इन्द्रियाणामिति। इन्द्रियाणां हि यस्माच्चरतां स्वस्वविषयेषु प्रवर्तमानानां यन्मनोऽनुविधीयतेऽनुप्रवर्तते तदिन्द्रियविषयविकल्पनेन प्रवृत्तं मनोऽस्य यतेर्हरति प्रज्ञामात्मानात्मविवेकजां नाशयति। कथं, वायुर्नावमिवाम्भस्युदके जिगमिषतां* मार्गादुद्धृत्योन्मार्गे यथा वायुर्नावं प्रवर्तयत्येवमात्मविषयां प्रज्ञां हृत्वा मनो विषयविषयां करोति ॥ ६७ ॥

* POA adds सांयात्रिकाणाम् after जिगमिषताम्.

यततो ह्यपीत्युपन्यस्तस्यार्थस्यानेकधोपपत्तिमुक्त्वा तं चार्थमुपपाद्योपसंहरति, इन्द्रियाणां प्रवृत्तौ दोष उपपादितो यस्मात्—*

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥

तस्माद्यस्य यतेः महाबाहो निगृहीतानि सर्वशः सर्वप्रकारैर्मानसादिभेदैरिन्द्रियाणीन्द्रियार्थेभ्यः *शब्दादिभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥*

योऽयं लौकिको वैदिकश्च व्यवहारः स उत्पन्नविवेकज्ञानस्य स्थितप्रज्ञस्याविद्याकार्यत्वादविद्यानिवृत्तौ निवर्तते । अविद्यायाश्च विद्याविरोधान्निवृत्तिरित्येतमर्थं स्फुटीकुर्वन्नाह :—

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥

या निशेति—

I या निशा रात्रिः सर्वपदार्थानामविवेककरी तमःस्वभावत्वात्। सर्वेषां भूतानां सर्वभूतानाम् । किं तत्परमार्थतत्त्वं स्थितप्रज्ञस्य विषयः। यथा नक्तंचराणामहरेव सदन्येषां निशा भवति तद्वन्नक्तंचरस्थानीयानामज्ञानां सर्वभूतानां निशेव निशा परमार्थतत्त्वमगोचरत्वादतद्बुद्धीनाम् । तस्यां परमार्थतत्त्वलक्षणायामज्ञाननिद्रायाः प्रबुद्धो जागर्ति संयमी संयमवाञ्जितेन्द्रियो योगीत्यर्थः । यस्यां ग्राह्यग्राहकभेदलक्षणायामविद्यानिशायां प्रसुप्तान्येव भूतानि जाग्रतीत्युच्यते यस्यां निशायां प्रसुप्ता इव

---

I Śankara–Atman or Brahman or the Reality (is known to the sage but ) is (like) the Night to the Ignorant ( lit. to all beings–सर्वभूतानाम् ). It is about this (night-like ) Reality that the wise sage who has self–control (संयमी) is awake. [=The self–controlled sage knows the Reality, which is like the night to all (ignorant) beings ]

'That standpoint ( *of " I am an agent, "* "This is my

---

* ASS reads यततो ......उपसंहरति as part of the com. on v. 67 and POA reads इन्द्रियाणां ......यस्मात् as part of the com. on v. 68, we have preferred to read both the sentences as introduction to the com on v. 68.

स्वप्नदृशः सा निशाविद्यारूपत्वात्परमार्थतत्त्वं पश्यतो मुनेः ।

II अत. कर्माण्यविद्यावस्थायामेव चोद्यन्ते न विद्यावस्थायाम् । विद्यायां हि सत्यामुदिते सवितरि शार्वरमिव तमः प्रणाशमुपगच्छत्यविद्या । प्राग्विद्योत्पत्तेरविद्या प्रमाणबुद्धया गृह्यमाणा क्रियाकारकफलभेदरूपा सती सर्वकर्महेतुत्वं प्रतिपद्यते । नाप्रमाणबुद्धया गृह्यमाणायाः कर्महेतुत्वोपपत्तिः । प्रमाणभूतेन वेदेन मम चोदितं कर्तव्यं कर्मेति हि कर्मणि कर्ता प्रवर्तते नाविद्यामात्रमिदं सर्वं निशेवेति ।

III यस्य पुनर्निशेवाविद्यामात्रमिदं सर्वं भेदजातमिति ज्ञानं तस्यात्मज्ञस्य सर्वकर्मसंन्यास एवाधिकारो न प्रवृत्तौ ।

(a) तथा च दर्शयिष्यति-' तद्बुद्धयस्तदात्मानः ' (Bha. Gi V. 17) इत्यादिना ज्ञाननिष्ठायामेव तस्याधिकारम् ।

(b) तत्रापि प्रवर्तकप्रमाणाभावे प्रवृत्त्यनुपपत्तिरिति चेत् । (i) न, स्वात्मविषयत्वादात्मज्ञानस्य, नह्यात्मनः स्वात्मनि प्रवर्तकप्रमाणापेक्षतात्मत्वादेव । (ii) तदन्तत्वाच्च सर्वप्रमाणानां प्रमाणत्वस्य । नह्यात्मस्वरूपाधिगमे सति पुनः प्रमाणप्रमेयव्यवहारः संभवति । प्रमातृत्वं ह्यात्मनो निवर्तयत्यन्त्यं प्रमाणम् । निवर्तयदेव चाप्रमाणीभवति स्वप्नकालप्रमाणमिव प्रबोधे ।

---

duty " ) which is really like a Night but which all (ignorant) beings look upon as the knowledge of the Reality is really the very night to the wise sage.

II Conclusion : All actions laid down by the Scripture including the Śrauta ceremonies are prescribed for him who does not know the Atman. The knoweledge of Atman consists of " I am Atman who is no agent. "

III The wise sage is asked by the Scripture to renounce all actions.

(a) Verses.

(b) When the Śruti describes the Atman as अकर्ता non-agent and when one knows himself to be that Atman, the wise sage will not hold the Śruti to be like the Śruti describing Atman authorised to do the Vedic duties, i. e. to be within the province of Ignorance. This is for two reasons:—(i) Knowledge of Atman is the knowledge of himself for the sage, and (ii) one's own self is the final

(iii) लोके च वस्त्वधिगमे प्रवृत्तिहेतुत्वादर्शनात्प्रमाणस्य । तस्मान्नात्मविदः कर्मण्यधिकार इति सिद्धम् ॥ ६९ ॥

विदुषस्त्यक्तैषणस्य स्थितप्रज्ञस्य यतेरेव मोक्षप्राप्तिर्नत्वसंन्यासिनः कामकामिन इत्येतमर्थं दृष्टान्तेन प्रतिपादयिष्यन्नाह—

आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥ ७० ॥

आपूर्येति । आपूर्यमाणमद्भिरचलप्रतिष्ठमचलतया प्रतिष्ठावस्थितिर्यस्य तमचलप्रतिष्ठं समुद्रमापः सर्वतोगताः प्रविशन्ति स्वात्मस्थमविक्रियमेव सन्तं यद्वत्तद्वत्कामा विषयसंनिधावपि सर्वत इच्छाविशेषा यं पुरुषं समुद्रमिवापोऽविकुर्वन्तः प्रविशन्ति सर्वे आत्मन्येव प्रलीयन्ते न स्वात्मवशं कुर्वन्ति स शान्तिं मोक्षमाप्नोति नेतरः कामकामी काम्यन्त इति कामा विषयास्तान्कामयितुं शीलं यस्य स कामकामी नैव प्राप्नोतीत्यर्थः ॥ ७० ॥

यस्मादेवं तस्मात्—

विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः ।
निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७१ ॥

विहायेति । विहाय परित्यज्य कामान्यः संन्यासी पुमान्सर्वानशेषतः कार्त्स्न्येन चरति जीवनमात्रचेष्टाशेष पर्यटतीत्यर्थः, निःस्पृहः शरीरजीवनमात्रेऽपि निर्गता स्पृहा यस्य स निःस्पृहः सन्निर्ममः शरीरजीवनमात्राक्षिप्तपरिग्रहेऽपि ममेदमित्यभिनिवेशवर्जितः, निरहंकारो विद्यावत्त्वादिनिमित्तात्मसंभावनारहित इत्यर्थः, स एवंभूतः स्थितप्रज्ञो ब्रह्मविच्छान्तिं सर्वसंसारदुःखोपरमलक्षणां निर्वाणाख्यामधिगच्छति प्राप्नोति ब्रह्मभूतो भवतीत्यर्थः ॥ ७१ ॥

सैषा ज्ञाननिष्ठा स्तूयते—

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ७२ ॥

---

Authority (=does not require the authority of the Veda or does not require the Veda to be an authority. (iii) And in our ordinary experience we see that when we get the real thing we want, we do not care about the source being authentic or not.

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सांख्ययोगो नाम द्वितीयोऽध्यायः ॥ २ ॥

एषा ब्राह्मीति । एषा यथोक्ता ब्राह्मी ब्रह्मणि भवेयं स्थितिः सर्वं कर्म सन्न्यस्य ब्रह्मरूपेणैवावस्थानमित्येतत् । हे पार्थ नैनां स्थितिं प्राप्य लब्ध्वा न विमुह्यति न मोहं प्राप्नोति । स्थित्वाऽस्यां स्थितौ ब्राह्म्यां यथोक्तायामन्तकालेऽप्यन्ते वयस्यपि ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं मोक्षमृच्छति गच्छति किमु वक्तव्यं ब्रह्मचर्यादेव संन्यस्य यावज्जीवं यो ब्रह्मण्येवावतिष्ठते स ब्रह्मनिर्वाणमृच्छतीति ॥ ७२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ श्रीभगद्गीताभाष्ये द्वितीयोऽध्यायः ॥ २ ॥

# अथ तृतीयोऽध्यायः ।

I शास्त्रस्य प्रवृत्तिनिवृत्तिविषयभूते द्वे बुद्धी भगवता निर्दिष्टे सांख्ये बुद्धिर्योगे बुद्धिरिति च । तत्र प्रजहाति यदा कामानित्यारभ्याध्यायपरिसमाप्तेः सांख्यबुद्ध्याश्रितानां संन्यासं कर्तव्यमुक्त्वा तेषां तन्निष्ठतयैव च कृतार्थतोक्ता—एषा ब्राह्मी स्थितिरिति । अर्जुनाय च 'कर्मण्येवाधिकारस्ते' 'मा ते सङ्गोऽस्त्वकर्मणि' इति कर्मैव कर्तव्यमुक्तवान्योगबुद्धिमाश्रित्य, न तत एव श्रेयःप्राप्तिमुक्तवान् ।

II तदेतदालक्ष्य पर्याकुलीभूतबुद्धिरर्जुन उवाच । कथं भक्ताय श्रेयोर्थिने यत्साक्षाच्छ्रेयःसाधनं सांख्यबुद्धिनिष्ठां श्रावयित्वा मां कर्मणि दृष्टानेकानर्थयुक्ते पारम्पर्येणाप्यनैकान्तिकश्रेयःप्राप्तिफले नियुञ्ज्यादिति युक्तः पर्याकुलीभावोऽर्जुनस्य । तदनुरूपश्च प्रश्नो ज्यायसी चेदित्यादिः । प्रश्नापाकरणवाक्यं च भगवतोक्तं यथोक्तविभागविषये शास्त्रे ।

III केचित्तु—

A. अर्जुनस्य प्रश्नार्थमन्यथा कल्पयित्वा तत्प्रतिकूलं भगवतः प्रतिवचनं वर्णयन्ति,

---

I Substance of Adhyaya II

II Cause of Arjuna's Confusion and Arjuna's Question in Bha. Gi III. 1-2.

III The view of a Predecessor of Śankara :—

A-Arjuna's question is to be presumed to be the reverse of Śankara's explanation, so also the Lord's reply.

[ This would mean that the Lord has not told A. in Adhyāya II that the Samkhya was a direct way to Moksa and that he had asked A to follow the Karmayoga which was taught as a direct way to Moksa ( अर्जुनस्य प्रश्नार्थमन्यथा कल्पयित्वा ) And what will be the Lord's reply, reverse of Sankara's explanation ? It is difficult to make out exactly what Sankara's predecessor said. S does not give details on this point ]

B–यथा चात्मना संबन्धग्रन्थे गीतार्थो निरूपितस्तत्प्रतिकूलं चेह पुनः प्रश्नप्रतिवचनयोरर्थं निरूपयन्ति। कथं, तत्र संबन्धग्रन्थे तावत्सर्वेषामाश्रमिणां ज्ञानकर्मणोः समुच्चयो गीताशास्त्रे निरूपितोऽर्थ इत्युक्तं पुनर्विशेषितं च यावज्जीवश्रुतिचोदितानि कर्माणि परित्यज्य केवलादेव ज्ञानान्मोक्षः प्राप्यत इत्येतदेकान्तेनैव प्रतिषिद्धमिति, इह तु आश्रमविकल्पं दर्शयता यावज्जीवश्रुतिचोदितानामेव कर्मणां परित्याग उक्तः, तत्कथमीदृशं विरुद्धमर्थमर्जुनाय ब्रूयाद्भगवान्, श्रोता वा कथं विरुद्धमर्थमवधारयेत्।

तत्रैतत्स्यात्—

(a) गृहस्थानामेव श्रौतकर्मपरित्यागेन केवलादेव ज्ञानान्मोक्षः प्रतिषिध्यते, नत्वाश्रमान्तराणामित्येतदपि पूर्वोत्तरविरुद्धमेव। कथं, सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयो गीताशास्त्रे निश्चितोऽर्थ इति प्रतिज्ञायेह कथं तद्विरुद्धं केवलादेव ज्ञानान्मोक्षं ब्रूयादाश्रमान्तराणाम्।

---

B–Though the central teaching of the Gitā is that all orders of life (आश्रम) can get Mokṣa though Jñāna and (Śrauta and Smārta) Karman combined together, the third Adhyāya says that only the gṛhastha is asked to follow that teaching, and the other three orders can get Mokṣa through Jñāna + Smārta Karman only.

[Śaṅkara says that his Predecessor's remarks in his introduction to Bha. Gī III, 1 contradicted his (predecessor's) remarks in his General Introduction (संबन्धग्रन्थ, to which Śaṅkara refers in his bhāṣya on Bha Gī. II. 10, *viz.*, तत्र केचिदाहुः etc.).

We do not think there was any contradiction in the statements of Śaṅkara's predecessor. According to the latter's view the gṛhastha mumukṣu alone had to perform the life-long Śrauta Rites as help to Jñāna. This is the natural interpretation of the view that "All āśramins had to combine Jñāna and Karman."

This was a very ancient view. Vide our interpretation of Bra. Sū. III. 4. 48 and also III. 4. 32-34]

(a) The Predecessor—a gṛhastha shall get Mokṣa through Jñāna + Śrauta Karman; the other three orders through Jñāna alone.

(a) 1. अथ मतं श्रौतकर्मापेक्षयैतद्वचनं केवलादेव ज्ञानाच्छ्रौतकर्मरहितादगृहस्थानां मोक्षः प्रतिषिध्यत इति । तत्र गृहस्थाना विद्यमानमपि स्मार्तं कर्माविद्यमानवदुपेक्ष्य ज्ञानादेव केवलादित्युच्यत इति । एतदपि विरुद्धम् । कथं, गृहस्थस्यैव स्मार्तकर्मणा समुच्चितात्ज्ञानान्मोक्षः प्रतिषिध्यते न त्वाश्रमान्तराणामिति कथं विवेकिभिः शक्य मवधारयितुम् । किञ्च यदि मोक्षसाधनत्वेन स्मार्तानि कर्माण्यूर्ध्वरेतसां समुच्चीयन्ते तथा गृहस्थस्यापीष्यतां **स्मार्तैरेव समुच्चयो न श्रौतैः। अथ श्रौतैः स्मार्तैश्च गृहस्थस्यैव समुच्चयो मोक्षायोर्ध्वरेतसां तु स्मार्तकर्ममात्रसमुच्चिता-** ज्ज्ञानान्मोक्ष इति । तत्रैवं सति गृहस्थस्यायासबाहुल्याच्छ्रौतं स्मार्तं च बहुदुःखरूपं कर्म शिरस्यारोपितं स्यात् ।

(a) 2. अथ गृहस्थस्यैवाऽऽयासबाहुल्यकारणान्मोक्षः स्यान्नाश्रमान्तराणां श्रौतनित्य- कर्मरहितत्वादिति । **तदप्यसत्, सर्वोपनिषत्स्वितिहासपुराणयोगशास्त्रेषु च ज्ञानाङ्गत्वेन मुमुक्षोः सर्वकर्मसंन्यासविधानादाश्रमविकल्पसमुच्चयविधानाच्च श्रुतिस्मृत्योः ।**

(b) सिद्धस्तर्हि सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयः। न, **मुमुक्षोः सर्वकर्म- संन्यासविधानात्** । "व्युत्थायाथ भिक्षाचर्यं चरन्ति ।" (Br. Upa. III 5. 1) तस्मात्संन्यासमेषां तपसामतिरिक्तमाहुः । (Maha. Upa. XIV. 1) "न्यास एवात्यरेचयत् " इति । (Maha. Upa. XXI. 2.) " न कर्मणा न प्रजया धनेन त्यागेनैके ऽमृतत्वमानशुः " इति च । (Maha. Upa. X. 5.) " ब्रह्मचर्यादेव प्रव्रजेत्" इत्याद्याः (Jābā. Upa. 4) ।

---

(a) 1. The Predecessor—i. e. the grhastha shall get Moksa through Jñāna + Śrauta and Smārta Karman; the other three orders through Jñāna + Smārta Karmans.

(a) 2. A grhasthā alone can get Moksa through all the troublesome (Śrauta and Smārta) Karmans while the other *three orders being not asked by the Scripture to do* any Śrauta nitya Karmans would get Moksa through Jñāna + Smārta nitya Karmans.

Śankara's reply—Moksa can be had only by a Sannyāsin; never by a grhastha or brahmacārin or vānaprastha. The Śruti and Smrti which make the grhastha or other āśramas optional and allow even a brahmacārin to take to sannyāsa show that a seeker of Moksa should necessarily *become a sannyāsin.*

(b) The Predecessor—From the fact that the Scripture allows a man, even a brahmacārin to become directly a

"त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज" ॥ (MBh XII. 329 40)
"ससारमेव निस्सार दृष्ट्वा सारदिदृक्षया ।
प्रव्रजन्त्यकृतोद्वाहाः पर वैराग्यमाश्रिता ' इति बृहस्पति ।
"कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिन. ॥ इति शुकानुशासनम् ।
(MBh XII 243 7)

इहापि सर्वकर्माणि मनसा सन्यस्येत्यादि । मोक्षस्य चाकार्यत्वान्मुमुक्षो कर्मानर्थक्यम् ।

( c ) नित्यानि प्रत्यवायपरिहारार्थमनुष्ठेयानीति चेत्, न, असन्यासिविषयत्वात्प्रत्यवायप्राप्ते' । न ह्यग्निकार्याद्यकरणात्सन्यासिन' प्रत्यवाय कल्पयितु शक्यो यथा ब्रह्मचारिणामसन्यासिनामपि कर्मिणाम् । न तावन्नित्यानां अकरणादभावादेव भावरूपस्य प्रत्यवायस्योत्पत्तिः कल्पयितु शक्या कथमसत सज्जायेतेत्यसत' सज्जन्मासभव-श्रुते' । यदि विहिताकरणादसभाव्यमपि प्रत्यवाय ब्रूयाद्वेदस्तदाऽनर्थकरो वेदोऽप्रमाण मित्युक्त स्यात्, विहितस्य करणाकरणयोर्दु'खमात्रफलत्वात् । तथा च कारक शास्त्र न ज्ञापकमित्यनुपपन्नार्थं कल्पित स्यात् । न चैतदिष्टम् । तस्मान्न संन्यासिनां कर्माणि ।

अतो ज्ञानकर्मणो' समुच्चयानुपपत्ति' ।

IV ज्यायसी चेत्कर्मणस्ते मता बुद्धि ' इत्यर्जुनस्य प्रश्नानुपपत्तेश्च ।

---

sannyasin at his will, we conclude that every order if desirous of Moksa can get it by Jñāna + nitya duties (Srauta and Smārta in the case of a grhastha and Smārta alone in the case of the other three orders)

Šankara's reply—A Mumuksu can give up or is asked to give up even the nitya duties, the same is the teaching of Bha Gi V 12, the Moksa is not a Karya, therefore also no Karman can produce it

(c) Even a Mumuksu though a sannyasin must perform nitya rites

Šankara–A Sannyāsin though no Mumuksu can give up nitya rites

Śankara's Conclusion—For all these reasons no Combination of Jñāna and Karman can achieve Moksa.

IV Śankara's criticism of ज्ञानकर्मसमुच्चय based upon Bha Gi III. 1.

(a) यदि हि भगवता द्वितीयेऽध्याये ज्ञानं कर्म च समुच्चयेन त्वयाऽनुष्ठेयमित्युक्तं स्यात्तनोऽर्जुनस्य प्रश्नोऽनुपपन्नो ज्यायसी चेत्कर्मणस्ते मता बुद्धिरिति । अर्जुनाय चेद्बुद्धिकर्मणी त्वयाऽनुष्ठेये इत्युक्ते या कर्मणो ज्यायसी बुद्धि: साप्युक्तैवेति ' तत्किं कर्मणि घोरे मां नियोजयसि केशव ' इति प्रश्नो न कथञ्चनोपपद्यते ।

(b) न चार्जुनस्यैव ज्यायसी बुद्धिर्नानुष्ठेयेति भगवतोक्तं पूर्वमिति कल्पयितुं युक्तं येन ज्यायसी चेदिति प्रश्नः स्यात् ।

(c) यदि पुनरेकस्य पुरुषस्य ज्ञानकर्मणोर्विरोधाद्युगपदनुष्ठानं न संभवतीति भिन्नपुरुषानुष्ठेयत्वं भगवता पूर्वमुक्तं स्यात्ततोऽयं प्रश्न उपपन्नो ज्यायसी चेदित्यादि ।

(d) अविवेकतः प्रश्नकल्पनायामपि भिन्नपुरुषानुष्ठेयत्वेन भगवतः प्रतिवचनं नोपपद्यते । न चाज्ञाननिमित्तं भगवत्प्रतिवचनं कल्प्यम् । **अस्माच्च भिन्नपुरुषानुष्ठेयत्वेन ज्ञानकर्मनिष्ठयोर्भगवतः प्रतिवचनदर्शनाज्ज्ञानकर्मणोः समुच्चयानुपपत्तिः । तस्मात्केवलादेव ज्ञानान्मोक्ष इत्येषोऽर्थो निश्चितो गीतासु सर्वोपनिषत्सु च ।** ज्ञानकर्मणोरेकं वद निश्चित्येति चैकविषयैव प्रार्थनानुपपन्नोभयोः समुच्चयसम्भवे । कुरु कर्मैव तस्मात्त्वमिति च ज्ञाननिष्ठासंभवमर्जुनस्यावधारणेन दर्शयिष्यति ।

## अर्जुन उवाच—

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥

---

(a) If the Lord had taught a Combination (of ज्ञान and कर्मन्) as necessary, how could Arjuna think that ज्ञान (बुद्धि means ज्ञान) was higher (a higher step than कर्मन्)

(b) Nor can we presume that ' The Lord did tell Arjuna that ज्ञान (बुद्धि) is higher, but A. should do only Karman."

(c) A 's question can be justified only if ज्ञान and कर्मन् were two independent Paths for two different persons

(d) Even if the Lord had told in Adhyaya II that Karman was higher than Jñāna and if A. be presumed to have misunderstood the Lord and to have therefore asked the question in Bha Gī. III 1 the Lord's reply goes against ज्ञानकर्मसमुच्चय One cannot assume that the Lord's reply is due to (his) ignorance

(a) ज्यायसी श्रेयसी चेद्यदि कर्मणः सकाशात्ते तव मताभिप्रेता बुद्धिर्ज्ञानं हे जनार्दन। यदि बुद्धिकर्मणी समुचिते इष्टे तदेकं श्रेयःसाधनमिति कर्मणो ज्यायसी बुद्धिरिति **कर्मणोऽतिरिक्तकरणं बुद्धेरनुपपन्नमर्जुनेन** कृतं स्यान्न हि तदेव तस्मात्फलतोऽतिरिक्तं स्यात्।

(b) तथा कर्मणः श्रेयस्करी भगवतोक्ता बुद्धिरश्रेयस्करं च कर्म कुर्वीति मां प्रतिपादयतो तत्किं नु कारणमिति भगवत **उपालम्भमिव कुर्वंस्तत्किं** कस्मात्कर्मणि घोरे क्रूरे हिंसालक्षणे मा नियोजयसि केशवेति च यदाह तच्च नोपपद्यते।

(c) अथ **स्मार्तेनैव कर्मणा समुच्चयः** सर्वेषां भगवतोक्तोऽर्जुनेन चावधारितश्चेत्तत्किं कर्मणि घोरे मा नियोजयसीत्यादि कथं युक्तं वचनम् ॥ १ ॥

किं च—

व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

व्यामिश्रेणेति। व्यामिश्रेणेव यद्यपि विविक्ताभिधायी भगवांस्तथाऽपि मम मन्दबुद्धेर्व्यामिश्रमिव भगवद्वाक्यं प्रतिभाति। तेन मम बुद्धिं मोहयसीव। मम बुद्धिव्यामोहापनयाय हि प्रवृत्तस्त्वं तु कथं मोहयस्यतो ब्रवीमि बुद्धिं मोहयसीव मे ममेति। त्वं तु भिन्नकर्तृकयोर्ज्ञानकर्मणोरेकपुरुषानुष्ठानासंभवं यदि मन्यसे तत्रैवं सति तत्तयोरेकं बुद्धिं कर्म वेदमेवार्जुनस्य योग्यं बुद्धिशक्त्यवस्थानरूपमिति निश्चित्य वद ब्रूहि। येन ज्ञानेन कर्मणा वान्यतरेण श्रेयोऽहमाप्नुयां प्राप्नुयाम्। यदि हि **कर्मनिष्ठायां गुणभूतमपि ज्ञानं भगवतोक्तं स्यात्तत्कथं तयोरेकं वदेत्येकविषयैवार्जुनस्य शुश्रूषा स्यात्**। न हि भगवता पूर्वमुक्तमन्यतरदेव ज्ञानकर्मणोर्वक्ष्यामि नैव द्वयमिति। येनोभयप्राप्त्यसंभवमात्मनो मन्यमान एकमेव प्रार्थयेत् ॥ २ ॥

प्रश्नानुरूपमेव प्रतिवचनम्—

---

(e) The fact that A. wants to know only one of Jñāna and Karman, shows that no combination of the two is meant by the Gītā.

(f) The Lord's reply asking A. to do only Karman proves the same.

V. Interpretation of Bha. Gī. III. 1.

(a) Arjuna separates ज्ञान ( or बुद्धि ) from कर्मन्

(b) A. taunts Krsna for advising him to follow Karman, though Jñāna is higher.

(c) If Smārta duties ( including the war for a Ksatriya ) were to be combined with ज्ञान for all seekers of Moksa, A.'s question is improper.

श्रीभगवानुवाच—

लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥

श्रीभगवानुवाच—लोकेऽस्मिन्निति। लोकेऽस्मिञ्शास्त्रानुष्ठानाधिकृतानां त्रैवर्णिकानां द्विविधा द्विप्रकारा निष्ठा स्थितिरनुष्ठेयतात्पर्यं पुरा पूर्वं सर्गादौ प्रजा सृष्ट्वा तासामभ्युदयनिःश्रेयसप्राप्तिसाधनं वेदार्थसंप्रदायमाविष्कुर्वता प्रोक्ता मया सर्वज्ञेनेश्वरेण हेऽनघापाप। तत्र का सा द्विविधा निष्ठेत्याह—तत्र ज्ञानयोगेन ज्ञानमेव योगस्तेन सांख्यानामात्मानात्मविषयविवेकज्ञानवतां ब्रह्मचर्याश्रमादेव कृतसंन्यासानां वेदान्तविज्ञानसुनिश्चितार्थानां परमहंसपरिव्राजकानां ब्रह्मण्येवावस्थितानां निष्ठा प्रोक्ता, कर्मयोगेन कर्मैव योगः कर्मयोगस्तेन कर्मयोगेन योगिनां कर्मिणां निष्ठा प्रोक्तेत्यर्थः । यदि चैकेन पुरुषेणैकस्मै पुरुषार्थाय ज्ञानं कर्म च समुच्चित्यानुष्ठेयं भगवतेष्टमुक्तं वक्ष्यमाणं वा गीतासु वेदेषु ( meaning of पुरा ) चोक्तं कथमिहार्जुनायोपसन्नाय प्रियाय विशिष्टभिन्नपुरुषकर्तृके एव ज्ञानकर्मनिष्ठे ब्रूयात्। यदि पुनरर्जुनो ज्ञानं कर्म च द्वयं श्रुत्वा स्वयमेवानुष्ठास्यत्यन्येषां तु भिन्नपुरुषानुष्ठेयतां वक्ष्यामीति मतं भगवतः कल्प्येत तदा रागद्वेषवानप्रमाणभूतो भगवान्कल्पितः स्यात्। तथायुक्तम् । तस्मात्कयाऽपि युक्त्या न समुच्चयो ज्ञानकर्मणोः । यदर्जुनेनोक्तं+ कर्मणो ज्यायस्त्वं बुद्धेस्तच्च स्थितमनिराकरणात् । तस्याश्च ज्ञाननिष्ठायाः संन्यासिनामेवानुष्ठेयत्वं , भिन्नपुरुषानुष्ठेयत्ववचनाच्च*भगवत एवमेवानुमतमिति गम्यते ॥ ३ ॥

मा च बन्धकारणे कर्मण्येव नियोजयसीति विषण्णमनसमर्जुनं कर्म नारभ इत्येवं मन्वानमालक्ष्याह भगवान्—न कर्मणामनारम्भादिति । अथ वा ज्ञानकर्मनिष्ठयोः परस्परविरोधादेकेन पुरुषेण युगपदनुष्ठातुमशक्यत्वे सतीतरेतरानपेक्षयोरेव पुरुषार्थहेतुत्वे प्राप्ते कर्मनिष्ठाया ज्ञाननिष्ठाप्राप्तिहेतुत्वेन पुरुषार्थहेतुत्वं न स्वातन्त्र्येण,ज्ञाननिष्ठा तु कर्मनिष्ठोपायलब्धात्मिका सती स्वातन्त्र्येण पुरुषार्थहेतुरन्यानपेक्षेत्येतमर्थं प्रदर्शयिष्यन्नाह भगवान्—

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यासनादेव सिद्धिं समधिगच्छति ॥ ४ ॥

---

+ POA reads यदर्जुनेन गम्यते as a part of the introduction to v 4 We follow ASS

* POA and VVP drop च after भिन्नपुरुषानुष्ठेयत्ववचनात् , but we think it is necessary

न कर्मणामिति। न कर्मणामनारम्भादप्रारम्भात्कर्मणा क्रियाणा यज्ञादीनामिह जन्मनि जन्मान्तरे वानुष्ठितानामुपात्तदुरितक्षयहेतुत्वेन सत्त्वशुद्धिकारणाना तत्कारणत्वेन च ज्ञानोत्पत्तिद्वारेण ज्ञाननिष्ठाहेतूनाम् ।

" ज्ञानमुत्पद्यते पुसा क्षयात्पापस्य कर्मण ।
यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥ " ( MBh XII 204 8 )

इत्यादिस्मरणादनारम्भादननुष्ठानान्नैष्कर्म्यं निष्कर्मभावं कर्मशून्यता ज्ञान योगेन निष्ठां निष्क्रियात्मस्वरूपेणैवावस्थानमिति यावत् पुरुषो नाश्नुते न प्राप्नोती त्यर्थ । कर्मणामनारम्भान्नैष्कर्म्यं नाश्नुत इति वचनात्तद्विपर्ययात्तेषामारम्भान्नैष्कर्म्यमश्नुत इति गम्यते । कस्मात्पुन कारणात्कर्मणामनारम्भान्नैष्कर्म्यं नाश्नुत इति । उच्यते, कर्मारम्भस्यैव नैष्कर्म्योपायत्वात् । न ह्युपायमन्तरेणोपेयप्राप्तिरस्ति । कर्मयोगो पायत्व च नैष्कर्म्यलक्षणस्य ज्ञानयोगस्य श्रुताविह च प्रतिपादनात् । श्रुतौ तावत्प्र कृतस्यात्मलोकस्य वेदस्य वेदनोपायत्वेन " तमेत वेदानुवचनेन ब्राह्मणा विविदिष न्ति यज्ञेन " इत्यादिना ( Br Upa IV 4 22 ) कर्मयोगस्य ज्ञानयोगोपायत्व प्रतिपादितम् । इहापि च—

" सन्यासस्तु महाबाहो दुःखमाप्तुमयोगत । " ( V 6 )
" योगिन कर्म कुर्वन्ति सङ्ग त्यक्त्वात्मशुद्धये । " ( V 11 )
" यज्ञो दान तपश्चैव पावनानि मनीषिणाम् । " ( XVIII 5 )

इत्यादि प्रतिपादयिष्यति । ननु च—" अभय सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत् " ( MBh XIV 46 18 ) इत्यादौ कर्तव्यकर्मसन्यासादपि नैष्कर्म्यप्राप्ति दर्शयति लोके च कर्मणामनारम्भान्नैष्कर्म्यमिति प्रसिद्धतरमतश्च नैष्कर्म्यार्थिन किं कर्मारम्भेणेति प्राप्तमत आह—न च सन्यसनादेवेति । नापि सन्यसनादेव केवलात्कर्मपरित्याग मात्रादेव ज्ञानरहितात्सिद्धिं नैष्कर्म्यलक्षणा ज्ञानयोगेन निष्ठां समधिगच्छति न प्राप्नोति ॥ ४ ॥

कस्मात्पुन कारणात्कर्मसन्यासमात्रादेव ज्ञानरहितात्सिद्धिं नैष्कर्म्यलक्षणा पुरुषो नाधिगच्छतीति हेत्वाकाङ्क्षायामाह —

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवश. कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥

न हीति । न हि यस्मात्क्षणमपि काल जातु कदाचित्कश्चित्तिष्ठत्यकर्मकृत्सन् । कस्मात्कार्यते हि यस्मादवश एव अस्वतन्त्र एव सर्व प्राणी प्रकृतिजैः प्रकृतितो जातै सत्त्वरजस्तमोभिर्गुणै । अज्ञ इति वाक्यशेषो यतो वक्ष्यति–' गुणैर्यो न विचाल्यते ' इति (XIV 23) साख्याना पृथक्करणादज्ञानामेव हि कर्मयोगो न ज्ञानिनाम् । ज्ञानिना तु गुणैरचाल्यमानानां स्वतश्चलनाभावात्कर्मयोगो नोपपद्यते । तथा च व्याख्यात वेदाविनाशिनमित्यत्र ( II. 21. ) ॥ ५ ॥

यस्त्वनात्मज्ञश्चोदितं कर्म नारभत इति तदसदेवेत्याह—

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥

कर्मेन्द्रियाणीति । कर्मेन्द्रियाणि हस्तादीनि संयम्य संहृत्य य आस्ते तिष्ठति मनसा स्मरंश्चिन्तयन्निन्द्रियार्थान्विषयान्विमूढात्मा विमूढान्तःकरणो मिथ्याचारो मृषाचारः पापाचारः स उच्यते ॥ ६ ॥

यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥

यस्त्विति । यस्तु पुनः कर्मण्यधिकृतोऽज्ञो बुद्धीन्द्रियाणि मनसा नियम्याऽऽरभतेऽर्जुन कर्मेन्द्रियैर्वाक्पाण्यादिभिः । किमारभत इत्याह—कर्मयोगमसक्तः सन्स विशिष्यत इतरस्मान्मिथ्याचारात् ॥ ७ ॥

यत एवमतः—

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्राऽपि च ते न प्रसिध्येदकर्मणः ॥ ८ ॥

नियतमिति । नियतं नित्यं यो यस्मिन्कर्मण्यधिकृतः फलाय चाश्रुतं तन्नियतं कर्म तत्कुरु त्वं हेऽर्जुन । यतः कर्म ज्यायोऽधिकतरं फलतो हि यस्मादकर्मणोऽकरणादनारम्भात् । कथं शरीरयात्रा शरीरस्थितिरपि च ते तव न प्रसिध्येत्प्रसिद्धिं न गच्छेदकर्मणोऽकरणात् । अतो दृष्टः कर्माकर्मणोर्विशेषो लोके ॥ ८ ॥

यच्च मन्यसे बन्धार्थत्वात्कर्म न कर्तव्यमिति तदप्यसत्, कथम्—

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥

यज्ञार्थादिति । यज्ञो वै विष्णुः इति ( Tai. Sam I. 7 4 ) श्रुतेर्यज्ञ ईश्वरस्तदर्थं यत्क्रियते तद्यज्ञार्थं कर्म तस्मात्कर्मणोऽन्यत्रान्येन कर्मणा लोकोऽयमधिकृतः कर्मकृत्कर्मबन्धनः कर्म बन्धनं यस्य सोऽयं कर्मबन्धनो लोको न तु यज्ञार्थात् । अतस्तदर्थं यज्ञार्थं कर्म कौन्तेय मुक्तसङ्गः कर्मफलसङ्गवर्जितः सन्समाचर निर्वर्तय ॥ ९ ॥

इतश्चाधिकृतेन कर्म कर्तव्यम्—

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥

सहेति । सहयज्ञा यज्ञसहिताः प्रजास्त्रयो वर्णास्ताः सृष्ट्वोत्पाद्य पुरा सर्गादौ

इवाचोक्तवान्प्रजापतिः प्रजानां स्रष्टा, अनेन यज्ञेन प्रसविष्यध्वं प्रसवो वृद्धिरुत्पत्तिस्तां कुरुध्वम्। एष यज्ञो वो युष्माकमस्तु भवत्विष्टकामधुगिष्टानभिप्रेतान्कामान्फलविशेषान्दोग्धीतीष्टकामधुक् ॥ १० ॥

कथम्—

देवान्भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥

देवानिति। देवानिन्द्रादीन्भावयत वर्धयतानेन यज्ञेन ते देवा भावयन्त्वाप्याययन्तु वृष्ट्यादिना वो युष्मानेव परस्परमन्योन्यं भावयन्तः श्रेयः परमपि मोक्षलक्षणं ज्ञानप्राप्तिक्रमेणावाप्स्यथ स्वर्गं वा परं श्रेयोऽवाप्स्यथ ॥ ११ ॥

किञ्च—

*इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ।*
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥

इष्टान्भोगानिति। इष्टानभिप्रेतान्भोगान्हि वो युष्मभ्यं देवा दास्यन्ते वितरिष्यन्ति स्त्रीपशुपुत्रादीन्यज्ञभाविता यज्ञैर्वर्धितास्तोषिता इत्यर्थः। तैर्देवैर्दत्तान्भोगानप्रदायानृण्यमकृत्वेत्यर्थः, एभ्यो देवेभ्यो यो भुङ्क्ते स्वदेहेन्द्रियाण्येव तर्पयति स्तेन एव तस्कर एव स देवादिस्वापहारी ॥ १२ ॥

ये पुनः—

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥

यज्ञेति। देवयज्ञादीन्निर्वर्त्य तच्छिष्टमशनममृताख्यमशितुं शीलं येषां ते यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः सर्वैः पापैश्चुल्ल्यादिपञ्चसूनाकृतैः प्रमादकृतहिंसादिजनितैश्चान्यैः। ये त्वात्मम्भरयो भुञ्जते ते त्वघं पापं स्वयमपि पापा ये पचन्ति पाकं निर्वर्तयन्त्यात्मकारणादात्महेतोः ॥ १३ ॥

इतश्चाधिकृतेन कर्म कर्तव्यम्। जगच्चक्रप्रवृत्तिहेतुर्हि कर्म। कथमिति उच्यते—

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥

अन्नाद्भवन्तीति। अन्नाद्भुक्ताल्लोहितरेतःपरिणतात्प्रत्यक्षं भवन्ति जायन्ते भूतानि, पर्जन्याद्वृष्टेरन्नस्य सम्भवोऽन्नसम्भवः, यज्ञाद्भवति पर्जन्यः—

'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' ॥ इति स्मृतेः ।

(Manu III. 76)

यज्ञोऽपूर्वं स च यज्ञः कर्मसमुद्भवः ऋत्विग्यजमानयोश्च व्यापारः कर्म तत्समुद्भवो यस्य यज्ञस्यापूर्वस्य स यज्ञः कर्मसमुद्भवः ॥ १४ ॥

तच्च—

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥

कर्मेति । कर्म ब्रह्मोद्भवं ब्रह्म वेदः स उद्भवः कारणं यस्य तत्कर्म ब्रह्मोद्भवं विद्धि जानीहि, ब्रह्म पुनर्वेदाख्यमक्षरसमुद्भवम्, अक्षरं ब्रह्म परमात्मा समुद्भवो यस्य तदक्षरसमुद्भवं ब्रह्म वेद इत्यर्थः । यस्मात्साक्षात्परमात्माख्यादक्षरात्पुरुषनिःश्वासवत्समुद्भूतं ब्रह्म तस्मात्सर्वार्थप्रकाशकत्वात्सर्वगतम् । सर्वगतमपि सन्नित्यं सदा यज्ञविधिप्रधानत्वाद्यज्ञे प्रतिष्ठितम् ॥ १५ ॥

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥

एवमिति । एवमित्थमीश्वरेण वेदयज्ञपूर्वकं जगच्चक्रं प्रवर्तितं नानुवर्तयतीह लोके यः कर्मण्यधिकृतः सन्नघायुरघं पापमायुर्जीवनं यस्य सोऽघायुः पापजीवन इति यावत्, इन्द्रियारामः इन्द्रियैरारामः आरमणमाक्रीडा विषयेषु यस्य स इन्द्रियारामो मोघं वृथा हे पार्थ स जीवति । तस्मादज्ञेनाधिकृतेन कर्तव्यमेव कर्मेति प्रकरणार्थः । प्रागात्मज्ञाननिष्ठायोग्यताप्राप्तेस्तादर्थ्येन कर्मयोगानुष्ठानमधिकृतेन अनात्मज्ञेन कर्तव्यमेवेत्येतत् 'न कर्मणामनारम्भात्' (III. 4) इत्यत आरभ्य 'शरीरयात्रापि च ते न प्रसिध्येदकर्मणः' (III. 8) इत्येवमन्तेन प्रतिपाद्य 'यज्ञार्थात्कर्मणोऽन्यत्र' (III. 9) इत्यादिना 'मोघं पार्थ स जीवति' (III. 16) इत्येवमन्तेनापि ग्रन्थेन प्रासङ्गिकमधिकृतस्यानात्मविदः कर्मानुष्ठाने बहुकारणमुक्तं तदकरणे च दोषसंकीर्तनं कृतम् ॥१६॥

एवं स्थिते किमेवं प्रवर्तितं चक्रं सर्वेणानुवर्तनीयमाहोस्वित्पूर्वोक्तकर्मयोगानुष्ठानोपायमप्राप्यानात्मविदा ज्ञानयोगेनैव निष्ठामात्मविद्भिः सांख्यैरनुष्ठेयामप्राप्तेनैवेत्येवमर्थमर्जुनस्य प्रश्नमाशङ्क्य स्वयमेव वा शास्त्रार्थस्य विवेकप्रतिपत्त्यर्थमेतं वै तमात्मानं विदित्वा निवृत्तमिथ्याज्ञानाः सन्तो ब्राह्मणा मिथ्याज्ञानवद्भिरवश्यं कर्तव्येभ्यः पुत्रैषणादिभ्यो व्युत्थायाथ भिक्षाचर्यं शरीरस्थितिमात्रप्रयुक्तं चरन्ति, न तेषामात्मज्ञाननिष्ठाव्यतिरेकेणान्यत्कार्यमस्तीत्येवं (Br Upa. III. 5. 1) श्रुत्यर्थमिह गीताशास्त्रे प्रतिपिपादयिषितमाविष्कुर्वन्नाह भगवान्—

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥

यस्त्विति । यस्तु सांख्य आत्मज्ञाननिष्ठ आत्मरतिरात्मन्येव रतिर्न विषयेषु

यस्य स आत्मरतिरेव स्यादभवेदात्मतृप्तश्चाऽऽत्मनैव तृप्तो नान्नरसादिना मानवो मनुष्य सन्यास्यात्मन्येव च सतुष्ट । सतोषो हि बाह्यार्थलाभे सर्वस्य भवति तमनपेक्ष्यात्मन्येव न सतुष्ट सर्वतो वीततृष्ण इत्येतत् । य ईदृश आत्मवित्तस्य कार्यं करणीय न विद्यते नास्तीत्यर्थ ॥ १७ ॥

किंच—

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रय ॥ १८ ॥

नैवेति । नैव तस्य परमात्मरते कृतेन कर्मणाऽर्थ प्रयोजनमस्ति । अस्तु तर्ह्यकृतेनाकरणेन प्रत्यवायाख्योऽनर्थो नाकृतनेह लोके कश्चन कश्चिदपि प्रत्यवाय प्राप्तिरूप आत्महानिलक्षणो वा नैवास्ति । न चास्य सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु भूतेषु कश्चिदर्थव्यपाश्रय प्रयोजननिमित्तक्रियासाध्यो व्यपाश्रयो व्यपाश्रयणम् । कंचिद्भूतविशेषमाश्रित्य न साध्य कश्चिदर्थोऽस्ति । येन तदर्था क्रियाऽनुष्ठेया स्यात् । न त्वमेतस्मिन्सर्वत. सम्प्लुतोदकस्थानीये सम्यग्दर्शने वर्तसे ॥ १८ ॥

यत एवम्—

तस्मादसक्त सतत कार्यं कर्म समाचर ।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुष. ॥ १९ ॥

तस्मादिति । तस्मादसक्त सङ्गवर्जित सतत सर्वदा कार्यं कर्तव्य नित्यं समाचर निर्वर्तय । असक्तो हि यस्मात्समाचरन्नीश्वरार्थं कर्म कुर्वन्परं मोक्षमाप्नोति पुरुष सत्त्वशुद्धिद्वारेणेत्यर्थ ॥ १९ ॥

यस्माच्च—

कर्मणैव हि संसिद्धिमास्थिता जनकादय ।
लोकसग्रहमेवापि सपश्यन्कर्तुमर्हसि ॥ २० ॥

कर्मणैवेति । कर्मणैव हि यस्मात्पूर्वे क्षत्रिया विद्वांस संसिद्धिं मोक्षं गन्तुमास्थिता प्रवृत्ता जनकादयो जनकाश्वपतिप्रभृतय । यदि ते प्राप्तसम्यग्दर्शनास्ततो लोकसंग्रहार्थं प्रारब्धकर्मत्वात्कर्मणा सहैवासंन्यस्यैव कर्मसंसिद्धिमास्थिता इत्यर्थ । अथाप्राप्तसम्यग्दर्शना जनकादयस्तदा कर्मणा सत्त्वशुद्धिसाधनभूतेन क्रमेण संसिद्धिमास्थिता इति व्याख्येय श्लोक । अथ मन्यसे पूर्वैरपि जनकादिभिरप्यजानद्भिरेव कर्तव्य कर्म कृत तावता नावश्यमन्येन कर्तव्य कृतार्थेनेति तथापि प्रारब्धकर्मायत्तस्त्व लोकसंग्रहमेवापि लोकस्योन्मार्गप्रवृत्तिनिवारण लोकसंग्रहस्तमेवापि प्रयोजन सपश्यन्कर्तुमर्हसि ॥ २० ॥

लोकसंग्रह के वर्तुमर्हति कथं चेत्युच्यते—

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥

यद्यदिति । यद्यत्कर्माचरति येषु येषु श्रेष्ठः प्रधानस्तदेव कर्माचरतीतरोऽन्यो जनः तदनुगतः । किं च स श्रेष्ठो यत्प्रमाणं कुरुते लौकिकं वैदिकं वा लोकस्तदनुवर्तते तदेव प्रमाणीकरोतीत्यर्थः ॥ २१ ॥

यद्यत्र ते लोकसंग्रहकर्तव्यतायां विप्रतिपत्तिस्तर्हि मां किं न पश्यसि—

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥

न मे इति । न मे मम पार्थ नास्ति न विद्यते कर्तव्यं त्रिष्वपि लोकेषु किंचन किंचिदपि । कस्मात्। अनवाप्तमवाप्तव्यं नास्ति तथापि वर्त एव च कर्मण्यहम् ॥२२॥

यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३ ॥

यदि पुनरहं न वर्तेयं जातु कदाचित्कर्मण्यतन्द्रितोऽनलसः सन्मम श्रेष्ठस्य सतो वर्त्म मार्गमनुवर्तन्ते मनुष्या हे पार्थ सर्वशः सर्वप्रकारैः ॥ २३ ॥

तथा च को दोष इत्याह—

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥

उदिति । उत्सीदेयुर्विनश्येयुरिमे सर्वे लोकाः लोकस्थितिनिमित्तस्य कर्मणोऽभावात् न कुर्यां कर्म चेदहम् । किंच संकरस्य च कर्ता स्याम् । तेन कारणेनोपहन्यामिमाः प्रजाः प्रजानामनुग्रहाय प्रवृत्तः उपहतिमुपहननं कुर्यामित्यर्थः । ममेश्वरस्याननुरूपमापद्येत ॥ २४ ॥

यदि पुनरहमिव त्वं कृतार्थबुद्धिरात्मविदन्यो वा तस्याप्यात्मनः कर्तव्याभावेऽपि परानुग्रह एव कर्तव्य इति—

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥

सक्ता इति । सक्ताः कर्मण्यस्य कर्मणः फलं मम भविष्यतीति केचिदविद्वांसो यथा कुर्वन्ति भारत, कुर्याद्विद्वानात्मवित्तथाऽसक्तः सन् । तद्वत्किमर्थं करोति तच्छृणु चिकीर्षुः कर्तुमिच्छुर्लोकसंग्रहम् ॥ २५ ॥

एवं लोकसंग्रहं चिकीर्षोर्न ममात्मविदः कर्तव्यमस्त्यन्यस्य वा लोकसंग्रहं मुक्त्वा। ततस्तस्यात्मविद इदमुपदिश्यते—

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।**
**जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ २६ ॥**

नेति । बुद्धेर्भेदो मयेदं कर्तव्यं भोक्तव्यं चास्य कर्मणः फलमितिनिश्चितरूपाया बुद्धेर्भेदनं चालनं बुद्धिभेदस्तं न जनयेन्नोत्पादयेदज्ञानामविवेकिनां कर्मसङ्गिनां कर्मण्यासक्तानामासङ्गवताम् । किन्तु कुर्यात्जोषयेत्कारयेत्सर्वकर्माणि विद्वान्स्वयं तदेवाविदुषां कर्म युक्तोऽभियुक्तः समाचरन् ॥ २६ ॥

अविद्वानश्च कथं कर्मसु सज्जत इत्याह—

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।**
**अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ २७ ॥**

प्रकृतेरिति । प्रकृतेः प्रकृतिः प्रधानं सत्त्वरजस्तमसां गुणानां साम्यावस्था तस्याः प्रकृतेर्गुणैर्विकारैः कार्यकरणरूपैः क्रियमाणानि कर्माणि लौकिकानि शास्त्रीयाणि च सर्वशः सर्वप्रकारैरहंकारविमूढात्मा कार्यकरणसंघातात्मप्रत्ययोऽहंकारस्तेन विविधं नानाविधं मूढ आत्मान्तःकरणं यस्य सोऽयं कार्यकरणधर्मा कार्यकरणाभिमान्यविद्यया कर्माण्यात्मनि मन्यमानस्तत्तत्कर्मणामहं कर्तेति मन्यते ॥ २७ ॥

यः पुनर्विद्वान्—

**तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।**
**गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥ २८ ॥**

तत्त्वविदिति । तत्त्ववित्तु महाबाहो यस्य तत्त्ववित् गुणकर्मविभागयोर्गुणविभागस्य कर्मविभागस्य च तत्त्वविदित्यर्थः । गुणाः करणात्मका गुणेषु विषयात्मकेषु वर्तन्ते नात्मेति मत्वा न सज्जते सक्तिं न करोति ॥ २८ ॥

ये पुनः—

**प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।**
**तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ॥ २९ ॥**

प्रकृतेरिति । प्रकृतेर्गुणैः सम्यङ्मूढाः संमोहिताः सन्तः सज्जन्ते गुणानां कर्मसु गुणकर्मसु वयं कर्म कुर्मः फलायेति, तान्कर्मसङ्गिनोऽकृत्स्नविदः कर्मफलमात्रदर्शिनो मन्दान्मन्दप्रज्ञान्कृत्स्नविदात्मवित्स्वयं न विचालयेत् बुद्धिभेदकरणमेव चालनं तन्न कुर्यादित्यर्थः ॥ २९ ॥

कथं पुनः कर्मण्यधिकृतेनाज्ञेन मुमुक्षुणा कर्म कर्तव्यमित्युच्यते—

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वर ॥ ३० ॥

मयीति । मयि वासुदेवे परमेश्वरे सर्वज्ञे सर्वात्मनि सर्वाणि कर्माणि सन्यस्य निक्षिप्याध्यात्मचेतसा विवेकबुद्ध्याहं कर्तेश्वराय भृत्यवत्करोमीत्यनया बुद्ध्या । किंच निराशीस्त्यक्ताशीर्निर्ममो ममभावश्च निर्गतो यस्य तव स त्वं निर्ममो भूत्वा युध्यस्व विगतज्वरो विगतसंतापो विगतशोक सन्नित्यर्थ ॥ ३० ॥

यदेतन्मत कर्म कर्तव्यमिति सप्रमाणमुक्त तत्तथा—

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवा ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभि ॥ ३१ ॥

ये म इति । ये मे मदीयमिद मतमनुतिष्ठन्त्यनुवर्तन्ते मानवा मनुष्या श्रद्धावन्त श्रद्दधाना अनसूयन्तोऽसूया च मयि परमगुरौ* वासुदेवेऽकुर्वन्तो मुच्यन्ती तेऽप्येवभूता कर्मभिर्धर्माधर्माख्यै ॥ ३१ ॥

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढास्तान्विद्धि नष्टानचेतस ॥ ३२ ॥

ये त्विति । ये तु तद्विपरीता एतन्मम मतमभ्यसूयन्तो निन्दन्त नानुतिष्ठन्ति नानुवर्तन्ते मे मत सर्वेषु ज्ञानेषु विविध मूढास्ते, सर्वज्ञानविमूढास्तान्विद्धि नष्टान्नाश गतानचेतसोऽविवेकिन ॥ ३२ ॥

कस्मात्पुन कारणात्त्वदीय मत नानुतिष्ठन्ति परधर्माननुतिष्ठन्ति स्वधर्मं च नानुवर्तन्ते, त्वत्प्रतिकूला कथ न बिभ्यति त्वच्छासनातिक्रमदोषात्, तत्राह—

सदृश चेष्टते स्वस्या प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रह: किं करिष्यति ॥ ३३ ॥

सदृशमिति । सदृशमनुरूप चेष्टते चेष्टा करोति कस्य× स्वस्या स्वकीयाया प्रकृते प्रकृतिर्नाम पूर्वकृतधर्माधर्मादिसंस्कारो वर्तमानजन्मादावभिव्यक्त सा प्रकृतिस्तस्या सदृशमेव सर्वो जन्तुर्ज्ञानवानपि किं पुनर्मूर्ख । तस्मात्प्रकृतिं यान्ति भूतानि निग्रह किं करिष्यति मम वान्यस्य वा ॥ ३३ ॥

यदि सर्वो जन्तुरात्मन प्रकृतिसदृशमेव चेष्टते न च प्रकृतिशून्य कश्चिदस्ति तत पुरुषकारस्य विषयानुपपत्ते शास्त्रानर्थक्यप्राप्ताविदमुच्यते—

---

* POA and VPP read परमगुरौ ASS reads गुरौ
× POA and VPP read कस्य ASS reads कस्या

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥

इन्द्रियस्येति । इन्द्रियस्येन्द्रियस्यार्थे सर्वेन्द्रियाणामर्थे शब्दादिविषय इष्टे रागोऽनिष्टे द्वेष इत्येवं प्रतीन्द्रियार्थे रागद्वेषाववश्यंभाविनौ । तत्राय पुरुषकारस्य शास्त्रार्थस्य च विषय उच्यते। शास्त्रार्थे प्रवृत्त' पूर्वमेव रागद्वेषयोर्वशं नागच्छेत् । या हि पुरुषस्य प्रकृति. सा रागद्वेषपुर'सरैव स्वकार्ये पुरुष प्रवर्तयति तदा स्वधर्मपरित्याग' परधर्मानुष्ठानं च भवति । यदा पुना रागद्वेषौ तत्प्रतिपक्षेण नियमयति तदा शास्त्रदृष्टिरेव पुरुषो भवति न प्रकृतिवश' । तस्मात्तयो रागद्वेषयोर्वशं नागच्छेत् । यतस्तौ ह्यस्य पुरुषस्य परिपन्थिनौ श्रेयोमार्गस्य विघ्नकर्तारौ तस्कराविव पथीत्यर्थ ॥ ३४ ॥

तत्र रागद्वेषप्रयुक्तो मन्यते शास्त्रार्थमप्यन्यथा परधर्मोऽपि धर्मत्वादनुष्ठेय एवेति तदसत्—

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेय' परधर्मो भयावहः ॥ ३५ ॥

श्रेयानिति । श्रेयान्प्रशस्यतर स्वो धर्म स्वधर्मो विगुणोऽपि विगतगुणोऽप्यनुष्ठीयमान परधर्मात्स्वनुष्ठितात्साद्गुण्येन सपादितादपि, स्वधर्मे स्थितस्य निधन मरण मपि श्रेय परधर्मे स्थितस्य जीवितात्, कस्मात्परधर्मो भयावह', नरकादिलक्षण भयमावहति यत' ॥ ३५ ॥

यद्यप्यनर्थमूलं ध्यायतो विषयान्पुंस इति (II 62) रागद्वेषौ ह्यस्य परिपन्थिनाविति (III 34) चोक्त विक्षिप्तमनवधारित च तदुक्त तत्संक्षिप्त निश्चित चेदमेवेति ज्ञातुमिच्छन्नर्जुन उवाच ज्ञाते हि तस्मिंस्तदुच्छेदाय यत्न कुर्यामिति—

## अर्जुन उवाच—

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥

अथेति । अथ केन हेतुभूतेन प्रयुक्त, सन्राज्ञेव भृत्योऽयं पाप। कर्म चरत्याचरति पूरुष' पुरुष स्वयमनिच्छन्नपि हे वार्ष्णेय वृष्णिकुलप्रसूत बलादिव नियोजितो राज्ञेवेत्युक्तो दृष्टान्त ॥ ३६ ॥

शृणु त्व त वैरिणं सर्वानर्थकर य त्व पृच्छसि इति—

## श्रीभगवानुवाच

"ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रिय' ।
वैराग्यस्याथ मोक्षस्य षण्णां भग इतीङ्गना ॥"

ऐश्वर्यादिषट्कं यस्मिन्वासुदेवे नित्यमप्रतिबद्धत्वेन सामस्त्येन च वर्तते ।

" उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥ "

उत्पत्त्यादिविषयं च विज्ञानं यस्य स वासुदेवो वाच्यो भगवानिति ।*

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥

काम इति । काम एष सर्वलोकशत्रुर्यन्निमित्ता सर्वानर्थप्राप्तिः प्राणिनां स एष कामः प्रतिहतः केनचित्क्रोधत्वेन परिणमते । अतः क्रोधोऽप्येष एव । रजोगुणसमुद्भवो रजश्च तद्गुणश्च स रजोगुणः स समुद्भवो यस्य स कामो रजोगुणसमुद्भवो रजोगुणस्य वा समुद्भवः । कामो ह्युद्भूतो रजः प्रवर्तयन्पुरुषं प्रवर्तयति । तृष्णया ह्यहं कारित इति दुःखिनां रजःकार्ये सेवादौ प्रवृत्तानां प्रलापः श्रूयते । महाशनो महदशनमस्येति महाशनोऽत एव महापाप्मा । कामेन हि प्रेरितो जन्तुः पापं करोति । अतो विद्ध्येनं काममिह संसारे वैरिणम् ॥ ३७ ॥

कथं वैरीति दृष्टान्तैः प्रत्याययति—

धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥

धूमेनेति । धूमेन सहजेनाव्रियते वह्निः प्रकाशात्मकोऽप्रकाशात्मकेन यथा वादर्शो मलेन च यथोल्बेन गर्भवेष्टनेन जरायुणावृत आच्छादितो गर्भस्तथा तेनेदमावृतम् ॥३८॥

किं पुनस्तदिदंशब्दवाच्यं यत्कामेनावृतमित्युच्यते—

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥

आवृतमिति । आवृतमेतेन ज्ञानं ज्ञानिनो नित्यवैरिणा । ज्ञानी हि जानात्यनेनाहमनर्थे प्रयुक्तः पूर्वमेवेति× । दुःखी च भवति नित्यमेव । अतोऽसौ ज्ञानिनो नित्यवैरी न तु मूर्खस्य । स हि कामं तृष्णाकाले मित्रमिव पश्यंस्तत्कार्ये

* The explanation of 'भगवान्' is printed in POA and VPP after the verse (37) But as it has to do only with *the word भगवान् we print it as done in ASS. It* seems to be an interpolation.

× POA puts पूर्वमेव between हि and जानाति POA has अतः before दुःखी

दु खे प्राप्ते जानाति तृष्णयाह दु खित्वमापादित इति न पूर्वमेवातो ज्ञानिन एव नित्यवैरी । किंरूपेण कामरूपेण काम इच्छैव रूपमस्येति कामरूपस्तेन दुष्पूरण दुखेन पूरणमस्येति दुष्पूरस्तेनानलेन नास्याल पर्याप्तिर्विद्यत इत्यनलस्तेन च ॥ ३९ ॥

किमधिष्ठान पुन कामो ज्ञानस्यावरणत्वेन वैरी सर्वस्येत्यपेक्षायामाह ज्ञाते हि शत्रोरधिष्ठाने सुखेन शत्रुनिबर्हण कर्तुं शक्यत इति—

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥

इन्द्रियाणीनि । इन्द्रियाणि मनो बुद्धिश्चास्य कामस्याधिष्ठानमाश्रय उच्यते । एतैरिन्द्रियादिभिराश्रयैर्विमोहयति विविध मोहयत्येष कामो ज्ञानमावृत्याच्छाद्य देहिन शरीरिणम् ॥ ४० ॥

यत एवम्—

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मान प्रजहिह्येन ज्ञानविज्ञाननाशनम् ॥ ४१ ॥

तस्मादिति । तस्मात्त्वमिन्द्रियाण्यादौ पूर्वं नियम्य वशीकृत्य भरतर्षभ पाप्मान पापाचार काम प्रजहिहि परित्यज, एन प्रकृत वैरिण ज्ञानविज्ञाननाशन ज्ञान शास्त्रत आचार्यतश्चात्मादीनामवबोध, विज्ञान विशेषतस्तदनुभवस्तयोर्ज्ञानविज्ञानयो श्रेय प्राप्तिहेत्वोर्नाशन प्रजहिह्यात्मन परित्यजेत्यर्थ ॥ ४१ ॥

इन्द्रियाण्यादौ नियम्य काम शत्रु जहिहीत्युक्त तत्र किमाश्रय काम जह्यादित्युच्यते—

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः पर मन ।
मनसस्तु परा बुद्धिर्यो बुद्धे परतस्तु स ॥ ४२ ॥

इन्द्रियाणीति । इन्द्रियाणि श्रोत्रादीनि पञ्च देह स्थूल बाह्य परिच्छिन्न चापेक्ष्य सौक्ष्म्यान्तरस्थत्वव्यापित्वाद्यपेक्ष्य पराणि प्रकृष्टान्याहु पण्डिता । तथेन्द्रियेभ्य पर मन सकल्पविकल्पात्मकम् । तथा मनसस्तु परा बुद्धिर्निश्चयात्मिका । तथा य सर्वदृश्येभ्यो बुद्ध्यन्तेभ्योऽभ्यन्तरो य देहिनमिन्द्रियादिभिराश्रयैर्युक्त कामो ज्ञानावरण द्वारेण मोहयतीत्युक्त स बुद्धेर्द्रष्टा परमात्मा* ॥ ४२ ॥

एव बुद्धे पर बुद्ध्वा सस्तभ्यात्मानमात्मना ।
जहि शत्रु महाबाहो कामरूप दुरासदम् ॥ ४३ ॥

इति श्रीमहाभारते शतसाहस्र्या संहितायां वैयासक्या+ भीष्मप-

---

* POA and VPP read पर आत्मा

\+ Ibid-वैयासिक्याम्

ऐश्वर्यादिषट्कं यस्मिन्वासुदेवे नित्यमप्रतिबद्धत्वेन सामस्त्येन च वर्तते ।

" उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥ "

उत्पत्त्यादिविषयं च विज्ञानं यस्य स वासुदेवो वाच्यो भगवानिति ।*

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥

काम इति । काम एष सर्वलोकशत्रुर्यन्निमित्ता सर्वानर्थप्राप्तिः प्राणिनां स एष कामः प्रतिहतः केनचित्क्रोधत्वेन परिणमते । अतः क्रोधोऽप्येष एव । रजोगुणसमुद्भवो रजश्च तद्गुणश्च स रजोगुणः स समुद्भवो यस्य स कामो रजोगुणसमुद्भवो रजोगुणस्य वा समुद्भवः । कामो ह्युद्भूतो रजः प्रवर्तयन्पुरुषं प्रवर्तयति । तृष्णया ह्यहं कारित इति दुःखिनां रजःकार्ये सेवादौ प्रवृत्तानां प्रलापः श्रूयते । महाशनो महदशनमस्येति महाशनोऽत एव महापाप्मा । कामेन हि प्रेरितो जन्तुः पापं करोति । अतो विद्ध्येनं काममिह संसारे वैरिणम् ॥ ३७ ॥

कथं वैरीति दृष्टान्तैः प्रत्याययति—

धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥

धूमेनेति । धूमेन सहजेनाव्रियते वह्निः प्रकाशात्मकोऽप्रकाशात्मकेन यथा वादर्शो मलेन च यथोल्बेन गर्भवेष्टनेन जरायुणावृत आच्छादितो गर्भस्तथा तेनेदमावृतम् ॥३८॥

किं पुनस्तदिदंशब्दवाच्यं यत्कामेनावृतमित्युच्यते—

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥

आवृतमिति । आवृतमेतेन ज्ञानं ज्ञानिनो नित्यवैरिणा । ज्ञानी हि जानात्यनेनाहमनर्थे प्रयुक्तः पूर्वमेवेति× । दुःखी च भवति नित्यमेव । अतोऽसौ ज्ञानिनां नित्यवैरी न तु मूर्खस्य । स हि कामं तृष्णाकाले मित्रमिव पश्यंस्तत्कार्ये

* The explanation of 'भगवान्' is printed in POA and VPP after the verse (37) But as it has to do only with the word भगवान् we print it as done in ASS It seems to be an interpolation.

× POA puts पूर्वमेव between हि and जानाति POA has अत before दुःखी

दु खे प्राप्ते जानाति तृष्णयाह दु खित्वमापादित इति न पूर्वमेवातो ज्ञानिन एव नित्यवैरी । किरूपेण कामरूपेण काम इच्छैव रूपमस्येति कामरूपस्तेन दुष्पूरेण दु खेन पूरणमस्येति दुष्पूरस्तेनानलेन नास्यालं पर्याप्तिर्विद्यत इत्यनलस्तेन च ॥ ३९ ॥

किमधिष्ठान पुन कामो ज्ञानस्यावरणत्वेन वैरी सर्वस्येत्यपेक्षायामाह ज्ञाते हि शत्रोरधिष्ठाने सुखेन शत्रुनिबर्हण कर्तुं शक्यत इति—

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥

इन्द्रियाणीति । इन्द्रियाणि मनो बुद्धिश्चास्य कामस्याधिष्ठानमाश्रय उच्यते । एतैरिन्द्रियादिभिराश्रयैर्विमोहयति विविध मोहयत्येष कामो ज्ञानमावृत्याच्छाद्य देहिन शरीरिणम् ॥ ४० ॥

यत एवम्—

तस्मात्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मान प्रजहिह्येन ज्ञानविज्ञाननाशनम् ॥ ४१ ॥

तस्मादिति । तस्मात्त्वमिन्द्रियाण्यादौ पूर्वं नियम्य वशीकृत्य भरतर्षभ पाप्मान पापाचार काम प्रजहिहि परित्यज, एन प्रकृत वैरिण ज्ञानविज्ञाननाशन ज्ञान शास्त्रत आचार्यतश्चात्मादीनामवबोध, विज्ञान विशेषतस्तदनुभवस्तयोर्ज्ञानविज्ञानयो श्रेय प्राप्तिहेत्वोर्नाशन प्रजहिह्यात्मन परित्यजेत्यर्थ ॥ ४१ ॥

इन्द्रियाण्यादौ नियम्य काम शत्रु जहिहीत्युक्त तत्र किमाश्रय काम जह्यादित्युच्यते—

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः पर मन ।
मनसस्तु परा बुद्धिर्यो बुद्धे परतस्तु स ॥ ४२ ॥

इन्द्रियाणीति । इन्द्रियाणि श्रोत्रादीनि पञ्च देह स्थूल बाह्य परिच्छिन्न चापेक्ष्य सौक्ष्म्यान्तरत्वव्यापित्वाद्यपेक्ष्य पराणि प्रकृष्टान्याहु पण्डिता । तथेन्द्रियेभ्य पर मन सकल्पविकल्पात्मकम् । तथा मनसस्तु परा बुद्धिर्निश्चयात्मिका । तथा य सर्वदृश्येभ्यो बुद्ध्यन्तेभ्योऽभ्यन्तरो य देहिनमिन्द्रियादिभिराश्रयैर्युक्त कामो ज्ञानावरण द्वारेण मोहयतीत्युक्त स बुद्धेर्द्रष्टा परमात्मा* ॥ ४२ ॥

एव बुद्धे परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रु महाबाहो कामरूपं दुरासदम् ॥ ४३ ॥

इति श्रीमहाभारते शतसाहस्र्या संहितायां वैयासक्या+ भीष्मप-

* POA and VPP read पर आत्मा

+ Ibid–वैयासिक्याम्

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योग-
शास्त्रे श्रीकृष्णार्जुनसंवादे कर्मयोगो नाम
तृतीयोऽध्यायः ॥ ३ ॥

एवमिति। एवं बुद्धेः परमात्मानं बुद्ध्वा ज्ञात्वा संस्तभ्य सम्यक्स्तम्भनं कृत्वा स्वेनैवात्मना संस्कृतेन मनसा सम्यक्समाधायेत्यर्थः। जहि एनं शत्रुं हे महाबाहो कामरूपं दुरासदं दुःखेनासद आसादनं प्राप्तिर्यस्य तं दुरासदं दुर्विज्ञेयानेकविशेषमिति ॥ ४३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः
कृतौ श्रीभगवद्गीताभाष्ये कर्मप्रशंसायोगो
नाम तृतीयोऽध्यायः ॥ ३ ॥

# अथ चतुर्थोऽध्यायः ॥ ४ ॥

श्रीभगवानुवाच—

योऽयं योगोऽध्यायद्वयेनोक्तो ज्ञाननिष्ठालक्षणःससंन्यासः कर्मयोगोपायो यस्मिन्वेदार्थः परिसमाप्तः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च, गीतासु च सर्वास्वयमेव योगो विवक्षितो भगवताऽतः परिसमाप्तं वेदार्थं मन्वानस्तं वंशकथनेन स्तौति श्रीभगवान्–

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् । ॥ १ ॥

इममध्यायद्वयेनोक्तं योगं विवस्वत आदित्याय सर्गादौ प्रोक्तवानहं जगत्परिपालयितॄणां क्षत्रियाणां बलाधानाय । तेन योगबलेन युक्ताः समर्था भवन्ति ब्रह्म परिरक्षितुम् । ब्रह्मक्षत्रे परिपालिते* जगत्परिपालयितुमलम् । अव्ययमव्ययफलत्वात् । न ह्यस्य योगस्य× सम्यग्दर्शननिष्ठालक्षणस्य मोक्षाख्यं फलं व्येति । स च विवस्वान्मनवे प्राह मनुरिक्ष्वाकवे स्वपुत्रायादिराजायाब्रवीत् ॥ १ ॥

एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परंतप ॥ २ ॥

एवमिति । एवं क्षत्रियपरम्पराप्राप्तमिमं राजर्षयो राजानश्च त ऋषयश्च राजर्षयो विदुरिमं योगम् । स योगः कालेनेह महता दीर्घेण नष्टो विच्छिन्नसंप्रदायः संवृत्तो हे परंतप, आत्मनो विपक्षभूताः परा+ उच्यन्ते तान्शौर्यतेजोगभस्तिभिर्भानुरिव तापयतीति परंतपः शत्रुतापन इत्यर्थः ॥ २ ॥

दुर्बलानजितेन्द्रियान्प्राप्य नष्टं योगमिममुपलभ्य लोकं चापुरुषार्थसंबन्धिनम्–

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

---

* POA drops "परिपालिते जगत्."

× ASS drops 'योगस्य' which is necessary.

+ ASS reads परे.

स एवायमिति । स एवाय मया ते तुभ्यमद्येदानीं योग. प्रोक्त पुरातन', भक्तोऽसि मे सखा चासीति । रहस्य हि यस्मादेतदुत्तम योगो ज्ञानमित्यर्थं ॥ ३ ॥

भगवता विप्रतिषिद्धमुक्तमिति मा भूत्कस्यचिद्बुद्धिरिति परिहारार्थं चोद्य मिव कुर्वन्—

## अर्जुन उवाच—

अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥

अपरमिति । अपरमर्वाग्वसुदेवगृहे भवतो जन्म पर पूर्वं सर्गादौ जन्मोत्पत्ति-र्विवस्वत आदित्यस्य तत्कथमेतद्विजानीयामविरुद्धार्थतया यस्त्वमेवादौ प्रोक्तवानिम योग स एव त्वमिदानी मह्य प्रोक्तवानसीति ॥ ४ ॥

या वासुदेवेऽनीश्वरासर्वज्ञाशङ्का मूर्खाणा ता परिहरञ्छ्रीभगवानुवाच यदर्थो ह्यर्जुनस्य प्रश्न —

## श्री भगवानुवाच—

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥

बहूनीति । बहूनि मे मम व्यतीतान्यतिक्रान्तानि जन्मानि तव च हेऽर्जुन तान्यह वेद जाने सर्वाणि न त्व वेत्थ जानीषे धर्माधर्मादिप्रतिबद्धज्ञानशक्तित्वात् । अह पुनर्नित्यशुद्धबुद्धमुक्तस्वभावत्वादनावरणज्ञानशक्तिरिति वेदाह हे परतप ॥ ५ ॥

कथ तर्हि तव नित्येश्वरस्य धर्माभावेऽपि जन्मेत्युच्यते—

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥

अजोऽपीति । अजोऽपि जन्मरहितोऽपि सन्तथाऽव्ययात्माक्षीणज्ञानशक्तिस्व-भावोऽपि सन्तथा भूताना ब्रह्मादिस्तम्बपर्यन्तानामीश्वर ईशनशीलोऽपि सन् प्रकृतिं स्वां मम वैष्णवीं मायां त्रिगुणात्मिका यस्या वशे सर्वं जगद्वर्तते यया मोहित सत्स्वमात्मान वासुदेव न जानाति तां प्रकृतिं स्वामधिष्ठाय वशीकृत्य सभवामि देहवानिव भवामि जात इवात्ममाययात्मनो मायया न परमार्थतो लोकवत् ॥६॥

तच्च जन्म कदा किमर्थं चेत्युच्यते—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ७ ॥

यदेति । यदा यदा हि धर्मस्य ग्लानिर्हानिर्वर्णाश्रमादिलक्षणस्य प्राणिनामभ्युदयनिःश्रेयससाधनस्य भवति भारत, अभ्युत्थानमुद्भवोऽधर्मस्य तदात्मानं सृजाम्यहं मायया ॥ ७ ॥

किमर्थम्—

**परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।**
**धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥**

परित्राणायेति । परित्राणाय परिरक्षणाय साधूनां सन्मार्गस्थानां विनाशाय च दुष्कृतां पापकारिणाम् । किं च धर्मसंस्थापनार्थाय धर्मस्य सम्यक्स्थापनं धर्मसंस्थापनं तदर्थं संभवामि युगे युगे प्रतियुगम् ॥ ८ ॥

तत्—

**जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।**
**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥**

जन्मेति । जन्म मायारूपं, कर्म च साधुपरित्राणादि, मे मम दिव्यमप्राकृतमैश्वरमेवं यथोक्तं यो वेत्ति तत्त्वतस्तत्त्वेन यथावत्त्यक्त्वा देहमिमं पुनर्जन्म पुनरुत्पत्तिं नैति न प्राप्नोति मामेत्यागच्छति स मुच्यते हेऽर्जुन ॥ ९ ॥

नैष मोक्षमार्ग इदानीं प्रवृत्तः किं तर्हि पूर्वमपि—

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥**

वीतरागेति । वीतरागभयक्रोधा रागश्च भयं च क्रोधश्च वीता विगता येभ्यस्ते वीतरागभयक्रोधा मन्मया ब्रह्मविद ईश्वराभेददर्शिनो मामेव परमेश्वरमुपाश्रिताः केवलज्ञाननिष्ठा इत्यर्थः । बहवोऽनेके ज्ञानतपसा ज्ञानमेव च परमात्मविषयं तपस्तेन ज्ञानतपसा पूताः परां शुद्धिं गताः सन्तो मद्भावमीश्वरभावं मोक्षमागताः समनुप्राप्ताः । इतरतपोनिरपेक्षज्ञाननिष्ठा इत्यस्य लिङ्गं ज्ञानतपसेति विशेषणम् ॥ १० ॥

तव तर्हि रागद्वेषौ स्तः, येन केभ्यश्चिदेवात्मभावं प्रयच्छसि न सर्वेभ्य इत्युच्यते—

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥**

ये यथेति । ये यथा येन प्रकारेण येन प्रयोजनेन यत्फलार्थितया मां प्रपद्यन्ते तांस्तथैव तत्फलदानेन भजाम्यनुगृह्णाम्यहमित्येतत् । तेषां मोक्षं प्रत्यनर्थित्वात् । न ह्येकस्य मुमुक्षुत्वं फलार्थित्वं च युगपत्संभवति । अतो ये फलार्थिनस्तान्फलप्रदानेन । ये यथोक्तकारिणस्त्वफलार्थिनो मुमुक्षवश्च तान्ज्ञानप्रदानेन, ये ज्ञानिनः संन्यासिनो मुमुक्षवश्च तान्मोक्षप्रदानेन, तथार्तानार्तिहरणेनेत्येवं यथा प्रपद्यन्ते ये

तांस्तथैव भजामीत्यर्थः । न पुनः रागद्वेषनिमित्तं मोहनिमित्तं वा कंचिद्भजामि। सर्वथापि सर्वावस्थस्य ममेश्वरस्य वर्त्म मार्गमनुवर्तन्ते मनुष्याः । यत्फलार्थितया यस्मिन्कर्मण्यधिकृता ये प्रवर्तन्ते ते मनुष्या अत्र उच्यन्ते हे पार्थ सर्वशः सर्वप्रकारैः ॥ ११ ॥

यदि तवेश्वरस्य रागादिदोषाभावात्सर्वप्राणिष्वनुजिघृक्षायां तुल्यायां सर्वफलप्रदान समर्थे च त्वयि सति वासुदेवः सर्वमिति ( VII. 19 ) ज्ञानेनैव मुमुक्षवः सन्त कस्मात्त्वामेव सर्वे न प्रतिपद्यन्त इति शृणु तत्र कारणम्—

काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥

काङ्क्षन्त इति । काङ्क्षन्तोऽभीप्सन्तः कर्मणां सिद्धिं फलनिष्पत्तिं प्रार्थयन्तो यजन्त इहास्मिँल्लोके देवता इन्द्राग्न्याद्याः "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्यो ऽहमस्मीति न स वेद यथा पशुरेव स देवानाम्" इति श्रुतेः ( Br Upa. 1 4 40 ) । तेषां हि भिन्नदेवतायाजिनां फलाकाङ्क्षिणां क्षिप्रं शीघ्रं हि यस्मान्मानुषे लोके, मनुष्यलोके हि शास्त्राधिकारः । क्षिप्रं हि मानुषे लोक इति विशेषणादन्येष्वपि कर्मफलसिद्धिं दर्शयति भगवान् । मानुषे लोके वर्णाश्रमादिकर्माणीति* शेषः, तेषां वर्णाश्रमाद्यधिकारिकर्मणां फलसिद्धिः क्षिप्रं भवति कर्मजा कर्मणो जाता ॥ १२ ॥

मानुष एव लोके वर्णाश्रमादिकर्माधिकारो नान्येषु लोकेष्विति नियमः किंनिमित्त इति, अथवा वर्णाश्रमादिप्रविभागोपेता मनुष्या मम वर्त्मानुवर्तन्ते सर्वश इत्युक्त कस्मात्पुनः कारणान्नियमेन तवैव वर्त्मानुवर्तन्ते नान्यस्येत्युच्यते—

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥

चातुर्वर्ण्यमिति । चातुर्वर्ण्यं चत्वार एव वर्णाश्चातुर्वर्ण्यं मयेश्वरेणसृष्टमुत्पादित "ब्राह्मणोऽस्य मुखमासीत्" ( RV X. 10 12 ) इत्यादिश्रुतेः, गुणकर्मविभागशो गुणविभागशः कर्मविभागशश्च गुणाः सत्त्वरजस्तमांसि । तत्र सात्त्विकस्य सत्त्वप्रधानस्य ब्राह्मणस्य शमो दमस्तप इत्यादीनि कर्माणि ( XVIII. 42 ) । सत्त्वोपसर्जनरजःप्रधानस्य क्षत्रियस्य शौर्यतेजःप्रभृतीनि कर्माणि ( XVIII. 43 )। तमउपसर्जनरजःप्रधानस्य वैश्यस्य कृष्यादीनि कर्माणि ( XVIII. 44 ) । रजउपसर्जनतमःप्रधानस्य शूद्रस्य शुश्रूषैव कर्मेत्येवं ( XVIII. 44 ) गुणकर्मविभागशश्चातुर्वर्ण्यं मया सृष्टमित्यर्थः । तच्चेदं चातुर्वर्ण्यं नान्येषु लोकेष्वतो मानुषे लोक

* POA and VPP—विशेष for शेष

इति विशेषणम् । हन्त तर्हि चातुर्वर्ण्यसर्गादे कर्मण कर्तृत्वात्तत्फलेन युज्यसेऽतो न त्वं नित्यमुक्तो नित्येश्वर इति । उच्यते । यद्यपि मायासव्यवहारेण तस्य कर्मण कर्तारमपि सन्त मा परमार्थतो विद्ध्यकर्तारमत एवाव्ययमससारिण च मा विद्धि ॥ १३ ॥

येषा तु कर्मणा कर्तार मा मन्यसे परमार्थतस्तेषामकर्तैवाह यत —

**न मा कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।**
**इति मा योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४ ॥**

नेति । न मा तानि कर्माणि लिम्पन्ति देहाद्यारम्भकत्वेनाहकाराभावात् । न च तेषा कर्मणा फलेषु मे स्पृहा तृष्णा । येषा तु ससारिणामह कर्तेत्यभिमान कर्मसु स्पृहा तत्फलेषु च तान्कर्माणि लिम्पन्तीति युक्त तदभावान्न मा कर्माणि लिम्पन्तीत्येव योऽन्योऽपि मामात्मत्वेनाभिजानाति नाह कर्ता न मे कर्मफले स्पृहेति स कर्मभिर्न बध्यते । तस्यापि न देहाद्यारम्भकाणि कर्माणि भवन्तीत्यर्थ ॥ १४ ॥

नाह कर्ता न मे कर्मफले स्पृहेति—

**एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।**
**कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतर कृतम् ॥ १५ ॥**

एवमिति । एव ज्ञात्वा कृत कर्म पूर्वैरप्यतिक्रान्तैर्मुमुक्षुभि , कुरु तेन कर्मैव त्व न तूष्णीमासन नापि सन्यास कर्तव्यस्तस्मात्त्व पूर्वैरप्यनुष्ठितत्वाद्यद्यनात्मज्ञस्त्व तदात्मशुद्ध्यर्थं तत्त्वविच्चेल्लोकसग्रहार्थं पूर्वैर्जनकादिभि पूर्वतर कृत नाधुनातन कृत निर्वर्तितम् ॥ १५ ॥

तत्र कर्म चेत्कर्तव्य त्वद्वचनादेव करोम्यह किं विशेषितेन पूर्वै पूर्वतर कृत-मित्युच्यते यस्मान्महद्वैषम्य कर्मणि कथम्—

**कि कर्म किमकर्मेति कवयोऽप्यत्र मोहिता ।**
**तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥**

किं कर्मेति । किं कर्म किं चाकर्मेति कवयो मेधाविनोऽप्यत्रास्मिन्कर्मादिविषये मोहिता मोह गता तद् अतस्ते तुभ्यमह कर्माकर्म च प्रवक्ष्यामि यज्ज्ञात्वा विदित्वा कर्मादि मोक्ष्यसेऽशुभात्ससारात् ॥ १६ ॥

न चैतत्त्वया मन्तव्य, कर्म नाम देहादिचेष्टा लोकप्रसिद्धमकर्म तदक्रिया तूष्णी-मासन किं तत्र बोद्धव्यमिति । कस्मादुच्यते—

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्य च विकर्मण ।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गति ॥ १७ ॥**

कर्मण इति । कर्मणः शास्त्रविहितस्य हि यस्मादप्यस्ति बोद्धव्यं बोद्धव्यं चास्त्येव विकर्मणः प्रतिषिद्धस्य तथाकर्मणश्च तूष्णींभावस्य बोद्धव्यमस्तीति त्रिष्वप्यध्याहारः कर्तव्यो यस्माद्गहना विषमा दुर्ज्ञाना, कर्मण इत्युपलक्षणार्थं कर्मादीनां कर्माकर्मविकर्मणां गतिर्याथात्म्यं तत्त्वमित्यर्थः ॥ १७ ॥

I. किं पुनस्तत्त्वं कर्मादेर्यद्बोद्धव्यं वक्ष्यामीति प्रतिज्ञातमुच्यते—

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८ ॥

कर्मणीति । कर्मणि कर्म क्रियत इति व्यापारमात्रं तस्मिन्कर्मण्यकर्म **कर्माभावं** यः पश्येदकर्मणि च कर्माभावे कर्तृतन्त्रत्वात्प्रवृत्तिनिवृत्त्योर्वस्त्वप्राप्यैव हि सर्व एव क्रियाकारकादिव्यवहारोऽविद्याभूमावेव कर्म यः पश्येत्पश्यति स बुद्धिमान्मनुष्येषु स युक्तो योगी कृत्स्नकर्मकृत्समस्तकर्मकृच्च **स इति स्तूयते** कर्माकर्मणोरितरेतरदर्शी ।

II ननु किमिदं विरुद्धमुच्यते कर्मण्यकर्म यः पश्येदित्यकर्मणि च कर्मेति । न हि कर्माकर्म स्यादकर्म वा कर्म तत्र विरुद्धं कथं पश्येद्द्रष्टा । **न, अकर्मैव परमार्थतः सत्कर्मवदवभासते मूढदृष्टेर्लोकस्य तथा कर्मैवाकर्मवत्,** तत्र यथाभूतदर्शनार्थमाह भगवान्कर्मण्यकर्म यः पश्येदित्यादि । अतो न विरुद्धम् । बुद्धिमत्त्वाद्युपपत्तेश्च बोद्धव्यमिति च यथाभूतदर्शनमुच्यते । न च विपरीतज्ञानादशुभान्मोक्षणं स्याद्यज्ज्ञात्वा मोक्ष्यसेऽशुभादिति चोक्तम् । तस्मात्कर्माकर्मणी विपर्ययेण गृहीते प्राणिभिस्तद्विपर्ययग्रहणनिवृत्त्यर्थं भगवतो वचनं 'कर्मण्यकर्म यः' इत्यादि । न चात्र कर्माधिकरणमकर्मास्ति कुण्डे बदराणीव नाप्यकर्माधिकरणं कर्मास्ति कर्माभावत्वादकर्मणः । अतो विपरीतगृहीते एव कर्माकर्मणी लौकिकैर्यथा मृगतृष्णिकायामुदकं शुक्तिकायां वा रजतम् ।

---

I. Sankara's Interpretation

As the soul is really no agent and as all actions are due to only the Nescience, he who realizes that there is no action in what the ignorant people think to be action and that there is action in what they think to be absence of action is talented among men, is possessed of the Yoga and should be praised as being one who has done all actions ( rites, ceremonies ), though really he will abstain from doing any action at all

II There is no inconsistency or self-contradiction involved in the statement Nor is the loc. in karmani and akarmani to be understood as referring to adhikarana ( *a substratum* ) *

III. ननु कर्म कर्मैव सर्वेषां न क्वचिद्व्यभिचरति । तन्न, नौस्थस्य नावि गच्छन्त्यां तटस्थेष्वगतिषु नगेषु प्रतिकूलगतिदर्शनाद्दूरेषु चक्षुषासन्निकृष्टेषु गच्छत्सु गत्यभावदर्शनात् । एवमिहाप्यकर्मण्यहं करोमीति कर्मदर्शनं कर्मणि चाकर्मदर्शनं विपरीतदर्शनं येन तन्निराकरणार्थमुच्यते कर्मण्यकर्म य पश्येदित्यादि ।

IV तदेतदुक्तप्रतिवचनमप्यसकृदत्यन्तविपरीतदर्शनभाविततया मोमुह्यमानो लोक श्रुतमप्यसकृत्तत्त्वं विस्मृत्य विस्मृत्य मिथ्याप्रसङ्गमवतार्यावतार्य चोदयतीति पुन पुनरुत्तरमाह भगवान्दुर्विज्ञेयत्वं चालक्ष्य वस्तुन । अव्यक्तोऽयमचिन्त्योऽय न जायते म्रियते (II. 20, 25) इत्यादिनात्मनि कर्माभावः श्रुतिस्मृतिन्यायप्रसिद्ध उक्तो वक्ष्यमाणश्च । तस्मिन्नात्मनि कर्माभावेऽकर्मणि कर्मविपरीतदर्शनमत्यन्तनिरूढम् ।

V यत 'किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिता' देहाद्याश्रय कर्मात्मन्यध्यारोप्याहं कर्ता ममैतत्कर्म मयास्य फलं भोक्तव्यमिति च । तथाहं तूष्णीं भवामि येनाहं निरायासोऽकर्मा सुखी स्यामिति कार्यकरणाश्रय व्यापारोपरमं तत्कृतं च सुखित्वमात्मन्यध्यारोप्य न करोमि किंचित्तूष्णीं सुखमासमित्यभिमन्यते लोक । तत्रेद लोकस्य विपरीतदर्शनापनयनायाह भगवान्कर्मण्यकर्म य. पश्येदित्याह । अत्र च कर्म कर्मैव सत्कार्यकरणाश्रय कर्मरहितेऽविक्रिय आत्मनि सर्वैरध्यस्त यतः पण्डितोऽप्यहं करोमीति मन्यते । अत आत्मसमवेततया सर्वलोकप्रसिद्धे कर्मणि नदीकूलस्थेष्विव वृक्षेषु गति प्रतिलोम्येनाकर्म कर्माभाव यथाभूत गत्यभावमिव वृक्षेषु यः पश्येदकर्मणि च कार्यकरणव्यापारोपरमे कर्मवदात्मन्यध्यारोपिते तूष्णीमकुर्वन्सुखमास इत्यहंकाराभिसंधिहेतुत्वात्तस्मिन्नकर्मणि च कर्म य· पश्येत् । य· एव कर्माकर्मविभागज्ञः स बुद्धिमान्पण्डितो मनुष्येषु स युक्तो योगी कृत्स्नकर्मकृच्च सोऽशुभान्मोक्षित कृतकृत्यो भवतीत्यर्थ ।

VI अथ श्लोकोऽन्यथा व्याख्यात कैश्चित्, कथ, नित्यानां किल कर्मणामीश्वरार्थेऽनुष्ठीयमानाना तत्फलाभावादकर्माणि तान्युच्यन्ते गौण्या वृत्त्या । तेषा

---

III. Examples of cases where people misunderstand action or absence of action—(aciton in the form of *going*)

IV The Lord repeatedly tells this same (*viz*, no possibility of action in Atman) because people have long been subject (मोमुह्यमान) to this great misunderstanding

V *Action belongs to* (*lit resides in*) the body and *senses, people* attribute it to the soul. So, also absence of action, e. g when I think "I am inactive" The soul is devoid of any change and therefore devoid of any action

VI. The Predecessor of Sankara was a मीमांसक नित्यकर्मs must be done, they should never be avoided.

चाकरणमकर्म तच्च प्रत्यवायफलत्वात्कर्मोच्यते गौण्यैव वृत्त्या। तत्र नित्ये कर्मण्यकर्म य पश्येत्फलाभावाद्यथा धेनुरपि गौरगौरुच्यते क्षीराख्य फल न प्रयच्छतीति तद्वत्। तथा नित्याकरणे त्वकर्मणि कर्म य पश्येन्नरकादिप्रत्यवायफल प्रयच्छतीति।

नैतद्युक्त व्याख्यानम्।

(i) एव ज्ञानादशुभान्मोक्षानुपपत्तेर्यज्ज्ञात्वा मोक्ष्यसेऽशुभादिति भगवतोक्त वचन बाध्येत। कथ,

(a) नित्यानामनुष्ठानादशुभात्स्यान्नाम मोक्षण, न तु तेषा फलाभावज्ञानात्। न हि नित्याना फलाभावज्ञानमशुभमुक्तिफलत्वेन चोदित नित्यकर्मज्ञान वा। न च भगवतैवेहोक्तम्।

(b) एतेनाकर्मणि कर्मदर्शन प्रत्युक्तम्। न ह्यकर्मणि कर्मेति दर्शन कर्तव्यतयेह चोद्यते, नित्यस्य तु कर्तव्यतामात्रम्। न चाकरणान्नित्यस्य प्रत्यवायो भवतीति विज्ञानात्किंचित्फल स्यात्। नापि नित्याकरण ज्ञेयत्वेन चोदितम्।

(ii) नापि कर्माकर्मेति मिथ्यादर्शनादशुभान्मोक्षण बुद्धिमत्त्व युक्तता कृत्स्नकर्मकृत्त्वादि च फलमुपपद्यते स्तुतिर्वा। मिथ्याज्ञानमेव हि साक्षादशुभरूप कुतोऽन्यस्मादशुभान्मोक्षण, न हि तमस्तमसो निवर्तक भवति।

(iii) ननु कर्मणि यदकर्मदर्शनमकर्मणि वा कर्मदर्शन न तन्मिथ्याज्ञान किं तर्हि गौण फलभावाभावनिमित्तम्। न, (1) कर्माकर्मविज्ञानादपि गौणात्फलस्याश्रवणात्।

---

नित्यकर्मs if done do not give a reward like the काम्यकर्मs, therefore नित्यकर्मs are by गौणीवृत्ति as good as अकर्म ( absence of कर्म ) If नित्यकर्मs are not done, one goes to नरक ( प्रत्यवाय फल ) अकर्म ( non-performance of नित्यकर्म ) produces a फल and अकर्म is as good as कर्म

Sankara's reply—

(i) Sankara is right in refuting this interpretation by saying that this kind of knowledge does not lead to मोक्ष from the evil (as promised in v 16 )

(a) Explanation of the first Pāda.

(b) „ second Pāda

(ii) If the knowledge of *karma* as *akarma* be मिथ्याज्ञान 'false knowledge' ( as found in the Mimāmsā ), it cannot make the knower " free from evil. "

(iii) If the knowledge of *karma* (=nitya karma ) as *akarma* be metaphorical ( gauṇa ), then we have a series of objections to it ( 1 ) No fruit is mentioned for such a

(2) नापि श्रुतहान्यश्रुतपरिकल्पनया कश्चिद्विशेषो लभ्यते। (3) स्वशब्देनापि शक्य वक्तु नित्यकर्मणा फल नास्त्यकरणाच्च तेषा नरकपात स्यादिति। तत्र व्याजेन परव्यामोहरूपेण कर्मण्यकर्म य पश्येदित्यादिना किम्। तत्रैव व्याचक्षाणेन भगवतोक्त वाक्य लोकव्यामोहार्थमिति व्यक्त कल्पित स्यात्। न चैतच्छद्मरूपेण वाक्येन रक्षणीय वस्तु, नापि शब्दान्तरेण पुन पुनरुच्यमान सुबोध स्यादित्येव वक्तु युक्तम्। कर्मण्येवाधिकारस्त इत्यत्र हि स्फुटतर उक्तोऽर्थो न पुनर्वक्तव्यो भवति।

(iv) सर्वत्र च प्रशस्त बोद्धव्य च कर्तव्यमेव न निष्प्रयोजन बोद्धव्यमित्युच्यते। न च मिथ्याज्ञान बोद्धव्य भवति तत्प्रत्युपस्थापित वा वस्त्वाभासम्।

(v) नापि नित्यानामकरणादभावात्प्रत्यवायभावोत्पत्तिर्नासतो विद्यते भाव इति वचनात्कथमसत सज्जायेतेति च दर्शितम्। असत सज्जन्मप्रतिषेधादसत सदुत्पत्ति ब्रुवतासदेव सद्भवेत्सच्चासद्भवेदित्युक्त स्यात्। तच्चायुक्त सर्वप्रमाणविरोधात्।

(vi) न च निष्फल विदध्यात्कर्म शास्त्र दु खस्वरूपत्वाद्दु खस्य च बुद्धिपूर्वकतया कार्यत्वानुपपत्ते। तदकरणे च नरकपाताभ्युपगमेऽनर्थायैवोभयथापि करणेऽकरणे च शास्त्र निष्फल कल्पित स्यात्।

(vii) स्वाभ्युपगमविरोधश्च नित्य निष्फल कर्मेत्यभ्युपगम्य मोक्षफलायेति ब्रुवत। तस्माद्यथाश्रुत एवार्थ कर्मण्यकर्म य इत्यादे। तथा च व्याख्यातोऽस्माभि श्लोक ॥१८॥

तदेतत्कर्मण्यकर्मादिदर्शन स्तूयते—

यस्य सर्वे समारम्भा कामसकल्पवर्जिता।
ज्ञानाग्निदग्धकर्माण तमाहु पण्डित बुधा ॥ १९ ॥

---

metaphorical knowledge (2) Such an interpretation is subject to Srutahaniaśrutakalpana (3) Why should the text not say so directly and expressly?

(iv) This should be taken along with (ii) above

(v) If a प्रत्यवायरूपफल were the result of non-performance of नित्यकर्म you will contradict Bha Gi II 16 and your statement would mean that the non-existent is existent *and vice versa*

(vi) The Scripture will never lay down action or actions which are nisphala (giving no reward) if done and which give punishment if not done

(vii) To say that *nitya karmas* give no reward and again to say that nityakarmas give freedom from evil (as you must admit according to v 16) involves a self-contradiction

यस्येति । यस्य यथोक्तदर्शिन सर्वे यावन्त समारम्भा कर्माणि समारभ्यन्त इति समारम्भा कामसंकल्पवर्जिता कामैस्तत्कारणैश्च संकल्पैर्वर्जिता मुधैव चेष्टामात्रा अनुष्ठीयन्ते प्रवृत्तेन चेल्लोकसंग्रहार्थं निवृत्तेन चेज्जीवनमात्रार्थं त ज्ञानाग्निदग्धकर्माणं कर्मादावकर्मादिदर्शन ज्ञान तदेवाग्निस्तेन ज्ञानाग्निना दग्धानि शुभाशुभलक्षणानि कर्माणि यस्य तमाहु परमार्थत पण्डित बुधा ब्रह्मविद ॥ १९ ॥

यस्त्वकर्मादिदर्शी सोऽकर्मादिदर्शनादेव निष्कर्मा संन्यासी जीवनमात्रार्थचेष्ट सन्कर्मणि न प्रवर्तते यद्यपि प्राग्विवेकत प्रवृत्त । यस्तु प्रारब्धकर्मा सन्नुत्तरकाल मुत्पन्नात्मसम्यग्दर्शन स्यात्स कर्मणि प्रयोजनमपश्यन्ससाधन कर्म परित्यजत्येव । स कुतश्चिन्निमित्तात्कर्मपरित्यागासंभवे सति कर्मणि तत्फले च सङ्गरहिततया स्वप्रयोजनाभावाल्लोकसंग्रहार्थ पूर्ववत्कर्मणि प्रवृत्तोऽपि नैव किंचित्करोति ज्ञानाग्निदग्ध कर्मत्वात्तदीय कर्माकर्मैव संपद्यत इत्येतमर्थं दर्शयिष्यन्नाह—

त्यक्त्वा कर्मफलासङ्ग नित्यतृप्तो निराश्रय ।
कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति स ॥ २० ॥

त्यक्त्वेति । त्यक्त्वा कर्मस्वभिमान फलासङ्ग च यथोक्तेन ज्ञानेन नित्यतृप्तो निराकाङ्क्षो विषयेष्वित्यर्थ । निराश्रय आश्रयरहित । आश्रयो नाम यदाश्रित्य पुरुषार्थं सिसा(षा)धयिषति । दृष्टादृष्टेष्टफलसाधनाश्रयरहित इत्यर्थ । विदुषा क्रियमाण कर्म परमार्थतोऽकर्मैव तस्य निष्क्रियात्मदर्शनसंपन्नत्वात् । तेनैवंभूतेन प्रयोजनाभावात्ससाधन कर्म परित्यक्तव्यमेवेति प्राप्ते ततो निर्गमासंभवाल्लोक संग्रहचिकीर्षया शिष्टविगर्हणापरिजिहीर्षया वा पूर्ववत्कर्मण्यभिप्रवृत्तोऽपि निष्क्रियात्मदर्शनसंपन्नत्वान्नैव किंचित्करोति स ॥ २० ॥

य पुन पूर्वोक्तविपरीत प्रागेव कर्मारम्भाद्ब्रह्मणि सर्वान्तरे प्रत्यगात्मनि निष्क्रिये संजातात्मदर्शन स दृष्टादृष्टेष्टविषयाशीर्विवर्जिततया दृष्टादृष्टार्थे कर्मणि प्रयोजनमपश्यन्ससाधन कर्म संन्यस्य शरीरयात्रामात्रचेष्टो यतिर्ज्ञाननिष्ठो मुच्यत इत्येतमर्थं दर्शयितुमाह—

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रह ।
शारीर केवल कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥

निरिति । निराशीर्निर्गता आशिषो यस्मात्स निराशी, यतचित्तात्मा चित्त मन्त करणमात्मा बाह्य कार्यकरणसंघातस्तावुभावपि यतौ संयतौ येन स यतचित्तात्मा त्यक्तसर्वपरिग्रहस्त्यक्त सर्व परिग्रहो येन स त्यक्तसर्वपरिग्रह शरीर शरीरस्थिति मात्रप्रयोजन केवल तत्राप्यभिमानवर्जित कर्म कुर्वन्नाप्नोति न प्राप्नोति किल्बिषमनिष्टरूप पाप धर्मं च । धर्मोऽपि मुमुक्षो किल्बिषमेव बन्धापादकत्वात् । किं च शारीर केवल कर्मेत्यत्र किं शरीरनिर्वर्त्यं शारीर कर्माभिप्रेतमाहोस्विच्छरीर

स्थितिमात्रप्रयोजनं शारीरं कमति । किं चातो यदि शरीरनिर्वर्त्यं शारीरं कर्म यदि वा शरीरस्थितिमात्रप्रयोजनं शारीरमिति । उच्यते यदा शारीरनिर्वर्त्यं कर्म शारीरमभिप्रेतं स्यात्तदा दृष्टादृष्टप्रयोजनं कर्म प्रतिषिद्धमपि शरीरेण कुर्वन्नाप्नोति किल्बिषमिति ब्रुवतो विरुद्धाभिधानं प्रसज्येत । शास्त्रीयं च कर्म दृष्टादृष्टप्रयोजनं शरीरेण कुर्वन्नाप्नोति किल्बिषमित्यपि ब्रुवतोऽप्राप्तप्रतिषेधप्रसङ्गः । शारीरं कर्म कुर्वन्निति विशेषणात्केवलशब्दप्रयोगाच्च वाङ्मनसनिर्वर्त्यं कर्म विधिप्रतिषेधविषयं धर्माधर्मशब्दवाच्यं कुर्वन्नाप्नोति किल्बिषमित्युक्तं स्यात् । तत्रापि वाङ्मनसाभ्यां विहितानुष्ठानपक्षे किल्बिषप्राप्तिवचनं विरुद्धमापद्येत । प्रतिषिद्धसेवापक्षेऽपि भूतार्थानुवादमात्रमनर्थकं स्यात् । यदा तु शरीरस्थितिमात्रप्रयोजनं शारीरं कर्माभिप्रेतं भवेत्तदा दृष्टादृष्टप्रयोजनं कर्म विधिप्रतिषेधगम्यं शरीरवाङ्मनसनिर्वर्त्यमन्यदकुर्वंस्तैरेव शरीरादिभिः शरीरस्थितिमात्रप्रयोजनं केवलशब्दप्रयोगादहं करोमीत्यभिमानवर्जितः शरीरादिचेष्टामात्रं लोकदृष्ट्या कुर्वन्नाप्नोति किल्बिषम् । एवंभूतस्य पापशब्दवाच्यकिल्बिषप्राप्त्यसंभवात्किल्बिषं संसारं नाप्नोति ज्ञानाग्निदग्धसर्वकर्मत्वादप्रतिबन्धेन मुच्यत एवेति पूर्वोक्तसम्यग्दर्शनफलानुवाद एवैष । एवं शारीरं केवलं कर्मेत्यस्यार्थस्य परिग्रहे निरवद्यं भवति ॥२१॥

त्यक्तसर्वपरिग्रहस्य यतेरन्नादेः शरीरस्थितिहेतोः परिग्रहस्याभावाद्याचनादिना शरीरस्थितिकर्तव्यतायां प्राप्तायाम् 'अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया' (Bau Dha II 18 12) इत्यादिना वचनेनाभ्यनुज्ञातं यतेः शरीरस्थितिहेतोरन्नादेः प्राप्तिद्वारमाविष्कुर्वन्नाह—

**यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः ।**
**समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ २२ ॥**

यदृच्छेति । यदृच्छालाभसंतुष्टोऽप्रार्थितोपनतो लाभो यदृच्छालाभस्तेन संतुष्टः संजातालंप्रत्ययो द्वन्द्वातीतो द्वन्द्वैः शीतोष्णादिभिर्हन्यमानोऽप्यविषण्णचित्तो द्वन्द्वातीत उच्यते । विमत्सरो विगतमत्सरो निर्वैरबुद्धिः समस्तुल्यो यदृच्छालाभस्य सिद्धावसिद्धौ च । य एवंभूतो यतिरन्नादेः शरीरस्थितिहेतोर्लाभालाभयोः समो हर्षविषादवर्जितः कर्मादावकर्मादिदर्शी यथाभूतात्मदर्शननिष्ठः शरीरस्थितिमात्रप्रयोजने भिक्षाटनादिकर्मणि शरीरादिनिर्वर्त्ये नैव किंचित्करोम्यहम् (V 8) 'गुणा गुणेषु वर्तन्ते' (III. 28) इत्येवं सदा संपरिचक्षाण आत्मनः कर्तृत्वाभावं पश्यन्नैव किंचिद्भिक्षाटनादिकं कर्म करोति लोकव्यवहारसामान्यदर्शनेन तु लौकिकैरारोपितकर्तृत्वे भिक्षाटनादौ कर्मणि कर्ता भवति । स्वानुभवेन तु शास्त्रप्रमाणादिजनितेनाकर्तैव । स एवं पराध्यारोपितकर्तृत्वः शरीरस्थितिमात्रप्रयोजनं भिक्षाटनादिकं कर्म कृत्वापि न निबध्यते बन्धहेतोः कर्मणः सहेतुकस्य ज्ञानाग्निना दग्धत्वादित्युक्तानुवाद एवैष ॥ २२ ॥

त्यक्त्वा कर्मफलासङ्गमित्यनेन श्लोकेन यः प्रारब्धकर्मा सन्यदा निष्क्रियब्रह्मात्मदर्शनसंपन्नः स्यात्तदा तस्यात्मनः कर्तृकर्मप्रयोजनाभावदर्शिनः कर्मपरित्यागे प्राप्ते कुतश्चिन्निमित्तात्तदसंभवे सति पूर्ववत्तस्मिन्कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः (IV 20) इति कर्माभावः प्रदर्शितः । यस्यैव कर्माभावो दर्शितस्तस्यैव—

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतस. ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥

गतसङ्गस्य सर्वतो निवृत्तासक्तेर्मुक्तस्य निवृत्तधर्माधर्मादिबन्धनस्य ज्ञानावस्थित चेतसो ज्ञान एवावस्थित चेतो यस्य सोऽय ज्ञानावस्थितचेतास्तस्य यज्ञाय यज्ञनिर्वृत्त्यर्थमाचरतो निर्वर्तयत कर्म समग्र सहाग्रेण फलेन वर्तत इति समग्र कर्म तत्समग्र प्रविलीयते विनश्यतीत्यर्थ ॥ २३ ॥

I कस्मात्पुनः कारणात्क्रियमाणं कर्म स्वकार्यारम्भमकुर्वत्समग्रं प्रविलीयत इत्युच्यते यत —

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्य ब्रह्मकर्मसमाधिना ॥ २४ ॥

ब्रह्मेति । ब्रह्मार्पण येन करणेन ब्रह्मविद्धविरग्नावर्पयति तद्ब्रह्मैवेति पश्यति तस्यात्मव्यतिरेकेणाभाव पश्यति यथा शुक्तिकायां रजताभावं पश्यति तदुच्यते ब्रह्मैवार्पणमिति । यथा यद्रजत तच्छुक्तिकैवेति । ब्रह्म, अर्पणमित्यसमस्ते पदे । यदर्पणबुद्ध्या गृह्यते लोके तदस्य ब्रह्मविदो ब्रह्मैवेत्यर्थ । ब्रह्म हविस्तथा यद्धविर्बुद्ध्या गृह्यमाण तद्ब्रह्मैवास्य । तथा ब्रह्माग्नाविति समस्तं पदम् । अग्निरपि ब्रह्मैव यत्र हूयते ब्रह्मणा कर्त्रा ब्रह्मैव कर्तेत्यर्थ । यत्तेन हुतं हवनक्रिया तद्ब्रह्मैव । यत्तेन गन्तव्य फल तदपि ब्रह्मैव । ब्रह्मकर्मसमाधिना ब्रह्मैव कर्म ब्रह्मकर्म तस्मिन्समाधिर्यस्य स ब्रह्मकर्मसमाधिस्तेन ब्रह्मकर्मसमाधिना ब्रह्मैव गन्तव्यम् । एवं लोकसंग्रहं चिकीर्षुणापि क्रियमाणं कर्म परमार्थतोऽकर्म ब्रह्मबुद्ध्युपमृदितत्वात् । एवं सति निवृत्तकर्मणोऽपि सर्वकर्मसंन्यासिनः सम्यग्दर्शनस्तुत्यर्थं यज्ञत्वसंपादन ज्ञानस्य सुतरामुपपद्यते यदर्पणाद्यधियज्ञे प्रसिद्ध तदस्याध्यात्मं ब्रह्मैव परमार्थदर्शिन इति ।

( a ) अन्यथा सर्वस्य ब्रह्मत्वेऽर्पणादीनामेव विशेषतो ब्रह्मत्वाभिधानमनर्थकं स्यात् । तस्माद्ब्रह्मैवेद सर्वमित्यभिजानतो विदुष. सर्वकर्माभावः ।

---

I. Sankara's interpretation.

In this verse the Knowledge of Brahman acquired by a Sannyāsin is imagined (according to the Mīmāṃsā rule of *sampatti*) to be यज्ञ a sacrifice, because

( a ) The verse does not say that for the Sannyāsin all is Brahman, but it says that for him only the arpana, etc, which pertain to a Sacrifice only are Brahman,

**( b ) (i) कारकबुद्ध्यभावाच्च ।** न हि कारकबुद्धिरहितं यज्ञाख्य **कर्म दृष्टम् ।** सर्वमेवाग्निहोत्रादिकं कर्म शब्दसमर्पितदेवताविशेषसम्प्रदानादिकारक बुद्धिमत्कर्त्रभिमानफलाभिसंधिमच्च दृष्ट नोपमृदितक्रियाकारकफलभेदबुद्धिमत्कर्तृत्वाभि मानफलाभिसंधिरहित वा । इदं तु ब्रह्मबुद्ध्युपमृदितार्पणादिकारक क्रियाफलभेद बुद्धिकर्मातोऽकर्मैव तत्। (ii) तथा च दर्शित 'कर्मण्यकर्म य पश्येत्'(IV 18)'कर्मण्यभि प्रवृत्तोऽपि नैव किंचित्करोति स ' (IV 20) गुणा गुणेषु वर्तन्ते (III.28) नैव किंचित्करो मीतियुक्तो मन्येत तत्त्ववित् (V 8)इत्यादिभि । तथा च दर्शयंस्तत्र तत्र क्रियाकारकफल भेदबुद्ध्युपमर्दं करोति। (iii)दृष्टा चाकाम्याग्निहोत्रादौ कामोपमर्देन काम्याग्निहोत्रादिहानि । तथा मतिपूर्वकामतिपूर्वकादीना कर्मणा कार्यविशेषस्यारम्भकत्वे दृष्टम् । तथेहापि **ब्रह्मबुद्ध्युपमृदितार्पणादिकारकक्रियाफलभेदबुद्धेर्बाह्यचेष्टामात्रेण कर्मापि विदु- षोऽकर्म संपद्यते ।** अत उक्त समग्र प्रविलीयते (IV 23) इति ।

II अत्र केचिदाहुर्यद्ब्रह्म तदर्पणादीनि । **ब्रह्मैव किलार्पणादिना पञ्चविधेन कारकात्मना व्यवस्थितं सत्तदेव कर्म करोति ।** तत्रनार्पणादिबुद्धिर्निवर्त्यते

---

(b) (i) The Yajña is a karman and a karman (a rite or an action) is possible only if the agent thinks himself to be a performer, but the Brahmajñānin-sannyasin has no such thought for himself (ii) That the jñānin has no sense of himself being an agent is shown in many verses of the Gita, e g IV 18,20,III 28, V 8 (iii) We have already considered the case in which the desire for the fruit may vanish even while the Agnihotra is half-performed, and, so,that Agnihotra would give no fruit in the form of heaven

N B We must also note that Sa bhāsya on this verse contains some remarks which would mean that even according to Sankara a brahmajñānin may do his duties for the guidance of the people (लोकसंग्रह)

II. Sankara's Predecessor—

The verse deals with an actual Sacrifice consisting of the five instruments, arpana (a ladle), havih (an oblation), agni (the sacred fire), the yajamāna (hotr) and gantavya (i e. the phala, the goal) These five instruments (pañca kārakas) do not cease to be thought of as such, but in addition to their respective ideas (as arpana etc), the idea of Brahman is superimposed upon each of them,

किं त्वर्पणादिषु ब्रह्मबुद्धिराधीयते । यथा प्रतिमादौ विष्ण्वादिबुद्धिर्यथा वा नामादौ ब्रह्मबुद्धिरिति' ।

सत्यमेवमपि स्याद्—

(a) यदि ज्ञानयज्ञस्तुत्यर्थं प्रकरणं न स्यात् । अत्र तु सम्यग्दर्शनं ज्ञानयज्ञशब्दितमनेकान्यज्ञशब्दितान्क्रियाविशेषानुपन्यस्य 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञान-यज्ञ' (IV 33) इति ज्ञानं स्तौति ।

(b) अत्र च समर्थमिदं वचनं ब्रह्मार्पणमित्यादि ज्ञानस्य यज्ञत्वसंपादनेऽन्यथा सर्वस्य ब्रह्मत्वेऽर्पणादीनामेव विशेषतो ब्रह्मत्वाभिधानमनर्थकं स्यात् । (p 70 above)

(c) ये त्वर्पणादिषु प्रतिमायां विष्णुदृष्टिवद्ब्रह्मदृष्टिः क्षिप्यते नामादिष्विव चेति ब्रुवते न तेषां ब्रह्मविद्योक्तेह विवक्षिता स्यादर्पणादिविषयत्वाज्ज्ञानस्य ।

(d) न च दृष्टिसंपादनज्ञानेन मोक्षफलं प्राप्यते ' ब्रह्मैव तेन गन्तव्यम् ' इति चोच्यते । विरुद्धं च सम्यग्दर्शनमन्तरेण मोक्षफलं प्राप्यत इति ।

(a) Continued प्रकृतविरोधश्च । सम्यग्दर्शनं च प्रकृतं ' कर्मण्यकर्म यः पश्येत् (IV 18)इत्यत्रान्ते च सम्यग्दर्शनं तस्यैवोपसंहारात् । 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञान-यज्ञ '(IV 33)ज्ञानं लब्ध्वा परां शान्तिम्'(IV 39)इत्यादिना सम्यग्दर्शनस्तुतिमेव कुर्वन्नुपक्षीणोऽध्याय । तत्राकस्मादर्पणादौ ब्रह्मदृष्टिरप्रकरणे प्रतिमायामिव विष्णुदृष्टि रुच्यत इत्यनुपपन्नम् । तस्माद्यथाव्याख्यातार्थ एवायं श्लोकः ॥ २४ ॥

तत्राधुना सम्यग्दर्शनस्य यज्ञत्वं संपाद्य तत्स्तुत्यर्थमन्येऽपि यज्ञा उपक्षिप्यन्ते दैवमेवेत्यादिना—

---

like the idea of Visnu on the idol which is actually worshipped by a devotee

The verse teaches that Brahman itself assumes the forms of all the five instruments of a Sacrifice and performs the Sacrifice, as laid down by the Veda.

Sankara's Refutation—

(a) According to the context we have here ब्रह्मज्ञानस्तुति or ज्ञानयज्ञस्तुति

(b) This verse by itself can be only ज्ञानस्य यज्ञत्वसंपादन

(c) Acc to the predecessor this will be a verse dealing with the arpana and other instruments of a sacrifice, and not with ब्रह्मविद्या

(d) Moksa is the fruit of the knowledge, so the topic of the verse must be Brahmajnana only

(a) Continued Context *Vide* (a) above

**दैवमेवापरे यज्ञं योगिनः पर्युपासते ।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥**

**दैवमेव देवा इज्यन्ते येन यज्ञेनासौ दैवो** यज्ञस्तमेवापरे यज्ञं योगिनः कर्मिणः पर्युपासते कुर्वन्तीत्यर्थः । ब्रह्मा‍ग्नौ "सत्यं ज्ञानमनन्तं ब्रह्म" (Tai Upa. II 1) "विज्ञानमानन्दं ब्रह्म" (Br Upa III 4 1) "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" (Br Upa III 4 1) इत्यादिवचनोक्तमशनायादिसर्वसंसारधर्मवर्जितं (Br Upa III 5 1) नेति नेतीति (Br Upa IV. 4 22) निरस्ताशेषविशेषं ब्रह्मशब्देनोच्यते । ब्रह्म च तदग्निश्च स होमाधिकरणत्वविवक्षया ब्रह्माग्निस्तस्मिन्ब्रह्माग्नावपरेऽन्ये **ब्रह्मविदो यज्ञं** यज्ञशब्दवाच्यमात्मानमात्मनामसु यज्ञशब्दस्य पाठात्तमात्मानं यज्ञं परमार्थतः परमेव ब्रह्म सन्तं बुद्ध्याद्युपाधिसंयुक्तमध्यस्तसर्वोपाधिधर्मकमाहुतिरूपं **यज्ञेनैवात्मनैवोक्तलक्षणेनोपजुह्वति प्रक्षिपन्ति । सोपाधिकस्यात्मनो निरुपाधिकेन परब्रह्मस्वरूपेणैव यद्दर्शनं स तस्मिन्होमस्तं कुर्वन्ति ब्रह्मात्मैकत्वदर्शननिष्ठाः संन्यासिन इत्यर्थः ।** सोऽयं सम्यग्दर्शनलक्षणो यज्ञो (IV 24) दैवयज्ञादिषु यज्ञेषूपक्षिप्यते ब्रह्मार्पणमित्यादिश्लोकैः 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप' (IV 33) इत्यादिना **स्तुत्यर्थम्** ॥२५॥*

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।**
**शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥**

*श्रोत्रादीनीति । श्रोत्रादीनीन्द्रियाण्यन्ये योगिनः संयमाग्निषु प्रतीन्द्रियं संयमो भिद्यत इति बहुवचनम् संयमा एवाग्नयस्तेषु जुह्वतीन्द्रियसंयममेव कुर्वन्तीत्यर्थः ।* 'शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति' इन्द्रियाण्येवाग्नयस्तेष्विन्द्रियाग्निषु जुह्वति श्रोत्रादिभिरविरुद्धविषयग्रहणं होमं मन्यन्ते ॥ २६ ॥

किं च—

**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥**

*सर्वाणीति । सर्वाणीन्द्रियकर्माणीन्द्रियाणां कर्माणीन्द्रियकर्माणि तथा प्राणकर्माणि प्राणो वायुराध्यात्मिकस्तत्कर्माण्याकुञ्चनप्रसारणादीनि तानि चापरे आत्मसंयमयोगाग्नावात्मनि संयम आत्मसंयमः स एव योगाग्निस्तस्मिन्नात्मसंयमयोगाग्नौ जुह्वति प्रक्षिपन्ति ज्ञानदीपिते स्नेहेनेव प्रदीपिते विवेकविज्ञानेनोज्ज्वलभावमापादिते जुह्वति प्रविलापयन्तीत्यर्थः ॥ २७ ॥*

---

* POA and VPP read सोऽयं ... स्तुत्यर्थम् as introduction to v 26 , but really the sentence is a part of the com on v 25

किं स्वर्पणादिषु ब्रह्मबुद्धिराधीयते। यथा प्रतिमादौ विष्ण्वादिबुद्धिर्यथा वा नामादौ ब्रह्मबुद्धिरिति'।

सत्यमेवमपि स्याद्—

(a) यदि ज्ञानयज्ञस्तुत्यर्थं प्रकरण न स्यात्। अत्र तु सम्यग्दर्शन ज्ञानयज्ञशब्दितमनेकान्यज्ञशब्दिताक्रियाविशेषानुपन्यस्य 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञान-यज्ञ' (IV 33) इति ज्ञान स्तौति।

(b) अत्र च समर्थमिद वचन ब्रह्मार्पणमित्यादि ज्ञानस्य यज्ञत्वसंपादनेऽन्यथा सर्वस्य ब्रह्मत्वेऽर्पणादीनामेव विशेषतो ब्रह्मत्वाभिधानमनर्थकं स्यात्। (p 70 above)

(c) ये त्वर्पणादिषु प्रतिमायां विष्णुदृष्टिवद्ब्रह्मदृष्टि क्षिप्यते नामादिष्विव चेति ब्रुवन न तेषा ब्रह्मविद्योक्तह विवक्षिता स्यादर्पणादिविषयत्वाज्ज्ञानस्य।

(d) न च दृष्टिसंपादनज्ञानेन मोक्षफलं प्राप्यते 'ब्रह्मैव तेन गन्तव्यम्' इति चोच्यते। विरुद्ध च सम्यग्दर्शनमन्तरेण मोक्षफल प्राप्यत इति।

(a) Continued प्रकृतविरोधश्च। सम्यग्दर्शन च प्रकृत 'कर्मण्यकर्म य पश्येत्(IV 18)इत्यत्रान्ते च सम्यग्दर्शन तस्यैवोपसहाराद्। श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञान-यज्ञ '(IV 33)ज्ञान लब्ध्वा परा शान्तिम्'(IV 39)इत्यादिना सम्यग्दर्शनस्तुतिमेव कुर्वन्नुपक्षीणोऽध्याय। तत्राकस्मादर्पणादौ ब्रह्मदृष्टिरप्रकरणे प्रतिमायामिव विष्णुदृष्टि रुच्यत इत्यनुपपन्नम्। तस्माद्यथाव्याख्यातार्थ एवाय श्लोकः ॥ २४ ॥

तत्राधुना सम्यग्दर्शनस्य यज्ञत्व सपाद्य तत्स्तुत्यर्थमन्येऽपि यज्ञा उपक्षिप्यन्ते दैवमेवेत्यादिना—

---

like the idea of Visnu on the idol which is actually worshipped by a devotee

The verse teaches that Brahman itself assumes the forms of all the five instruments of a Sacrifice and performs the Sacrifice, as laid down by the Veda.

Sankara's Refutation—

(a) According to the context we have here ब्रह्मज्ञानस्तुति or ज्ञानयज्ञस्तुति

(b) This verse by itself can be only ज्ञानस्य यज्ञत्वसपादन

(c) Acc. to the predecessor this will be a verse dealing with the arpana and other instruments of a sacrifice, and not with ब्रह्मविद्या

(d) Moksa is the fruit of the knowledge, so the topic of the verse must be Brahmajñāna only

(a) Continued Context *Vide* (a) above

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥

दैवमेव देवा इज्यन्ते येन यज्ञेनासौ दैवो यज्ञस्तमेवापरे यज्ञं योगिनः कर्मिणः पर्युपासते कुर्वन्तीत्यर्थः । ब्रह्माग्नौ "सत्यं ज्ञानमनन्तं ब्रह्म" (Tai Upa II 1) "विज्ञानमानन्दं ब्रह्म" (Br Upa. III 4. 1) "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" (Br. Upa. III. 4. 1) इत्यादिवचनोक्तमशनायादिसर्वसंसारधर्मवर्जितं (Br Upa III 5 1) नेति नेतीति (Br. Upa. IV. 4. 22) निरस्ताशेषविशेषं ब्रह्मशब्देनोच्यते । ब्रह्म च तदग्निश्च स होमाधिकरणत्वविवक्षया ब्रह्माग्निस्तस्मिन्ब्रह्माग्नावपरेऽन्ये ब्रह्मविदो यज्ञं यज्ञशब्दवाच्यमात्मानमात्मनामसु यज्ञशब्दस्य पाठात्तमात्मानं यज्ञं परमार्थतः परमेव ब्रह्म सन्तं बुद्ध्याद्युपाधिसंयुक्तमध्यस्तसर्वोपाधिधर्मकमाहुतिरूपं यज्ञेनैवात्मनैवोक्तलक्षणेनोपजुह्वति प्रक्षिपन्ति । सोपाधिकस्यात्मनो निरुपाधिकेन परब्रह्मस्वरूपेणैव यद्दर्शनं स तस्मिन्होमस्तं कुर्वन्ति ब्रह्मात्मैकत्वदर्शननिष्ठाः संन्यासिन इत्यर्थः । सोऽयं सम्यग्दर्शनलक्षणो यज्ञो (IV 24) दैवयज्ञादिषु यज्ञेषूपक्षिप्यते ब्रह्मार्पणमित्यादिश्लोकैः 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप' (IV 33) इत्यादिना स्तुत्यर्थम् ॥२५॥*

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥

श्रोत्रादीनीति । श्रोत्रादीनीन्द्रियाण्यन्ये योगिनः संयमाग्निषु प्रतीन्द्रियं संयमो भिद्यत इति बहुवचनम्, संयमा एवाग्नयस्तेषु जुह्वतीन्द्रियसंयममेव कुर्वन्तीत्यर्थः । 'शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति' इन्द्रियाण्येवाग्नयस्तेष्विन्द्रियाग्निषु जुह्वति श्रोत्रादिभिरविरुद्धविषयग्रहणं होमं मन्यन्ते ॥ २६ ॥

किं च—

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥

सर्वाणीति । सर्वाणीन्द्रियकर्माणीन्द्रियाणां कर्माणीन्द्रियकर्माणि तथा प्राणकर्माणि प्राणो वायुराध्यात्मिकस्तत्कर्माण्याकुञ्चनप्रसारणादीनि तानि चापर आत्मसंयमयोगाग्नावात्मनि संयम आत्मसंयमः स एव योगाग्निस्तस्मिन्नात्मसंयमयोगाग्नौ जुह्वति प्रक्षिपन्ति ज्ञानदीपिते स्नेहेनेव प्रदीपिते विवेकविज्ञानेनोज्ज्वलभावमापादिते जुह्वति प्रविलापयन्तीत्यर्थः ॥ २७ ॥

---

* POA and VPP read सोऽयं . स्तुत्यर्थम् as introduction to v 26 ; but really the sentence is a part of the com on v. 25

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥

एवमिति । एवं यथोक्ता बहुविधा बहुप्रकारा यज्ञा वितता विस्तीर्णा ब्रह्मणो वेदस्य मुखे द्वारे वेदद्वारेणावगम्यमाना ब्रह्मणो मुखे वितता उच्यन्ते, तद्यथा वाचि हि प्राणं जुहुम ( Ai.A. III 2. 6 ) इत्यादयः । कर्मजान्कायिकवाचिकमानसकर्मोद्भवान्विद्धि तान्सर्वाननात्मजान् । निर्व्यापारो ह्यात्मा । अत एवं ज्ञात्वा विमोक्ष्यसेऽशुभात् न मद्व्यापारा इमे निर्व्यापारोऽहमुदासीन इत्येवं ज्ञात्वास्मात्सम्यग्दर्शनान्मोक्ष्यसे संसारबन्धनादित्यर्थः ॥ ३२ ॥

ब्रह्मार्पणमित्यादि श्लोकेन सम्यग्दर्शनस्य यज्ञत्वं संपादितं यज्ञाश्चानेक उपदिष्टास्तैः सिद्धपुरुषार्थप्रयोजनैर्ज्ञानं स्तूयते । कथम्—

श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥

श्रेयानिति । श्रेयान्द्रव्यमयाद्द्रव्यसाधनसाध्याद्यज्ञाज्ज्ञानयज्ञो हे परंतप । द्रव्यमयो हि यज्ञः फलस्यारम्भको ज्ञानयज्ञो न फलारम्भकोऽतः श्रेयान्प्रशस्यतरः । कथं, यतः सर्वं कर्म समस्तमखिलमप्रतिबद्धं पार्थ ज्ञाने मोक्षसाधने सर्वतःसंप्लुतोदकस्थानीये परिसमाप्यतेऽन्तर्भवतीत्यर्थः । " यथा कृताय विजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद " ( Cha. Upa IV 1 4 ) इति श्रुतेः ॥ ३३ ॥

तदेतद्विशिष्टं ज्ञानं तर्हि केन प्राप्यत इत्युच्यते—

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥

तद्विद्धीति । तद्विद्धि विजानीहि येन विधिना प्राप्यत इत्याचार्यानभिगम्य प्रणिपातेन प्रकर्षेण नीचैः पतनं प्रणिपातो दीर्घनमस्कारस्तेन कथं बन्धः कथं मोक्षः का विद्या का चाविद्येति परिप्रश्नेन सेवया गुरुशुश्रूषयैवमादिना प्रश्रयेणावर्जिता आचार्या उपदेक्ष्यन्ति कथयिष्यन्ति ते ज्ञानं यथोक्तविशेषणं ज्ञानिनो ज्ञानवन्तोऽपि केचिद्यथावत्तत्त्वदर्शनशीला अपरे नातो विशिनष्टि तत्त्वदर्शिन इति । ये सम्यग्दर्शिनस्तैरुपदिष्टं ज्ञानं कार्यक्षमं भवति नेतरदिति भगवतो मतम् ॥ ३४ ॥

तथा च सतीदमपि समर्थं वचनम्—

यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५

यदिति । यज्ज्ञात्वा यज्ज्ञानं नैवमधिगम्य प्राप्य पुनर्भूयो मोहमेवं यास्यसि

मोहं गतोऽसि पुनरेवं न यास्यसि हे पाण्डव । किं च येन ज्ञानेन भूतान्यशेषेण ब्रह्मादीनि स्तम्बपर्यन्तानि द्रक्ष्यसि साक्षादात्मनि प्रत्यगात्मनि मत्संस्थानीमानि भूतानीति, अथो अपि मयि वासुदेवे परमेश्वरे चेमानीति क्षेत्रज्ञेश्वरैकत्वं सर्वोपनिषत्प्रसिद्धं द्रक्ष्यसीत्यर्थः ॥ ३५ ॥

किं चैतस्य ज्ञानस्य माहात्म्यम्—

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६ ॥

अपीति । अपि चेदसि पापेभ्यः पापकृद्भ्यः सर्वेभ्योऽतिशयेन पापकृत्पापकृत्तमः सर्वं ज्ञानप्लवेनैव ज्ञानमेव प्लवं कृत्वा वृजिनं वृजिनार्णवं पापं संतरिष्यसि, धर्मोऽपीह मुमुक्षोः पापमुच्यते ॥ ३६ ॥

ज्ञानं कथं नाशयति पापमिति सदृष्टान्तमुच्यते—

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥

यथेति । यथैधांसि काष्ठानि समिद्धः सम्यगिद्धो दीप्तोऽग्निर्भस्मसाद्भस्मीभावं कुरुतेऽर्जुन ज्ञानमेवाग्निर्ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा निर्बीजीकरोतीत्यर्थः । नहि साक्षादेव ज्ञानाग्निः कर्माणीन्धनवद्भस्मीकर्तुं शक्नोति, तस्मात्सम्यग्दर्शनं सर्वकर्मणां निर्बीजत्वे कारणमित्यभिप्रायः । सामर्थ्याद्येन कर्मणा शरीरमारब्धं तत्प्रवृत्तफलत्वादुपभोगेनैव क्षीयते तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये (Chā Upa VI.14 2 ) इति श्रुतेः । अतो यान्यप्रवृत्तफलानि ज्ञानोत्पत्तेः प्राक्कृतानि ज्ञानसहभावीनि चातीतानेकजन्मकृतानि च तान्येव सर्वाणि भस्मसात्कुरुते ॥ २७ ॥

यत एवमतः —

नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८ ॥

नहीति । नहि ज्ञानेन सदृशं तुल्यं पवित्रं पावनं शुद्धिकरमिह विद्यते तज्ज्ञानं स्वयमेव योगसंसिद्धो योगेन कर्मयोगेन समाधियोगेन च संसिद्धः संस्कृतो योग्यतामापन्नो मुमुक्षुः कालेन महतात्मनि विन्दति लभत इत्यर्थः ॥३८॥

येनैकान्तेन ज्ञानप्राप्तिर्भवति स उपाय उपदिश्यते—

श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥

श्रद्धावानिति । श्रद्धावाञ्छ्रद्धालुर्लभते ज्ञानम् । श्रद्धालुत्वेऽपि भवति कश्चिन्मन्दप्रस्थानोऽत आह । तत्परो गुरूपासनादावभियुक्तो ज्ञानलब्ध्युपाये श्रद्धावांस्तत्परोऽप्य

जितेन्द्रिय स्यादित्यत आह । सयतेन्द्रित सयतानि विषयेभ्यो निवर्तितानि यस्य इन्द्रियाणि स सयतेन्द्रिय । य एवभूत श्रद्धावास्तत्पर सयतेन्द्रियश्च सोऽवश्य ज्ञान लभते । प्रणिपातादिस्तु बाह्योऽनैकान्तिकोऽपि भवति मायाविवादिसभवान्न तु तच्छ्रद्धावत्त्वादाविति काततो ज्ञानलब्ध्युपाय । किं पुनर्ज्ञानलाभात्स्यादित्युच्यते ज्ञान लब्ध्वा परा मोक्षाख्या शान्तिमुपरतिमाचिरेण क्षिप्रमेवाधिगच्छति । सम्यग्दर्शनात्क्षिप्र मोक्षो भवतीति सर्वशास्त्रन्यायप्रसिद्ध सुनिश्चितोऽर्थ ॥ ३९ ॥

अत्र सशयो न कर्तव्य पापिष्ठो हि सशय., कथम्, उच्यते—

**अज्ञश्चाश्रद्दधानश्च सशयात्मा विनश्यति ।**
**नाय लोकोऽस्ति न परो न सुख सशयात्मन ॥ ४० ॥**

अज्ञश्चेति । अज्ञश्चानात्मज्ञोऽश्रद्दधानश्च सशयात्मा च विनश्यति । अज्ञाश्रद्धानौ यद्यपि विनश्यतस्तथाऽपि न तथा यथा सशयात्मा सशयात्मा तु पापिष्ठ सर्वेषाम् । कथ, नाय साधारणोऽपि लोकोऽस्ति तथा न परो लोको न सुख तत्रापि सशयोपपत्ते सशयात्मन सशयचित्तस्य । तस्मात्सशयो न कर्तव्य ॥ ४० ॥

कस्मात्—

**योगसंन्यस्तकर्माण ज्ञानसछिन्नसशयम् ।**
**आत्मवन्त न कर्माणि निबध्नन्ति धनजय ॥ ४१ ॥**

योगेति । योगसन्यस्तकर्माण **परमार्थदर्शनलक्षणेन योगेन सन्यस्तानि कर्माणि येन** परमार्थदर्शिना धर्माधर्माख्यानि त योगसन्यस्तकर्माणम् । कथ योगसन्यस्तकर्मेत्याह । ज्ञानेनात्मेश्वरैकत्वदर्शनलक्षणेन सछिन्न सशयो यस्य स ज्ञानसछिन्नसशय । य एव योगसन्यस्तकर्मा तमात्मवन्तमप्रमत्त गुणचेष्टारूपेण दृष्टानि कर्माणि न निबध्नन्त्यनिष्टादिरूप फल नारभन्ते हे धनजय ॥ ४१ ॥

यस्मात्कर्मयोगानुष्ठानादशुद्धिक्षयहेतुकज्ञानसछिन्नसशयो न निबध्यते कर्मभिर्ज्ञानाग्निदग्धकर्मत्वादेव यस्माच्च ज्ञानकर्मानुष्ठानविषये सशयवान्विनश्यति—

*तस्मादज्ञानसभूत हृत्स्थ ज्ञानासिनात्मन ।*
छित्त्वैन सशय योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥

**इति श्रीमहाभारते शतसाहस्र्या सहितायां वैयासक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसवादे ज्ञानकर्मसन्यासयोगो नाम चतुर्थोऽध्याय ॥ ४ ॥**

तस्मादिति । तस्मात्पापिष्ठमज्ञानसंभूतमज्ञानादविवेकाज्जातं हृत्स्थं हृदि बुद्धौ स्थितं ज्ञानासिना शोकमोहादिदोषहरं सम्यग्दर्शनं ज्ञानं तदेवासिः खड्गस्तेन ज्ञानासिनात्मनः स्वस्यात्मविषयत्वात्संशयस्य । नहि परस्य संशयः परेण च्छेत्तव्यतां प्राप्तो येन स्वस्येति विशेष्यतेऽत आत्मविषयोऽपि स्वस्यैव भवति । छित्त्वैनं संशयं स्वविनाशहेतुभूतं योगं सम्यग्दर्शनोपायं कर्मानुष्ठानमातिष्ठ कुर्वित्यर्थः । उत्तिष्ठेदानीं युद्धाय भारतेति ॥ ४२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये ब्रह्मयज्ञप्रशंसा नाम चतुर्थोऽध्यायः ॥ ४ ॥

# Notes

## Śankara's Introduction

1. Śankara tells us in his introduction what is the Central Teaching of the Gītā according to him In his opinion the Gītā teaches that Mokṣa is to be achieved through only one Path and that is the Path of Knowledge accompanied at the same time by the Renunciation of all actions According to Sankara the Karmayoga of the Gītā is a step to the Path of Renunciation in the sense that the Karmayoga leads to the Purification of the Mind only and this latter leads to the Knowledge of Brahman which is accompanied by the Renunciation of all actions.

We shall see later on that according to Rāmānuja and even Madhusūdana who belonged to the Sānkara Vedanta School, the Gītā teaches that Mokṣa is to be achieved through the Path of Devotion. According to a Predecessor of Sankara whose views are often stated by Śankara himself the Gītā taught the Performance of all Actions except the Kāmya or intersted actions Modern writers on the Gītā like Tilak and Gāndhiji have held that the Gītā teaches the Karmayoga 'Path of Disinterested Actions' There are some who hold the Central Teaching of the Gītā to be the Path of Meditation (Dhyānayoga).

In our opinion we should depend upon verses like Bhagavadgītā XIII 24–25 which are very clear on the above problem and we should conclude that the Gītā teaches different Paths for persons of different temparaments.

1 At the same time it must be noticed that the Karma yoga of the Gita like its other Paths has two aspects one as the *Sādhana* i e the first step to the Karmayoga Sannyasayoga and other Yogas or Paths and another is the *Phala* the Result in the sense in which King Janaka of Mithila is known to have practised the Path of Karma yoga ✓

2 It will be seen from Sa Bha on the Bha Gi that Sankara has no objection to the Practice of Karmayoga as was done by Janaka His real objection is against karman or action being a Path to Moksa He holds that even Janaka achieved his Moksa *only* through knowledge though he did not give up actions in favour of Renunciation. Here he does not seem to us to be strictly in agreement with the Gita which clearly says that Karma yoga is a means to Moksa though this Karmayoga in its *Phala* aspect is itself based upon the Highest Knowledge of Brahman ( Vide Bha Gi V 7 24 ) It is the Karmayoga in its *Sādhana* aspect which is described in the Gita as a means to the purification of the mind or as a means to the knowledge This we shall have to prove by the interpretation of the verses of the Gita

2 अण्डमव्यक्तसम्भवम्-The Avyakta is the origin of the Egg

3 प्रजापतीन्—Are the sages Marici and others the प्रजापतिs ? Or shall we translate Sankara as—'He created Marici and others and taught the Path of Action to the Prajāpatis ? The text of POB puts a comma offer मरीच्यादीन् अग्रे सृष्ट्वा But this seems to be worng because we have अन्यान् सनकसनन्दनादीन् उत्पाद्य in the next sentence

4 द्विविधो हि वेदोक्तो धर्म—Sankara is right so far as the Karmakānda of the Brāhmanas and the Jñānakānda of the Upanisads like the Chandogya (V 10) and the Brhad āranyaka Upanisads are concerned But by proposing to interpret the Bhagavadgītā in the light of the teaching of this earlier Sruti literature Sankara seems to us to

सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं मया प्रमादात्प्रणयेन वाऽपि ॥ ४१ ॥

सखा समानवया इति मत्वा ज्ञात्वा विपरीतबुद्ध्या प्रसभमभिभूय प्रसह्य यदुक्तं हे कृष्ण हे यादव हे सखेति चाजानताज्ञानिना मूढेन । किमजानतेत्याह महिमानं माहात्म्यं तवेदमीश्वरस्य विश्वरूपम् । तवेदं महिमानमजानतेति वैयधिकरण्येन सबन्धः । तवेममिति पाठो यद्यस्ति तदा सामानाधिकरण्यमेव । मया प्रमादाद्विक्षिप्तचित्ततया प्रणयेन वापि प्रणयो नाम स्नेहनिमित्तो विश्रम्भस्तेनापि कारणेन यदुक्तवानस्मि ॥४१॥

यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु ।
एकोऽथवाप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥

यच्चेति । यच्चावहासार्थं परिहासप्रयोजनायासत्कृतः परिभूतोऽसि भवासि, क्व विहारशय्यासनभोजनेषु विहरणं विहारः पादव्यायामः शयनं शय्यासनमास्थायिका भोजनमदनमित्येतेषु विहारशय्यासनभोजनेष्वेक परोक्षः सन्नसत्कृतोऽसि परिभूतोऽस्यथवापि हेऽच्युत तत्समक्षं तच्छब्दः क्रियाविशेषणार्थः प्रत्यक्षं वासत्कृतोऽसि तत्सर्वमपराधजातं क्षामये क्षमां कारये त्वामहमप्रमेयं प्रमाणातीतम् ॥ ४२ ॥

यतस्त्वम्—

पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ॥ ४३ ॥

पितासि जनयितासि लोकस्य प्राणिजातस्य चराचरस्य स्थावरजङ्गमस्य न केवलं त्वमस्य जगतः पिता पूज्यश्च पूजार्हो यतो गुरुर्गरीयान्गुरुतरः । कस्माद्गुरुतरत्वमित्याह न त्वत्समस्त्वत्तुल्योऽन्योऽस्ति । न हीश्वरद्वय सभवत्यनेकेश्वरत्वे व्यवहारानुपपत्ते । त्वत्सम एव तावदन्यो न सभवति कुत एवान्योऽभ्यधिक स्यात् लोकत्रयेऽपि सर्वस्मिन्नप्रतिमप्रभाव प्रतिमीयते यया सा प्रतिमा न विद्यते प्रतिमा यस्य तव प्रभावस्य स त्वमप्रतिमप्रभावो हेऽप्रतिमप्रभाव निरतिशयप्रभावेत्यर्थ ॥४३॥

यत एवम्—

तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४ ॥

तस्मात्प्रणम्य नमस्कृत्य प्रणिधाय प्रकर्षेण नीचैर्धृत्वा कायं शरीरं प्रसादये प्रसादं कारये त्वामहमीशमीशितारमीड्यं स्तुत्यं त्वं पुनः पुत्रस्यापराधं पिता यथा क्षमते सर्वं सखेव च सख्युरपराधं यथा वा प्रियः प्रियाया अपराधं क्षमत एवमर्हसि हे देव सोढुं प्रसहितुं क्षन्तुमित्यर्थः ॥ ४४ ॥

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ॥ ४५ ॥

अदृष्टपूर्वमिति । अदृष्टपूर्वं न कदाचिदपि दृष्टपूर्वमिदं विश्वरूपं तव मयान्यैर्वा तदहं दृष्ट्वा हृषितोऽस्मि भयेन च प्रव्यथितं मनो मेऽतस्तदेव मे मम दर्शय हे देव रूपं यन्मत्सखं प्रसीद देवेश जगन्निवास जगतो निवासो जगन्निवासो हे जगन्निवास ॥ ४५ ॥

किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥

किरीटिनमिति । किरीटिनं किरीटवन्तं तथा गदिनं गदावन्तं चक्रहस्तमिच्छामि त्वां प्रार्थये त्वां द्रष्टुमहं तथैव पूर्ववदित्यर्थः । यत एव तस्मात्तेनैव रूपेण वसुदेवपुत्ररूपेण चतुर्भुजेन सहस्रबाहो वार्तमानिकेन विश्वरूपेण भव विश्वमूर्ते उपसंहृत्य विश्वरूपं तेनैव रूपेण वसुदेवपुत्ररूपेण भवेत्यर्थः ॥ ४६ ॥

अर्जुनं भीतमुपलभ्योपसंहृत्य विश्वरूपं प्रियवचनेनाश्वासयन्—

श्रीभगवानुवाच—

मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥

मया प्रसन्नेन प्रसादो नाम त्वय्यनुग्रहबुद्धिस्तद्वता प्रसन्नेन मया तव हेऽर्जुनेदं परं रूपं विश्वरूपं दर्शितमात्मयोगादात्मन ऐश्वर्यस्य सामर्थ्यात्तेजोमयं तेजःप्रायं विश्वं समस्तमनन्तमन्तरहितमादौ भवमाद्यं यद्रूपं मे मम त्वदन्येन त्वत्तोऽन्येन केनचिन्न दृष्टपूर्वम् ॥ ४७ ॥

आत्मनो मम रूपदर्शनेन कृतार्थ एव त्वं संवृत्त इति तत्स्तौति—

न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥

न वेदयज्ञाध्ययनैश्चतुर्णामपि वेदानामध्ययनैर्यथावद्यज्ञाध्ययनैश्च वेदाध्ययनैरेव यज्ञाध्ययनस्य सिद्धत्वात्पृथग्यज्ञाध्ययनग्रहणं यज्ञविज्ञानोपलक्षणार्थम्, तथा न दानैस्तुलापुरुषादिभिर्न च क्रियाभिरग्निहोत्रादिभिः श्रौतादिभिर्नापि तपोभिरुग्रैश्चान्द्रायणादिभिरुग्रैर्घोरैरेवंरूपो यथा दर्शितं विश्वरूपं यस्य सोऽहमेवंरूपः शक्यो न शक्योऽहं नृलोके मनुष्यलोके द्रष्टुं त्वदन्येन त्वत्तोऽन्येन कुरुप्रवीर ॥ ४८ ॥

मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥

मा ते व्यथेति । मा ते व्यथा मा भूत्ते भयं मा च विमूढभावो विमूढचित्तता दृष्ट्वोपलभ्य रूपं घोरमीदृग्यथादर्शितं ममेदं व्यपेतभीर्विगतभयः प्रीतमनाश्च सन्पुनर्भूयस्त्वं तदेव चतुर्भुजं शङ्खचक्रगदाधरं तवेष्टं रूपमिदं प्रपश्य ॥ ४९ ॥

## संजय उवाच—

इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥

इत्यर्जुनमिति । इत्येवमर्जुनं वासुदेवस्तथाभूतं वचनमुक्त्वा स्वकं वसुदेवगृहे जातं रूपं दर्शयामास दर्शितवान् । भूयः पुनराश्वासयामास चाश्वासितवांश्च भीतमेनं भूत्वा पुनः सौम्यवपुः प्रसन्नदेहो महात्मा ॥ ५० ॥

## अर्जुन उवाच—

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥

दृष्ट्वेदमिति । दृष्ट्वेदं मानुषं रूपं मत्सखं प्रसन्नं तव सौम्यं जनार्दनेदानीमधुनास्मि संवृत्तः संजातः किं सचेताः प्रसन्नचित्तः प्रकृतिं स्वभावं गतश्चास्मि ॥ ५१ ॥

## श्रीभगवानुवाच—

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५२ ॥

सुदुर्दर्शमिति । सुदुर्दर्शं सुष्ठु दुःखेन दर्शनमस्येति सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम देवा अप्यस्य मम रूपस्य नित्यं सर्वदा दर्शनकाङ्क्षिणो दर्शनेच्छवोऽपि न त्वमिव दृष्टवन्तो न द्रक्ष्यन्ति चेत्यभिप्रायः ॥ ५२ ॥

कस्मात्—

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३ ॥

नाहं वेदैर्ऋग्यजुःसामाथर्ववेदैश्चतुर्भिरपि न तपसोग्रेण चान्द्रायणादिना न दानेन गोभूहिरण्यादिना न चेज्यया यज्ञेन पूजया वा शक्य एवंविधो यथादर्शितप्रकारो द्रष्टुं दृष्टवानसि मां यथा त्वम् ॥ ५३ ॥

कथं पुनः शक्य इत्युच्यते—

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ५४ ॥

भक्त्या तु किंविशिष्टयेत्याह—अनन्ययापृथग्भूतया भगवतोऽन्यत्र पृथङ्न कदाचिदपि या भवति सा त्वनन्या भक्तिः सर्वैरपि करणैर्वासुदेवादन्यन्नोपलभ्यते यया सानन्या भक्तिस्तया भक्त्या शक्योऽहमेवंविधो विश्वरूपप्रकारो हेऽर्जुन ज्ञातुं शास्त्रतो

न केवलं ज्ञातुं शास्त्रतो द्रष्टुं च साक्षात्तत्त्वेन तत्त्वतः प्रवेष्टुं च मोक्षं च गन्तुं परंतप ॥ ५४ ॥

अधुना सर्वस्य गीताशास्त्रस्य सारभूतोऽर्थो निःश्रेयसार्थोऽनुष्ठेयत्वेन समुच्चित्योच्यते—

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ५५ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्म-
पर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनयोगो
नामैकादशोऽध्यायः ॥ ११ ॥

मत्कर्मकृन्मदर्थं कर्म मत्कर्म तत्करोतीति मत्कर्मकृन्मत्परमः करोति भृत्यः स्वामिकर्म न त्वात्मनः परमा प्रेत्य गन्तव्या गतिरिति स्वामिनं प्रतिपद्यते, अयं तु मत्कर्मकृन्मामेव परमां गतिं प्रतिपद्यत इति मत्परमोऽहं परमः परा गतिर्यस्य सोऽयं मत्परमस्तथा मद्भक्तो मामेव सर्वप्रकारैः सर्वात्मना सर्वोत्साहेन च भजत इति मद्भक्तः सङ्गवर्जितो धनपुत्रमित्रकलत्रबन्धुवर्गेषु सङ्गवर्जितः सङ्गः प्रीतिः स्नेहस्तद्वर्जितो निर्वैरो निर्गतवैरः सर्वभूतेषु शत्रुभावरहित आत्मनोऽत्यन्तापकारप्रवृत्तेष्वपि य ईदृशो मद्भक्तः स मामेत्यहमेव तस्य परा गतिर्नान्या गतिः काचिद्भवत्ययं तवोपदेश इष्टो मयोपदिष्टो हे पाण्डवेति ॥ ५५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः
कृतौ श्रीभगवद्गीताभाष्ये विश्वरूपदर्शनयोगो
नामैकादशोऽध्यायः ॥ ११ ॥



# द्वादशोऽध्यायः ।

द्वितीयप्रभृतिष्वध्यायेषु विभूत्यन्तेषु विभूत्यन्तेषु परमात्मनो ब्रह्मणोऽक्षरस्य विध्वस्तसर्वविशेषणस्योपासनमुक्तं सर्वयोगैश्वर्यसर्वज्ञानशक्तिमत्सत्त्वोपाधेरीश्वरस्य तव चोपासनं तत्र तत्रोक्तं विश्वरूपाध्याये त्वैश्वरमाद्यं समस्तजगदात्मरूपं विश्वरूपं त्वदीयं दर्शितमुपासनार्थमेव त्वया तच्च दर्शयित्वोक्तवानसि मत्कर्मकृदित्यादि यतोऽहमनयोरुभयोः पक्षयोर्विशिष्टतरबुभुत्सया त्वां पृच्छामीति—

## अर्जुन उवाच—

> एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
> ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

एवमित्यतीतानन्तरश्लोकेनोक्तमर्थं परामृशति मत्कर्मकृदित्यादिना । एवं सततयुक्ता नैरन्तर्येण भगवत्कर्मादौ यथोक्तेऽर्थे समाहिताः सन्तः प्रवृत्ता इत्यर्थः । ये भक्ता अनन्यशरणाः सन्तस्त्वां यथादर्शितं विश्वरूपं पर्युपासते ध्यायन्ति ये चान्येऽपि त्यक्तसर्वैषणाः संन्यस्तसर्वकर्माणो यथाविशेषितं ब्रह्माक्षरं निरस्तसर्वोपाधित्वादव्यक्तमकरणगोचरं यद्धि लोके करणगोचरं तद्व्यक्तमुच्यतेऽञ्जेर्धातोस्तच्चेदमक्षरमव्यक्तं तद्विपरीतं शिष्टैश्चोच्यमानैर्विशेषणैर्विशिष्टं तदेव चापि पर्युपासते तेषामुभयेषां मध्ये के योगवित्तमाः केऽतिशयेन योगविद इत्यर्थः ॥ १ ॥

## श्रीभगवानुवाच—

ये त्वक्षरोपासकाः सम्यग्दर्शिनो निवृत्तैषणास्ते तावत्तिष्ठन्तु तान्प्रति यद्वक्तव्यं तदुपरिष्टाद्वक्ष्यामः । ये त्वितरे—

> मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
> श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥

मयि विश्वरूपे परमेश्वरे आवेश्य समाधाय मनो ये भक्ताः सन्तो मां सर्वयोगेश्वराणामधीश्वरं सर्वज्ञं विमुक्तरागादिक्लेशतिमिरदृष्टिं नित्ययुक्ता अतीतानन्तराध्यायान्तोक्तश्लोकार्थन्यायेन सततयुक्ताः सन्त उपासते श्रद्धया परया प्रकृष्टयोपेतास्ते मे मम मता अभिप्रेता युक्ततमा इति । नैरन्तर्येण हि ते मच्चित्ततयाऽहोरात्रमतिवाहयन्त्यतो युक्तं तान्प्रति युक्ततमा इति वक्तुम् ॥ २ ॥

किमितरे युक्ततमा न भवन्ति, न, किंतु तान्प्रति यद्वक्तव्यं तच्छृणु—

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥

ये त्वक्षरमनिर्देश्यमव्यक्तत्वादशब्दगोचरमिति न निर्देष्टुं शक्यतेऽतोऽनिर्देश्यमव्यक्तं न केनापि प्रमाणेन व्यज्यत इत्यव्यक्तं पर्युपासते परि समन्तादुपासते । उपासनं नाम यथाशास्त्रमुपास्यस्यार्थस्य विषयीकरणेन सामीप्यमुपगम्य तैलधारावत्समानप्रत्ययप्रवाहेण दीर्घकालं यदासनं तदुपासनमाचक्षते । अक्षरस्य विशेषणमाह सर्वत्रगं व्योमवद्व्याप्यचिन्त्यं चाव्यक्तत्वादचिन्त्यम् । यद्धि करणगोचरं तन्मनसापि चिन्त्यं तद्विपरीतत्वादचिन्त्यमक्षरं कूटस्थं दृश्यमानगुणमन्तर्दोषं वस्तु कूटं कूटरूपं कूटसाक्ष्यमित्यादौ कूटशब्दः प्रसिद्धो लोके । तथा चाविद्याद्यनेकसंसारबीजमन्तर्दोषवन्मायाव्याकृतादिशब्दवाच्यतया ' मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ' ( Sve. Upa IV. 10 ) ' मम माया दुरत्यया ' ( VII. 14 ) इत्यादौ प्रसिद्धं यत्तत्कूटं तस्मिन्कूटे स्थितं कूटस्थं तदध्यक्षतयाऽथवा राशिरिव स्थितं कूटस्थमत एवाचलं यस्मादचलं तस्माद्ध्रुवं नित्यमित्यर्थः ॥ ३ ॥

संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥

संनियम्येति । संनियम्य सम्यङ्नियम्य संहृत्येन्द्रियग्राममिन्द्रियसमुदायं सर्वत्र सर्वस्मिन्काले समबुद्धयः समा तुल्या बुद्धिर्येषामिष्टानिष्टप्राप्तौ ते समबुद्धयस्ते य एवंविधास्ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः । न तु तेषां वक्तव्यं किंचिन्मां ते प्राप्नुवन्तीति । ज्ञानी त्वात्मैव मे मतमिति ( VII. 18 ) ह्युक्तम् । न हि भगवत्स्वरूपाणां सतां युक्ततमत्वमयुक्ततमत्वं वा वाच्यम् ॥ ४ ॥

किंतु—

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥

क्लेशोऽधिकतर इति । यद्यपि मत्कर्मादिपराणां क्लेशोऽधिक एव क्लेशोऽधिकतरस्त्वक्षरात्मनां परमार्थदर्शिनां देहाभिमानपरित्यागनिमित्तोऽव्यक्तासक्तचेतसामव्यक्त आसक्तं चेतो येषां तेऽव्यक्तासक्तचेतसस्तेषामव्यक्तासक्तचेतसाम् । अव्यक्ता हि यस्माद्गतिरक्षरात्मिका दुःखं सा देहवद्भिर्देहाभिमानवद्भिरवाप्यतेऽतः क्लेशोऽधिकतरः ॥ ५ ॥

अक्षरोपासकानां यद्वर्तनं तदुपरिष्टाद्वक्ष्यामः ।

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥

ये त्विति । ये तु सर्वाणि कर्माणि मयीश्वरे संन्यस्य मत्परा अहं परो येषां ते

मत्पराः सन्तोऽनन्येनैवाविद्यमानमन्यदालम्बनं विश्वरूपं देवमात्मानं मुक्त्वा यस्य सोऽनन्यस्तेनाऽनेनैव केन योगेन समाधिना मां ध्यायन्तश्चिन्तयन्त उपासते ॥ ६ ॥

तेषां किम्—

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥

तेषां मदुपासनैकपराणामहमीश्वरः समुद्धर्ता । कुत इत्याह मृत्युसंसारसागरात्, मृत्युयुक्तः संसारो मृत्युसंसारः स एव सागर इव सागरो दुस्तरत्वात्तस्मान्मृत्युसंसारसागरादहं तेषां समुद्धर्ता भवामि न चिरात्किं तर्हि क्षिप्रमेव हे पार्थ मय्यावेशितचेतसां मयि विश्वरूप आवेशितं समाहितं चेतो येषां ते मय्यावेशितचेतसस्तेषाम् ॥ ७ ॥

यत एवं तस्मात्—

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८ ॥

मय्येव विश्वरूप ईश्वरे मनः संकल्पविकल्पात्मकमाधत्स्व स्थापय मय्येवाध्यवसायं कुर्वतीं बुद्धिमाधत्स्व निवेशय । ततस्ते किं स्यादिति शृणु निवसिष्यसि निवत्स्यसि निश्चयेन मदात्मना मयि निवासं करिष्यस्येवातः शरीरपातादूर्ध्वं न संशयः संशयोऽत्र न कर्तव्यः ॥ ८ ॥

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९ ॥

अथेति । अथैव यथावोचाम तथा मयि चित्तं समाधातुं स्थापयितुं स्थिरमचलं न शक्नोषि चेत्ततः पश्चादभ्यासयोगेन चित्तस्यैकस्मिन्नालम्बने सर्वतः समाहृत्य पुनः पुनः स्थापनमभ्यासस्तत्पूर्वको योगः समाधानलक्षणस्तेनाभ्यासयोगेन मा विश्वरूपमिच्छ प्रार्थयस्वाप्तुं प्राप्तुं हे धनजय ॥ ९ ॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥ १० ॥

अभ्यासेऽपीति । अभ्यासेऽप्यसमर्थोऽस्यशक्तोऽसि तर्हि मत्कर्मपरमो भव मदर्थं कर्म मत्कर्म तत्परमो मत्कर्मप्रधान इत्यर्थः । अभ्यासेन विना मदर्थमपि कर्माणि केवलं कुर्वन् सिद्धिं सत्त्वशुद्धियोगज्ञानप्राप्तिद्वारेणावाप्स्यसि ॥ १० ॥

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥

अथैतदिति । अथ पुनरेतदपि यदुक्तं मत्कर्मपरमत्वं तत्कर्तुमशक्तोऽसि मद्योगमाश्रितो मयि क्रियमाणानि कर्माणि संन्यस्य यत्करणं तेषामनुष्ठानं स मद्योगस्तमाश्रितः सन्सर्वकर्मफलत्यागं सर्वेषां कर्मणां फलसंन्यासं सर्वकर्मफलत्यागं ततोऽनन्तरं कुरु यतात्मवान्संयतचित्तः सन्नित्यर्थः ॥ ११ ॥

इदानीं सर्वकर्मफलत्यागं स्तौति—

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १२ ॥

श्रेयो हि प्रशस्यतरं ज्ञानं कस्मादविवेकपूर्वकादभ्यासात्तस्मादपि ज्ञानाज्ज्ञानपूर्वकं ध्यानं विशिष्यते । ज्ञानवतो ध्यानादपि कर्मफलत्यागो विशिष्यत इत्यनुषज्यते । एवं कर्मफलत्यागात्पूर्वविशेषणवतः शान्तिरुपशमः सहेतुकस्य संसारस्यानन्तरमेव स्यान्न तु कालान्तरमपेक्षते ॥

अज्ञस्य कर्मणि प्रवृत्तस्य पूर्वोपदिष्टोपायानुष्ठानाशक्तौ सर्वकर्मणां फलत्यागः श्रेयःसाधनमुपदिष्टं न प्रथममेवातश्च श्रेयो हि ज्ञानमभ्यासादित्युत्तरोत्तरविशिष्टत्वोपदेशेन सर्वकर्मफलत्यागः स्तूयते संपन्नसाधनानुष्ठानाशक्तावनुष्ठेयत्वेन श्रुतत्वात् । केन साधर्म्येण स्तुतित्वम् "यदा सर्वे प्रमुच्यन्ते" ( Katha Upa VI 14 ) इति सर्वकामप्रहाणादमृतत्वमुक्तं तत्प्रसिद्धम् । कामाश्च सर्वे श्रौतस्मार्तसर्वकर्मणां फलानि । तत्त्यागे च विदुषो *ज्ञाननिष्ठस्यानन्तरैव शान्तिरिति सर्वकामत्यागसामान्यमज्ञकर्मफलत्यागस्यास्तीति तत्सामान्यात्सर्वकर्मफलत्यागस्तुतिरियं प्ररोचनार्था । यथाऽगस्त्येन ब्राह्मणेन समुद्रः पीत इतीदानींतना अपि ब्राह्मणा ब्राह्मणत्वसामान्यात्स्तूयन्ते एवं कर्मफलत्यागात्कर्मयोगस्य श्रेयःसाधनत्वमभिहितम् ॥ १२ ॥

अत्र चात्मेश्वरभेदमाश्रित्य विश्वरूपे ईश्वरे चेतःसमाधानलक्षणो योग उक्त ईश्वरार्थं कर्मानुष्ठानादि च । 'अथैतदप्यशक्तोऽसि' इत्यज्ञानकार्यसूचनाद्भेददर्शिनोऽक्षरोपासकस्य कर्मयोग उपपद्यत इति दर्शयति । तथा कर्मयोगिनोऽक्षरोपासनानुपपत्तिं दर्शयति भगवान् 'ते प्राप्नुवन्ति मामेव' इति ( XII. 7 ) । अक्षरोपासकानां कैवल्यप्राप्तौ स्वातन्त्र्यमुक्त्वेतरेषां पारतन्त्र्यमीश्वराधीनतां दर्शितवांस्तेषामहं समुद्धर्तेति ( XII 7 )। यदि हीश्वरस्यात्मभूतास्ते मता अभेददर्शित्वादक्षररूपा एव त इति समुद्धरणकर्मवचनं तान्प्रत्यपेशलं स्यात्। यस्माच्चार्जुनस्यात्यन्तमेव हितैषी भगवांस्तस्य सम्यग्दर्शनानन्वितं कर्मयोगं भेददृष्टिमन्तमेवोपदिशति । न चात्मानमीश्वरं प्रमाणतो बुद्ध्वा कस्यचिद्गुणभावं जिगमिषति कश्चिद्विरोधात् । तस्मादक्षरोपासकानां सम्यग्दर्शन-

* POA and VVP read ध्याननिष्ठस्य

निष्ठाना संन्यासिनां त्यक्तसर्वैषणानाम् ' अद्वेष्टा सर्वभूतानाम् ' इत्यादिधर्मपूगं साक्षादमृतत्वकारणं वक्ष्यामीति प्रवर्तते—

**अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।**
**निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥**

अद्वेष्टा सर्वभूतानां न द्वेष्टात्मनो दुःखहेतुमपि न कंचिद्द्वेष्टि सर्वाणि भूतान्यात्मत्वेन हि पश्यति । मैत्रो मित्रभावः मैत्री मित्रतया वर्तत इति मैत्रः । करुण एव च करुणा कृपा दुःखितेषु दया तद्वान्करुणः सर्वभूताभयप्रदः संन्यासीत्यर्थः । निर्ममो ममप्रत्ययवर्जितो निरहंकारो निर्गताहंप्रत्ययः । समदुःखसुखः समे दुःखसुखे द्वेषरागयोरप्रवर्तके यस्य स समदुःखसुखः क्षमी क्षमावानाक्रुष्टोऽभिहतो वाविक्रिय एवास्ते ॥ १३ ॥

***संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।***
***मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४ ॥***

संतुष्ट इति । संतुष्टः सततं नित्यं देहस्थितिकारणस्य लाभेऽलाभे चोत्पन्नालंप्रत्ययस्तथा गुणवल्लाभे विपर्यये च संतुष्टः सततं योगी समाहितचित्तो यतात्मा संयतस्वभावो दृढनिश्चयो दृढः स्थिरो निश्चयोऽध्यवसायो यस्यात्मतत्त्वविषये स दृढनिश्चयो मय्यर्पितमनोबुद्धिः संकल्पविकल्पात्मकं मनोऽध्यवसायलक्षणा बुद्धिस्ते मय्येवार्पिते स्थापिते यस्य संन्यासिनः स मय्यर्पितमनोबुद्धिर्य ईदृशो मद्भक्तः स मे प्रियः ' प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ' (VII. 17) इति सप्तमेऽध्याये सूचितं तदिह प्रपञ्च्यते ॥ १४ ॥

**यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।**
**हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥**

यस्मादिति । यस्मात्संन्यासिनो नोद्विजते नोद्वेगं गच्छति न संतप्यते न संक्षुभ्यते लोकः । तथा लोकान्नोद्विजते च यः । हर्षामर्षभयोद्वेगैर्हर्षश्चामर्षश्च भयं चोद्वेगश्च तैर्हर्षामर्षभयोद्वेगैर्मुक्तः । हर्षः प्रियलाभेऽन्तःकरणस्योत्कर्षो रोमाञ्चनाश्रुपातादिलिङ्गः, अमर्षोऽसहिष्णुता, भयं त्रासः, उद्वेग उद्विग्नता, तैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥

**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।**
**सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥**

अनपेक्ष इति । अनपेक्षो देहेन्द्रियविषयसंबन्धादिष्वपेक्षाविषयेष्वनपेक्षो निःस्पृहः शुचिर्बाह्येनाभ्यन्तरेण च शौचेन संपन्नो दक्षः प्रत्युत्पन्नेषु कार्येषु सद्यो यथावत्प्रतिपत्तुं समर्थः । उदासीनो न कस्यचिन्मित्रादेः पक्षं भजते यः स उदासीनो गतव्यथो गतभयः । सर्वारम्भपरित्यागी, आरभ्यन्त इत्यारम्भा इहामुत्रफलभोगार्थानि काम-

हेतूनि कर्माणि सर्वारम्भास्तान्परित्यक्तुं शीलमस्येति सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥

किंच—

**यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।**
**शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १७ ॥**

यो न हृष्यतीष्टप्राप्तौ न द्वेष्ट्यनिष्टप्राप्तौ न शोचति प्रियवियोगे न चाप्राप्तं काङ्क्षति शुभाशुभे कर्मणी परित्यक्तुं शीलमस्येति शुभाशुभपरित्यागी **भक्तिमान्यः** स मे प्रियः ॥ १७ ॥

**समः शत्रौ च मित्रे च तथा मानापमानयोः ।**
**शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥**

सम इति । समः शत्रौ च मित्रे च तथा मानापमानयोः पूजापरिभवयोः शीतोष्णसुखदुःखेषु समः सर्वत्र च सङ्गवर्जितः ॥ १८ ॥

किंच—

**तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ।**
**अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥**

तुल्यनिन्दास्तुतिः, निन्दा च स्तुतिश्च निन्दास्तुती ते तुल्ये यस्य स तुल्यनिन्दास्तुतिर्मौनी मौनवान्संयतवाक्संतुष्टो येन केनचिच्छरीरस्थितिमात्रेण । तथा चोक्तम्—

"येन केनचिदाच्छन्नो येन केनचिदाशितः ।
यत्रक्वचनशायी स्यात्तं देवा ब्राह्मणं विदुः ॥" इति ।
( MBh. XII. 245. 12 )

किंचानिकेतो निकेत आश्रयो निवासो नियतो न विद्यते यस्य सोऽनिकेतोऽनागार इत्यादिस्मृत्यन्तरात् । स्थिरमतिः स्थिरा परमार्थवस्तुविषया मतिर्यस्य स स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥

अद्वेष्टा सर्वभूतानामित्यादिनाऽक्षरस्योपासकानां निवृत्तसर्वैषणानां संन्यासिनां परमार्थज्ञाननिष्ठानां धर्मजातं प्रक्रान्तमुपसंह्रियते—

**ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।**
**श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योग-**

शास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो
नाम द्वादशोऽध्यायः ॥ १२ ॥

ये तु संन्यासिनो धर्म्यामृतं धर्मादनपेतं धर्म्यं च तदमृतं च तदमृतत्वहेतुत्वादिदं *यथोक्तम्* अद्वेष्टा सर्वभूतानामित्यादिना *पर्युपासते*ऽनुतिष्ठन्ति *श्रद्दधानाः* सन्तो मत्परमा यथोक्तोऽहमक्षरात्मा परमो निरतिशया गतिर्येषां ते मत्परमा मद्भक्ता-श्चोत्तमां परमार्थज्ञानलक्षणां *भक्तिमाश्रिता*स्ते*ऽतीव मे प्रियाः* । प्रियो हि ज्ञानिनोऽत्यर्थमिति यत्सूचितं तद्व्याख्यायेहोपसंहृतं भक्तास्तेऽतीव मे प्रिया इति । यस्माद्धर्म्यामृतमिदं यथोक्तमनुतिष्ठन्भगवतो विष्णोः परमेश्वरस्यातीव मे प्रियो भवति तस्मादिदं धर्म्यामृतं मुमुक्षुणा यत्नतोऽनुष्ठेयं विष्णोः प्रियं परं धाम जिगमिषुणेति वाक्यार्थः ॥ २० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छं-
करभगवतः कृतौ श्रीभगवद्गीताभाष्ये भक्तियोगो नाम
द्वादशोऽध्यायः ॥ १२ ॥



# त्रयोदशोऽध्यायः ।

सप्तमेऽध्याये सूचिते द्वे प्रकृती ईश्वरस्य त्रिगुणात्मिकाऽष्टधा भिन्नाऽपरा संसारहेतुत्वात्परा चान्या जीवभूता क्षेत्रज्ञलक्षणेश्वरात्मिका याभ्यां प्रकृतिभ्यामीश्वरो जगदुत्पत्तिस्थितिलयहेतुत्वं प्रतिपद्यते । तत्र क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयनिरूपणाद्वारेण तद्वत ईश्वरस्य तत्त्वनिर्धारणार्थं क्षेत्राध्याय आरभ्यते । अतीतानन्तराध्याये चाद्वेष्टा सर्वभूतानामित्यादिना यावदध्यायपरिसमाप्तिस्तावत्तत्त्वज्ञानिनां संन्यासिनां निष्ठा यथा ते वर्तन्त इत्येतदुक्तम् । केन पुनस्ते तत्त्वज्ञानेन युक्ता यथोक्तधर्माचरणाद्भगवतः प्रिया भवन्तीत्येवमर्थश्चायमध्याय आरभ्यते । प्रकृतिश्च त्रिगुणात्मिका सर्वकार्यकरणविषयाकारेण परिणता पुरुषस्य भोगापवर्गार्थकर्तव्यतया देहेन्द्रियाद्याकारेण संहन्यते । सोऽयं सघात इदं शरीरं तदेतत्—

**श्रीभगवानुवाच—**

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १ ॥

इदमिति सर्वनाम्नोक्तं विशिनष्टि शरीरमिति । हे कौन्तेय क्षतत्राणात्क्षयात्क्षरणात्क्षेत्रवद्वास्मिन्कर्मफलनिर्वृत्तेः क्षेत्रमिति । इतिशब्द एवंशब्दपदार्थकः क्षेत्रमित्येवमभिधीयते कथ्यते । एतच्छरीरं क्षेत्रं यो वेत्ति विजानात्यापादतलमस्तकं ज्ञानेन विषयीकरोति स्वाभाविकेनौपदेशिकेन वा वेदनेन विषयीकरोति विभागशस्तं वेदितारं प्राहुः कथयन्ति क्षेत्रज्ञ इति । इतिशब्द एवंशब्दपदार्थक एव पूर्ववत्क्षेत्रज्ञ इत्येवमाहुः । के, तद्विदस्तौ क्षेत्रक्षेत्रज्ञौ ये विदन्ति ते तद्विदः ॥ १ ॥

एवं क्षेत्रक्षेत्रज्ञावुक्तौ किमेतावन्मात्रेण ज्ञानेन ज्ञातव्याविति, नेत्युच्यते—

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥

क्षेत्रज्ञं यथोक्तलक्षणं चापि मां परमेश्वरमसंसारिणं विद्धि जानीहि । सर्वक्षेत्रेषु यः क्षेत्रज्ञो ब्रह्मादिस्तम्बपर्यन्तानेकक्षेत्रोपाधिप्रविभक्तस्तं निरस्तसर्वोपाधिभेदं सदसदादिशब्दप्रत्ययागोचरं विद्धीत्यभिप्रायः । हे भारत यस्मात्क्षेत्रक्षेत्रज्ञेश्वरयाथात्म्य-

व्यतिरेकेण न ज्ञानगोचरमन्यदवशिष्टमस्ति तस्मात्क्षेत्रक्षेत्रज्ञयोर्ज्ञेयभूतयोर्यज्ज्ञानं क्षेत्रक्षेत्रज्ञौ येन ज्ञानेन विषयीक्रियेते तज्ज्ञानं सम्यग्ज्ञानमिति मतमभिप्रायो ममेश्वरस्य विष्णोः ॥

ननु* सर्वक्षेत्रेष्वेक एवेश्वरो नान्यस्तद्व्यतिरिक्तो भोक्ता विद्यते चेत्तत ईश्वरस्य संसारित्वं प्राप्तमीश्वरव्यतिरेकेण वा संसारिणोऽन्यस्याभावात्संसाराभावप्रसङ्गस्तच्चोभयमनिष्टं बन्धमोक्षतद्धेतुशास्त्रानर्थक्यप्रसङ्गात्प्रत्यक्षादिप्रमाणविरोधाच्च। प्रत्यक्षेण तावत्सुखदुःखतद्धेतुलक्षणः संसार उपलभ्यते। जगद्वैचित्र्योपलब्धेश्च धर्माधर्मनिमित्तः संसारोऽनुमीयते। सर्वमेतदनुपपन्नमात्मेश्वरैकत्वे।

न—

I (i) ज्ञानाज्ञानयोरन्यत्वेनोपपत्तेः। दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता (Katha Upa II 4)। तथा च तयोर्विद्याविद्याविषययोः फलभेदोऽपि विरुद्धो निर्दिष्टः श्रेयश्च प्रेयश्चेति। विद्याविषयः श्रेयः प्रेयस्त्वविद्याकार्यमिति। तथा च व्यासः—'द्वाविमावथ पन्थानौ' (Mbh XII 240 6) इत्यादि इमौ द्वावेव पन्थानावित्यादि च। इह च द्वे निष्ठे उक्ते।

(ii) अविद्या च सह कार्येण विद्यया हातव्येति श्रुतिस्मृतिन्यायेभ्योऽवगम्यते। (a) श्रुतयस्तावत्—'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः' (Katha Upa II 5), तमेव विद्वानमृत इह भवति, नान्यः पन्था विद्यतेऽयनाय (Sve Upa III 8), विद्वान्न बिभेति कुतश्चन (Tai Upa II 4), अविदुषस्तु—अथ तस्य भयं भवति (Tai Upa II 7), अविद्याया

*Sankara introduces a Purvapaksa in order to explain his doctrine of the indentity of the Jiva and Brahman

Opposition—'Indentity of Jiva and Brahman' will lead to (1) God Himself being the Jiva or (2) there being no Jiva (संसाराभाव) and these will in their turn lead to (3) the Uselessness of the Scripture and (4) Inconsistency with Perception, Inference, etc.

Proposition—Our Doctrine can be proved, because

[ (i) Knowledge is different from Ignorance, and

(ii) Ignorance and its Effect (the idea of the soul in transmigration, etc.) are to be abandoned, [and the Knowledge (that whatever is is Braman alone) is to be accepted]

[ (i) Katha Upa II 4, MBh. XII. 214 6, Gitā

(ii) (a) Srutis (Katha, Sve. etc), (b) Smrtis,

मन्तरे वर्तमाना' ( Katha Upa. II 5 ), ब्रह्म वेद ब्रह्मैव भवति ( Mu. Upa III. 2 9 ), अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेव स देवानाम् ( Br Upa. I 4 10 ), आत्मवित् स इदं सर्वं भवति ( Ibid ) यदा चर्मवत् ( Sve Upa. VI. 20 ) इत्याद्या सहस्रशः । (b) स्मृतयश्च—' अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ' ( V 15 ), ' इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ' ( V. 19 ), ' समं पश्यन्हि सर्वत्र ' ( XIII. 28 ) इत्याद्या ।

(c) न्यायतश्च—सर्पान्कुशाग्राणि तथोदपानं ज्ञात्वा मनुष्याः परिवर्जयन्ति ।
अज्ञानतस्तत्र पतन्ति केचिज्ज्ञाने फलं पश्य यथा विशिष्टम् ॥
( MBh XII. 201. 16 )

तथा च देहादिष्वात्मबुद्धिरविद्वान्रागद्वेषादिप्रयुक्तो धर्माधर्मानुष्ठानकृज्जायते म्रियते चेत्यवगम्यते देहादिव्यतिरिक्तात्मदर्शिनो रागद्वेषादिप्रहाणापेक्षधर्माधर्मप्रवृत्त्युपशमान्मुच्यन्त इति न केनचित्प्रत्याख्यातुं शक्यं न्यायतः । तत्रैवं सति क्षेत्रज्ञस्येश्वरस्यैव सतोऽविद्याकृतोपाधिभेदतः संसारित्वमिव भवति ।

II यथा देहाद्यात्मत्वमात्मनः । सर्वजन्तूनां हि प्रसिद्धो देहादिष्वनात्मस्वात्मभावो

---

(c) Illustration ( nyāya ) viz, MBh. XII. 201 16 ]

Conclusion, Ksetrajña remains as God and yet He becomes the Jiva ( samsārin ) as it were (iva) due to a particular limitation ( उपाधि ), caused to Him by Ignorance ( अविद्या )

II God becoming Jiva is like the soul taking the body, etc. to be he himself This error of the soul is known as a fact to all and is due to Ignorance The soul identifying himself with the body, etc., is like a man taking a pillar to be a human being

Opposition—The two are cases unlike each other In the Illustration the Pillar and the Purusa (human being for which the Pillar is mistaken ) are both objects of perception (ज्ञेय); but in the Illustrated, the body alone is an object of perception (ज्ञेय) while the soul (for which the body is mistaken) is the subject preceiving (ज्ञातृ), in the former a third person who is the perceiver identifies the Pillar and the Purusa, but in the latter the perceiver and the perceived are identified with each other. Hence, in the latter, we may conclude that the characte-

निश्चितोऽविद्याकृत । यथा स्थाणौ पुरुषनिश्चयो न चैतावता पुरुषधर्मः स्थाणोर्भवति स्थाणुधर्मो वा पुरुषस्य तथा न चैतन्यधर्मो देहस्य देहधर्मो वा चेतनस्य। सुखदुःखमोहात्मकत्वादिरात्मनो न युक्तोऽविद्याकृतत्वाविशेषाज्जरामृत्युवत्।

पूर्वपक्ष -नातुल्यत्वात्*, स्थाणुपुरुषौ ज्ञेयावेव सन्तौ ज्ञात्रान्योन्यस्मिन्नध्यस्तावविद्यया देहात्मनोस्तु ज्ञेयज्ञात्रोरेवेतरेतराध्यास इति न समो दृष्टान्तोऽतो देहधर्मो ज्ञेयोऽपि ज्ञातुरात्मनो भवतीति चेत्।

सिद्धान्त -( i ) न, अचैतन्यादिप्रसङ्गात्। यदि हि ज्ञेयस्य देहादेः क्षेत्रस्य धर्माः सुखदुःखमोहेच्छादयो ज्ञातुर्भवन्ति तर्हि ज्ञेयस्य क्षेत्रस्य धर्माः केचनात्मनो भवन्त्यविद्याध्यारोपिताः जरामरणादयस्तु न भवन्तीति विशेषहेतुर्वक्तव्यः। न भवन्तीत्यनुमानमविद्याध्यारोपितत्वाज्जरादिवदिति हेयत्वादुपादेयत्वाच्चेत्यादि। तत्रैवं सति कर्तृत्वभोक्तृत्वलक्षणः संसारो ज्ञेयस्थो ज्ञातर्यविद्ययाध्यारोपित इति न तेन ज्ञातुः किंचिद्दुष्यति। यथा बालैरध्यारोपितेनाकाशस्य तलमलवत्त्वादिना। एवं च सति सर्वक्षेत्रेष्वपि सतो भगवतः क्षेत्रज्ञस्येश्वरस्य संसारित्वगन्धमात्रमपि नाशङ्क्यम्। न हि क्वचिदपि लोकेऽविद्याध्यस्तेन धर्मेण कस्यचिदुपकारोऽपकारो वा दृष्टः।

(ii) यत्तूक्तं न समो दृष्टान्त इति तदसत्। कथम्। ( a ) अविद्याध्यासमात्रं

---

ristics of the body, e g, सुख, दुःख, मोह, इच्छा etc, though jñeya (*object of perception*), belong really (= not by an error) to the soul, the perceiver (who may be supposed to possess them anyhow through his contact with the body)

Proposition-( i ) The *Purvapaksa's conclusion* will lead to the soul becoming jaḍa 'an inanimate object' like the body and also having old age, death, etc, which primarily belong to the body But as a matter of fact we know by inference that the old age, etc, do not belong to the soul, since the old age, etc are अविद्याध्यारोपित and since *the soul can avoid them as well as can receive them at* his option Hence we (= the Siddhāntin) would conclude that 'mundane life (*samsāra, viz*, doing actions, reaping their fruits, etc)' really belongs to the body (= jñeya),

*ASS reads अतुल्यत्वादिति चेत् for नातुल्यत्वात्. But this is wrong, because स्थाणुपुरुषौ etc *is the* पूर्वपक्ष

हि दृष्टान्तदार्ष्टान्तिकयोः साधर्म्यं विवक्षितम् । तन्न व्याभिचरति । (b) यत्तु ज्ञानादि व्यभिचरतीति मन्यसे तस्याप्यनैकान्तिकत्वं दर्शितं जरादिभिः ।

III पूर्वपक्षः–अविद्यावत्त्वात्क्षेत्रज्ञस्य संसारित्वमिति चेत् ।

सिद्धान्तः—न, (i) अविद्यायास्तामसत्वात् । तामसो हि प्रत्यय आवरणात्म-

---

but is through error (avidyā) attributed to the soul, the preceiver (jñātr); and that, for that reason, the soul is not at all stained by old age, etc. If we, then, apply the Illustration to the Illustrated, the Lord though present in all bodies will not in the least be samsārin.

(ii) The Pūrvapaksa's argument that the two cases are not like each other is also wrong (असत्). (a) The error of mistaking one (the Pillar, the body) for the other (the Purusa, the soul)—technically known as *adhyāsa* is the invariable point of similarity (sādharmya) between the two cases and that *sādharmya* only is meant by us when we say that the case of the Pillar and the Purusa illustrates the case of the body and the soul. (b) The opponent has also argued that in the Illustrated (दार्ष्टान्तिक), some attributes of the body, *viz*, सुख, दुःख, मोह, इच्छा, do come to belong to the soul by some unknown way. But we have shown that this is not a fact (अनैकान्तिक = not an absolute truth), since old age, death, etc., belong to the body but never happen to belong to the soul; if some attributes of the body belong to the soul, why should other attributes of the same also not belong to him?

III. Opposition—God, in so far as He possesses Ignorance (as His limitation, उपाधि), (gets old age, death, etc. and thus) experiences a mundane existence (samsāra).

Proposition—What is the nature of Ignorance?

(i) Firstly, Ignorance is of the nature of Darkness (*tamas*) Just as Darkness disappears at the arrival of Light (प्रकाश), so Ignorance (avidyā) disappears at the approach of (light in the form of) discrimination

त्वादविद्या (a) विपरीतग्राहकः (b) संशयोपस्थापको (c) वाग्रहणात्मको वा। विवेकप्रकाशभावे तदभावात्। तामसे चावरणात्मके तिमिरादिदोषे सत्यग्रहणादेरविद्यात्रयस्योपलब्धेः। (ii) पू०–अत्रादेव तर्हि ज्ञातृधर्मोऽविद्या। सि०–न, करणे चक्षुषि तैमिरिकत्वादिदोषोपलब्धेः। पू०–यत्तु मन्यसे "ज्ञातृधर्मोऽविद्या तदेव चाविद्याधर्मवत्त्वं क्षेत्रज्ञस्य संसारित्वम्। तत्र यदुक्तमीश्वर एव क्षेत्रज्ञो न संसारीत्येतदयुक्तमिति," सि०–तन्न, यथा करणे चक्षुषि विपरीतग्राहकादिदोषस्य दर्शनात्र विपरीतादिग्रहणं तन्निमित्तो वा तैमिरिकत्वादिदोषो ग्रहीतुः। चक्षुषः संस्कारेण तिमिरेऽपनीते ग्रहीतुरदर्शनान्न ग्रहीतुर्धर्मो यथा तथा सर्वत्रैवाग्रहणविपरीतसंशयप्रत्ययास्तन्निमित्ताः करणस्यैव कस्यचिद्भवितुमर्हन्ति न ज्ञातुः क्षेत्रज्ञस्य। (iii) संवेद्यत्वाच्च तेषां प्रदीपप्रकाशवत्त्र ज्ञातृधर्मत्वम्। संवेद्यत्वादेव स्वात्मव्यतिरिक्तसंवेद्यत्वम्।

---

(*viveka*). And Ignorance is three-fold, *viz*, (a) non-perception (अग्रहण), (b) a doubt (संशय)=a perception cognizing a doubt, and (c) a wrong perception (विपरीत ग्रहण) Any of these three cognitions becomes possible only when the defect in the form of a cataract (*timira*) etc. exists; and *timira* is of the nature of āvarana '*covering* or concealing (the fact)' which, in its turn, is *tāmasa* 'of the nature of Darkness.' (ii) Though Ignorance is a non-perception, a doubt and a wrong perception, the opponent may argue that in so far as It is a kind of perception, It is a characteristic of the Perceiver (ज्ञातृधर्म). The Siddhāntin would retort that the defect or disease of 'being possessed of a cataract' (*taimirikatva*) is found to be *in the eye* which is a sense or an instrument (karana) with which a perceiver perceives.........If by the application of a medicine to the eye (or by an operation of the eye) the cataract be removed, the perceiver will no longer exist and hence the Ignorance is *not* an attribute of the Perceiver. In the same way the cognitions of non-perception, wrong perception and doubt in all things due to the Ignorance should belong to the instrument *only* whatever that instrument may be, but not to the Perceiver the Ksetrajña. (iii) Thirdly, as these cognitions are themselves cognizable (*saṁvedya*) like the light of a lamp, they are (only ज्ञेय and) no attributes

( iv ) सर्वकरणवियोगे च नैकस्थे सर्ववादिभिरविद्यादिदोषवत्त्वानभ्युपगमात् । आत्मनो यदि क्षेत्रज्ञस्यागन्तुकस्वो धर्मस्ततो न कदाचिदपि तेन वियोगः स्यात् । ( v ) अविक्रियस्य च व्योमवत्सर्वगतस्यामूर्तस्यात्मनः केनचित्संयोगवियोगानुपपत्तेः सिद्ध क्षेत्रज्ञस्य नित्यमेवेश्वरत्वम् । ( vi ) अनादित्वान्निर्गुणत्वादित्यादीश्वरवचनाच्च ।

IV —पूर्वपक्ष — नन्वेवं सति संसारसंसारित्वाभावे शास्त्रानर्थक्यादिदोषः स्यादिति ।

सिद्धान्त —न, ( 1 ) सर्वैरभ्युपगतत्वात् । सर्वैरात्मवादिभिरभ्युपगतो दोषो नैकेन परिहर्तव्यो भवति । कथमभ्युपगत इति, मुक्तात्मनां संसारसंसारित्वव्यवहाराभाव सर्वैरेवात्मवादिभिरिष्यत । न च तेषा शास्त्रानर्थक्यादिदोषप्राप्तिरभ्युपगता । तथा नः क्षेत्रज्ञानामीश्वरैकत्वे सति शास्त्रानर्थक्य भवतु, अविद्याविषये चार्थवत्त्वम् । यथा द्वैतिनां सर्वेषां बन्धावस्थायामेव शास्त्राद्यर्थवत्त्वं न मुक्तावस्थायामेवम् । नन्वात्मनो बन्धमुक्तावस्थे परमार्थत एव वस्तुभूते द्वैतिनां न सर्वेषामतो हेयोपादेयतत्साधनसद्भावे शास्त्राद्यर्थवत्त्वं स्याद्द्वैतिना पुनर्द्वैतस्यापरमार्थत्वादविद्याकृतत्वाद्बन्धावस्थायाश्चाऽऽत्मनोऽपरमार्थत्वे निर्विषयत्वाच्छास्त्राद्यानर्थक्यमिति चेत् । न,

---

of the cognizer ( ज्ञातृ ) (iv) Fourthly, the followers of all Schools of Philosophy assume that when the sou is in isolation (i e, free from all instruments or senses), he is free from all defects in the form of the Ignorance (v) Fifthly, as the soul is by nature omnipresent, and bodiless like the Ether, he cannot really come into contact with, or be separated from, anything including even the Avidyā (vi) Also because of the Lord s words that the soul is beginningless and *attributeless* (nirguna), *avidyā* cannot be his attribute

Hence the eternal Lordship of the Ksetrajña (meaning that He is never the soul in the bondage) is proved

IV Opposition—If so the Scripture, dealing with transmigration and the soul undergoing it, will be meaningless (and useless)

Proposition—The fault (dosa) does not arise because,

(1) All Schools believing in the existence of the soul have to answer or to admit that fault The dualists believe that the Scripture is useless to the liberated souls

आत्मनोऽवस्थाभेदानुपपत्ते । यदि तावदात्मनो बन्धमुक्तावस्थे युगपत्स्यातां क्रमेण वा । युगपत्तावद्विरोधान्न सम्भवतः स्थितिगती इवैकस्मिन् । क्रमभावित्वे च निर्निमित्तत्वेऽनिर्मोक्षप्रसङ्गोऽन्यनिमित्तत्वे च स्वतोऽभावादपरमार्थत्वप्रसङ्गः । तथा च सत्यभ्युपगमहानिः । किंच बन्धमुक्तावस्थयो पौर्वापर्यनिरूपणायां बन्धावस्था पूर्वं प्रकल्प्यानादिमत्यन्तवती च तच्च प्रमाणविरुद्धं तथा मोक्षावस्थादिमत्यनन्ता च प्रमाणविरुद्धैवाभ्युपगम्यते । न चावस्थावतोऽवस्थान्तरं गच्छतो नित्यत्वमुपपादयितुं शक्यम् । अथानित्यत्वदोषपरिहाराय बन्धमुक्तावस्थाभेदो न कल्प्यतेऽतो द्वैतिनामपि शास्त्रानर्थक्यादिदोषोऽपरिहार्य एवेति समानत्वान्नाद्वैतवादिना परिहर्तव्यो दोषः ।

( ii ) न च शास्त्रानर्थक्य ( a ) यथाप्रसिद्धाविद्वत्पुरुषविषयत्वाच्छास्त्रस्य । अविदुषा हि फलहेत्वोरनात्मनोरात्मदर्शनम् न विदुषः विदुषो हि फलहेतुभ्यामात्मनोऽन्यत्वदर्शने सति तयोरहमित्यात्मदर्शनानुपपत्ते । न ह्यत्यन्तमूढ उन्मत्तादिरपि जलाग्न्योश्छायाप्रकाशयोर्वैकात्म्यं पश्यति किमुत विवेकी । तस्मान्न विधिप्रतिषेधशास्त्रं तावत्फलहेतुभ्यामात्मनोऽन्यत्वदर्शिनो भवति । न हि देवदत्त त्वमिदं कुर्विति कस्मिंश्चित्कर्मणि नियुक्ते विष्णुमित्रोऽहं नियुक्त इति तत्रस्थो

---

and useful to the bound ones We, non-dualists, hold that the souls identifying themselves with God do not need the Scripture, but those in Ignorance require it The belief of the dualists that the soul really passes through the stages of ( real ) bondage and liberation, is a wrong belief and therefore that belief cannot support the dualists [If the soul be eternal ( nitya ), he cannot be subject to real states of liberation and bondage If the dualist admits that these states are not real, he will have to admit that the Scripture is not really useful to anybody So, he has the same dosa as we ]

(ii) Nor is the Scripture really useless, because (a) it is meant for an ignorant man, as is very well known The Scripture meant here lays down certain injunctions and prohibitions for' certain rewards and their means It is the ignorant who look upon these rewards and means as their own self The wise do not So, the Scripture applies to the ignorant [The wise sage also as long as he was in ignorance looks upon the rewards and means as his own self and so in that stage of ignorance the

नियोग शृण्वन्नपि प्रतिपद्यते । नियोगविषयविवेकाग्रहणात्तूपपद्यते प्रतिपत्तिस्तथा फलहेत्वोरपि । ननु प्राकृतसम्बन्धापेक्षया युक्तैव प्रतिपत्ति शास्त्रार्थविषया फलहेतु-व्यामन्यात्मत्वदर्शनेऽपि सतोष्टफलहेतौ प्रवर्तितोऽस्म्यनिष्टफलहेतोश्च निवर्तितोऽस्मीति । यथा पितृपुत्रादीनामितरेतरात्मान्यत्वदर्शने सत्यप्यन्योन्यनियोगप्रतिषेधार्थप्रतिपत्ति । न व्यतिरिक्तात्मदर्शनप्रतिपत्त प्रागेव फलहेत्वोरात्माभिमानस्य सिद्धत्वात् । प्रतिपन्ननियोगप्रतिषेधार्थो हि फलहेतुभ्यामात्मनोऽन्यत्व प्रतिपद्यते न पूर्व तस्मा द्विधिप्रतिषेधशास्त्रमविद्वद्विषयमिति सिद्धम् । (b) ननु स्वर्गकामो यजेत कलञ्ज न भक्षयेदित्यादावात्मव्यतिरेकदर्शिनामप्रवृत्तौ केवलदेहाद्यात्मदृष्टीना च । अत कर्तुरभावाच्छास्त्रानर्थक्यमिति चेत् । न, यथाप्रसिद्धित एव प्रवृत्तिनिवृत्त्युपपत्ते । ईश्वरक्षेत्रज्ञैकत्वदर्शी ब्रह्मवित्तावन्न प्रवर्तते । तथा नैरात्म्यवाद्यपि नास्ति परलोक इति न प्रवर्तते । यथाप्रसिद्धितस्तु विधिप्रतिषेधशास्त्रश्रवणान्यथानुपपत्त्याऽनुमितात्मास्तित्व आत्मविशेषानभिज्ञ कर्मफलसजाततृष्ण श्रद्दधानतया च प्रवर्तत इति सर्वेषां न प्रत्यक्षमतो न शास्त्रानर्थक्यम् । (c)-पू०-विवेकिनामप्रवृत्तिदर्शनात्तदनुगामिनामप्रवृत्तौ शास्त्रानर्थक्यमिति चेत् । सि०-न, कस्यचिदेव विवेकोपपत्ते । अनेकेषु हि प्राणिषु कश्चिदेव विवेकी स्याद्यथेदानीम् । न च विवेकिनमनुवर्तन्ते मूढा रागादिदोषतन्त्रत्वात्प्रवृत्ते, अभिचरणादौ च प्रवृत्तिदर्शनात्, स्वाभाव्याच्च प्रवृत्ते स्वभावस्तु प्रवर्तत इति हुक्तम् । तस्मादविद्यामात्र ससारो यथादृष्ट-विषय एव । न क्षेत्रज्ञस्य केवलस्याविद्या तत्कार्य च । न च मिथ्याज्ञान परमार्थवस्तु दूषयितु समर्थम् । न ह्युषरदेश स्नेहेन पङ्कीकर्तुं शक्नोति

Scripture is useful to him also.] (b) By the "ignorant" is not meant a *nairatmyavadin* who believes that there is no Atman except the body but it means one who believes in the existence of the Atman without knowing his real nature (c) Though the sage 'who knows the real nature of Atman' (*viveki*) will not be prompted to act by the Scripture, such sages are rare and people at large being foolish (= ignorant) do not follow the example of a sage for several reasons, *e g*, attachment and hatred cause activity, people practise Black Magic, activity is but natural. [So, we may conclude that mundane life is the Ignorance itself and the Ksetrajña has nothing to do with the Ignorance and its effect (the world) We may here add that Ignorance or False Knowledge on the part of the soul who is really identical with God cannot stain the real nature of the soul.]

मरीच्युदकं तथाविद्या क्षेत्रज्ञस्य न किंचित्कर्तुं शक्नोति । अतश्चेदमुक्तं ' क्षेत्रज्ञं चापि मां विद्धि ' (XIII 2) ' अज्ञानेनावृतं ज्ञानम् ' (V 15) इति च । (d) पू०- अथ किमिदं मसारिणामिवाहमेव ममैवेदमिति पण्डितानामपि । सि० शृणु इदं तत्पाण्डित्यं यत्क्षेत्र एवात्मदर्शनम् । यदि पुनः क्षेत्रज्ञमविक्रियं पश्येयुस्ततो न भोगं कर्म वाकाङ्क्षेयुर्मम स्यादिति । विक्रियैव भोगकर्मणी । अथैवं सति फलार्थित्वाद विद्वान्प्रवर्तते । विदुषः पुनरविक्रियात्मदर्शिनः फलार्थित्वाभावात्प्रवृत्त्यनुपपत्तौ कार्यकरणसंघातव्यापारोपरमे निवृत्तिरुपचर्यते । इदं चान्यत्पाण्डित्यं केषांचिदस्तु क्षेत्रज्ञ ईश्वर एव क्षेत्रं चान्यत्क्षेत्रज्ञस्य विषयः । अहं तु संसारी सुखी दुःखी च । संसारोपरमश्च मम कर्तव्यः क्षेत्रक्षेत्रज्ञविज्ञानेन ध्यानेन चेश्वरं क्षेत्रज्ञं साक्षात्कृत्वा तत्स्वरूपावस्थानेनेति । यश्चैवं बुध्यते यश्च बोधयति नासौ क्षेत्रज्ञ इति । एवं मन्वानो यः स पण्डितापसदः संसारमोक्षयोः शास्त्रस्य चार्थवत्त्वं करोमीति । आत्महा स्वयं मूढोऽन्यांश्च व्यामोहयति शास्त्रार्थसंप्रदायरहितत्वाच्छ्रुतहानिमश्रुतकल्पनां च कुर्वन् । तस्मादसंप्रदायवित्सर्वशास्त्रविदपि मूर्खवदेवोपेक्षणीयः ।

V. पूर्वपक्षः—यत्तूक्तमीश्वरस्य क्षेत्रज्ञैकत्वे संसारित्वं प्राप्नोति क्षेत्रज्ञानां चेश्वरैकत्वे संसारिणोऽभावात्संसाराभावप्रसङ्ग इति ।

सिद्धान्तः—(1) एतौ दोषौ प्रत्युक्तौ विद्याविद्ययोर्वैलक्षण्याभ्युपगमादिति । कथम् ।

---

(d) The opponent may say that the notions of 'I am thus (अहमेवम्)' and 'This is mine (मम इदम्)' are common to both the Ignorant (संसारिन्) and to the wise (पण्डित) The reply of the Siddhantin is that the really wise sage must be distinguished from the pseudo-wise. The latter may know (verbally) all Scriptures but he must be neglected, because he does not know their traditional interpretation (संप्रदाय) The really wise sage has no notions of मम इदम् and अहमेवम्

V Now we shall consider the two arguments of the Opponent, viz, (1) God being identical with the Ksetrajna will become the soul in bondage, and (2) souls in bondage being one with God, there will be no really bound soul (संसारिन्) and hence no mundane existence

(1) Our reply to (1) is that God will not be stained by any defect imagined or assumed through the Ignorance Our reply to (2) is that the mundane life and one living that life can be explained to be imagined by Ignorance.

( iv ) पू०—गन्त्वयमेव दोषो यदोषवत्क्षेत्रविज्ञातृत्वम् । सि०—न, विज्ञानस्वरूपस्यैवाविक्रियस्य विज्ञातृत्वोपचारात् । यथोष्णतामात्रेणाग्नेस्तप्तिक्रियोपचारस्तद्वत् । यथात्र भगवता क्रियाकारकफलात्मत्वाभाव आत्मनि स्वत एव दर्शितोऽविद्याध्यारोपितैरेव क्रियाकारकाद्यात्मन्युपचर्यते तथा तत्र तत्र 'य एनं वेत्ति हन्तारम्' (II. 19) 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः' (III 27.) 'नादत्ते कस्यचित्पापम्' (V. 15) इत्यादिप्रकरणेषु दर्शितस्तथैव च व्याख्यातमस्माभिः। उत्तरेषु च प्रकरणेषु दर्शयिष्यामः । (v) पू०—हन्त तर्ह्यात्मनि क्रियाकारकफलात्मतायाः स्वतोऽभावेऽविद्यया चाध्यारोपितत्वे कर्माण्यविद्वत्कर्तव्यान्येव न विदुषामिति प्राप्तम् । सि०—सत्यमेव प्राप्तम् । एतदेव च न हि देहभृता शक्यमित्यत्र (XVIII. 11) दर्शयिष्यामः। सर्वशास्त्रार्थोपसंहारप्रकरणे च 'समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा' (XVIII. 50) इत्यत्र विशेषतो दर्शयिष्यामः । अलमिह बहुप्रपञ्चेनेत्युपसंह्रियते ॥ २ ॥

---

inferred is known to the inferer and hence is an object of the inferer's knowledge ), you will have to assume that this *another* person (= inferer) is different from the knower who prossess अविद्या (= is the पक्ष of अविद्या); and so on *ad infinitum*.

(iv) Pūrvapaksa-The दोष in the Ksetrajña will be the fact itself that he is the knower of the Ksetra which is full of dosas or defects.

Siddhānta—The word "knower" is only in a secondary sense applied to the soul who is of the nature of pure knowledge and always changeless, अग्नि, is only heat but we say 'अग्नि heats'.—The Lord has Himself shown that Atman has nothing to do with action, agent, and reward of action. He has shown this in the present verse (अत्र = XIII. 2); and in the same way he has shown the same in other verses of the Gītā (II. 19, III. 27, V. 15). Śankara has explained this (XIII. 2) and other verses similarly *i. e.* according to the Lord's intention, and will do so in the case of verses to follow.

(v) Pūrvapaksa—All actions being falsely superimposed on Atman are prescribed by the Śāstra only for the Ignorant.

Siddhānta—Yes. That is the sense of XIII. 11 and XVIII. 50, as Śankara is going to explain in his comments on these verses.

इदं शरीरमित्यादिश्लोकोपदिष्टस्य क्षेत्राध्यायार्थस्य संग्रहश्लोकोऽयमुपन्यस्यते तत्क्षेत्रं यच्चेत्यादि व्याचिख्यासितस्य चार्थस्य संग्रहोपन्यासो न्याय्य इति—

तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥

यन्निर्दिष्टमिदं शरीरमिति तत्तच्छब्देन परामृशति । यच्चेदं निर्दिष्टं क्षेत्रं तच्च यादृग्यादृशं स्वकार्यैर्धर्मैः । चशब्दः समुच्चयार्थः । यद्विकारि यो विकारोऽस्य तद्यद्विकारि यतो यस्माच्च यत्कार्यमुत्पद्यत इति वाक्यशेषः । स च यः क्षेत्रज्ञो निर्दिष्टः स यत्प्रभावो ये प्रभावा उपाधिकृताः शक्तयो यस्य स यत्प्रभावश्च तत्क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं यथाविशेषितं समासेन संक्षेपेण मे मम वाक्यतः शृणु श्रुत्वावधारयेत्यर्थः ॥ ३ ॥

तत्क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं विवक्षितं स्तौति श्रोतृबुद्धिप्ररोचनार्थम्—

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥

ऋषिभिर्वसिष्ठादिभिर्बहुधा बहुप्रकारं गीतं कथितं छन्दोभिश्छन्दांसि ऋगादीनि तैश्छन्दोभिर्विविधैर्नानाप्रकारैः पृथग्विवेकेन गीतम् । किंच ब्रह्मसूत्रपदैश्चैव ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि तैः पद्यते गम्यते ज्ञायते ब्रह्मेति तानि पदान्युच्यन्ते । तैरेव च क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं गीतमित्यनुवर्तते । 'आत्मेत्येवोपासीत' (Br Upa I 4 7) इत्यादिभिर्हि ब्रह्मसूत्रपदैरात्मा ज्ञायते । हेतुमद्भिर्युक्तियुक्तैर्विनिश्चितैर्निःसंशयरूपैर्निश्चितप्रत्ययोत्पादकैरित्यर्थः ॥ ४ ॥

स्तुत्याभिमुखीभूतायार्जुनायाह—

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५ ॥

महाभूतानि महान्ति च तानि सर्वविकारव्यापकत्वाद्भूतानि च सूक्ष्माणि । स्थूलानि त्विन्द्रियगोचरशब्देनाभिधायिष्यन्ते । अहंकारो महाभूतकारणमहंप्रत्ययलक्षणः । अहंकारकारणं बुद्धिरध्यवसायलक्षणा । तत्कारणमव्यक्तमेव च न व्यक्तमव्यक्तमव्याकृतमीश्वरशक्तिर्मम माया दुरत्ययेत्युक्तम् ( VII 14 ) एवशब्दः प्रकृत्यवधारणार्थः । एतावत्येवाष्टधा भिन्ना प्रकृतिः । चशब्दो भेदसमुच्चयार्थः । इन्द्रियाणि दश श्रोत्रादीनि पञ्च बुद्ध्युत्पादकत्वाद्बुद्धीन्द्रियाणि वाक्पाण्यादीनि पञ्च कर्मनिर्वर्तकत्वात्कर्मेन्द्रियाणि तानि दश । एकं च किं तन्मन एकादशं संकल्पाद्यात्मकम् । पञ्च चेन्द्रियगोचराः शब्दादयो विषयाः । तान्येतानि सांख्याश्चतुर्विंशतितत्त्वान्याचक्षते ॥ ५ ॥

अथेदानीमात्मगुणा इति यानाचक्षते वैशेषिकास्तेऽपि क्षेत्रधर्मा एव न तु क्षेत्रज्ञस्येत्याह भगवान्—

( iv ) पू०—नन्वयमेव दोषो यद्दोषवत्क्षेत्रविज्ञातृत्वम् । सि०—न, विज्ञानस्वरूपस्यैवाविक्रियस्य विज्ञातृत्वोपचारात् । यथोष्णतामात्रेणाग्नेस्तप्तिक्रियोपचारस्तद्वत् । यथात्र भगवता क्रियाकारकफलात्मत्वाभाव आत्मनि स्वत एव दर्शितोऽविद्याध्यारोपितैरेव क्रियाकारकादिरात्मन्युपचर्यते तथा तत्र तत्र 'य एनं वेत्ति हन्तारम्' (II. 19) 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः' (III 27.) 'नादत्ते कस्यचित्पापम्' (V. 15) इत्यादिप्रकरणेषु दर्शितस्तथैव च व्याख्यातमस्माभिः। उत्तरेषु च प्रकरणेषु दर्शयिष्यामः । (v) पू०—हन्त तर्ह्यात्मनि क्रियाकारकफलात्मतायाः स्वतोऽभावेऽविद्यया चाध्यारोपितत्वे कर्माण्यविद्वत्कर्तव्यान्येव न विदुषामिति प्राप्तम् । सि०—सत्यमेवं प्राप्तम् । एतदेव च न हि देहभृता शक्यमित्यत्र (XVIII. 11) दर्शयिष्यामः । सर्वशास्त्रार्थोपसंहारप्रकरणे च 'समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा' (XVIII. 50) इत्यत्र विशेषतो दर्शयिष्यामः । अलमिह बहुप्रपञ्चेनेत्युपसंह्रियते ॥ २ ॥

---

inferred is known to the inferer and hence is an object of the inferer's knowledge), you will have to assume that this *another* person (= inferer) is different from the knower who prossess अविद्या (= is the पक्ष of अविद्या); and so on *ad infinitum*.

(iv) Pūrvapaksa—The दोष in the Ksetrajñ a will be the fact itself that he is the knower of the Ksetra which is full of dosas or defects.

Siddhānta—The word "knower" is only in a secondary sense applied to the soul who is of the nature of pure *knowledge and always* changeless, अग्नि, is only heat but we say 'अग्नि heats'.—The Lord has Himself shown that Atman has nothing to do with action, agent, and reward of action. He has shown this in the present verse (अत्र = XIII. 2); and in the same way he has shown the same in other verses of the Gītā (II. 19, III. 27, V. 15). Śankara has explained this (XIII. 2) and other verses similarly *i. e.* according to the Lord's intention, and will do so in the case of verses to follow.

(v) Pūrvapaksa—All actions being falsely superimposed on Atman are prescribed by the Sāstra only for the ignorant

Siddhānta—Yes. That is the sense of XIII. 11 and XVIII. 50, as Śankara is going to explain in his comments on these verses.

इदं शरीरमित्यादिश्लोकोपदिष्टस्य क्षेत्राध्यायार्थस्य संग्रहश्लोकोऽयमुपन्यस्यते तत्क्षेत्रं यच्चेत्यादि व्याचिख्यासितस्य ह्यर्थस्य संग्रहोपन्यासो न्याय्य इति—

तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥

यन्निर्दिष्टमिदं शरीरमिति तत्तच्छब्देन परामृशति । यच्चेदं निर्दिष्टं क्षेत्रं तद्यादृक् स्वकीयैर्धर्मैः । चशब्दः समुच्चयार्थः । यद्विकारि यो विकारोऽस्य तद्यद्विकारि यतश्च यस्माच्च यत्कार्यमुत्पद्यत इति वाक्यशेषः । स च यः क्षेत्रज्ञो निर्दिष्टः स यत्प्रभावो ये प्रभावा उपाधिकृताः शक्तयो यस्य स यत्प्रभावश्च तत्क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं यथाविशेषितं समासेन संक्षेपेण मे मम वाक्यतः शृणु श्रुत्वावधारयेत्यर्थः ॥ ३ ॥

तत्क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं विवक्षितं स्तौति श्रोतृबुद्धिप्ररोचनार्थम्—

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥

ऋषिभिर्वसिष्ठादिभिर्बहुधा बहुप्रकारं गीतं कथितं छन्दोभिश्छन्दांसि ऋगादीनि तैश्छन्दोभिर्विविधैर्नानाप्रकारैः पृथग्विवेकतो गीतम् । किं च ब्रह्मसूत्रपदैश्चैव ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि तैः पद्यते गम्यते ज्ञायते ब्रह्मेति तानि पदान्युच्यन्ते । तैरेव च क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं गीतमित्यनुवर्तते । 'आत्मेत्येवोपासीत' (Br Upa I. 4 7) इत्यादिभिर्हि ब्रह्मसूत्रपदैरात्मा ज्ञायते । हेतुमद्भिर्युक्तियुक्तैर्विनिश्चितैर्निःसंशयरूपैर्निश्चितप्रत्ययोत्पादकैरित्यर्थः ॥ ४ ॥

स्तुत्याभिमुखीभूतायार्जुनायाह—

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५ ॥

महाभूतानि महान्ति च तानि सर्वविकारव्यापकत्वाद्भूतानि च सूक्ष्माणि । स्थूलानि त्विन्द्रियगोचरशब्देनाभिधायिष्यन्ते । अहंकारो महाभूतकारणमहंप्रत्ययलक्षणः । अहंकारकारणं बुद्धिरध्यवसायलक्षणा । तत्कारणमव्यक्तमव्याकृतमीश्वरशक्तिर्मम माया दुरत्ययेत्युक्तम् ( VII 14 ) । एवशब्दः प्रकृत्यवधारणार्थः । एतावत्येवाष्टधा भिन्ना प्रकृतिः । चशब्दो भेदसमुच्चयार्थः । इन्द्रियाणि दश श्रोत्रादीनि पञ्च बुद्ध्युत्पादकत्वाद्बुद्धीन्द्रियाणि वाक्पाण्यादीनि पञ्च कर्मनिर्वर्तकत्वात्कर्मेन्द्रियाणि तानि दश । एकं च किं तन्मनः एकादशं संकल्पाद्यात्मकम् । पञ्च चेन्द्रियगोचराः शब्दादयो विषयाः । तान्येतानि सांख्याश्चतुर्विंशतितत्त्वान्याचक्षते ॥ ५ ॥

अथेदानीमात्मगुणा इति यानाचक्षते वैशेषिकास्तेऽपि क्षेत्रधर्मा एव न तु क्षेत्रज्ञस्येत्याह भगवान्—

इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥

इच्छा यज्जातीयं सुखहेतुमर्थमुपलब्धवान्पूर्वं पुनस्तज्जातीयमुपलभमानस्तमादातुमिच्छति सुखहेतुरिति सेयमिच्छान्तःकरणधर्मो ज्ञेयत्वात्क्षेत्रम् । तथा द्वेषो यज्जातीयमर्थं दुःखहेतुत्वेनानुभूतवान्पुनस्तज्जातीयमुपलभमानस्तं द्वेष्टि सोऽयं द्वेषो ज्ञेयत्वात्क्षेत्रमेव । तथा सुखमनुकूलं प्रसन्नसत्त्वात्मकं ज्ञेयत्वात्क्षेत्रमेव । दुःखं प्रतिकूलात्मकं ज्ञेयत्वात्तदपि क्षेत्रम् । संघातो देहेन्द्रियाणां संहतिः । तस्यामभिव्यक्तान्तःकरणवृत्तिस्तप्त इव लोहपिण्डेऽग्निरात्मचैतन्याभासरसविद्धा चेतना सा च क्षेत्रं ज्ञेयत्वात् । धृतिर्यथावसादप्राप्तानि देहेन्द्रियाणि ध्रियन्ते सा च ज्ञेयत्वात्क्षेत्रम् । सर्वान्तःकरणधर्मोपलक्षणार्थमिच्छादिग्रहणं यद् उक्तं तदुपसंहरति-एतत्क्षेत्रं समासेन सविकारं सह विकारेण महदादिनोदाहृतमुक्तम् । यस्य क्षेत्रभेदजातस्य संहतिरिदं शरीरं क्षेत्रमित्युक्तं तत्क्षेत्रं व्याख्यातं महाभूतादिभेदभिन्नं धृत्यन्तम् ॥ ६ ॥

**क्षेत्रज्ञो** वक्ष्यमाणविशेषणो यस्य सप्रभावस्य क्षेत्रज्ञस्य परिज्ञानादमृतत्वं भवति तं ज्ञेयं यत्तत्प्रवक्ष्यामीत्यादिना सविशेषणं स्वयमेव वक्ष्यति भगवानधुना तु तज्ज्ञानसाधनगणममानित्वादिलक्षणं यस्मिन्सति तज्ज्ञेयविज्ञाने योग्योऽधिकृतो भवति यत्परः **संन्यासी** ज्ञाननिष्ठ उच्यते, तममानित्वादिगणं ज्ञानसाधनत्वाज्ज्ञानशब्दवाच्यं विदधाति भगवान्—

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥

अमानित्वं मानिनो भावो मानित्वमात्मनः श्लाघनं तदभावोऽमानित्वम् । अदम्भित्वं स्वधर्मप्रकटीकरणं दम्भित्वं तदभावोऽदम्भित्वम् । अहिंसाहिंसनं प्राणिनामपीडनम् । क्षान्तिः परापराधप्राप्तावविक्रिया । आर्जवमृजुभावोऽवक्रत्वम् । आचार्योपासनं मोक्षसाधनोपदेष्टुराचार्यस्य शुश्रूषादिप्रयोगेण सेवनम् । शौचं कायमलानां मृज्जलाभ्यां प्रक्षालनमन्तश्च मनसः प्रतिपक्षभावनया रागादिमलानामपनयनं शौचम् । स्थैर्यं स्थिरभावो मोक्षमार्ग एव कृताध्यवसायत्वम् । आत्मविनिग्रह आत्मनोऽपकारकस्यात्मशब्दवाच्यस्य कार्यकरणसंघातस्य विनिग्रहः स्वभावेन सर्वतः प्रवृत्तस्य सन्मार्ग एव निरोध आत्मविनिग्रहः ॥ ७ ॥

किंच—

इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥

इन्द्रियार्थेषु शब्दादिषु दृष्टादृष्टेषु भोगेषु विरागभावो वैराग्यम् । अनहंकारोऽ-

ह्वाराभाव एव च। जन्ममृत्युजराव्याधिदु खदोषानुदर्शनं जन्म च मृत्युश्च जरा च व्याधयश्च दु खानि च तेषु जन्मादिदु खान्तेषु प्रत्येकं दोषानुदर्शनं, जन्मनि गर्भवासयोनिद्वारा नि सरणं दोषस्तस्यानुदर्शनमालोचनं, तथा मृत्यौ दोषानुदर्शनं, तथा जराया प्रज्ञाशक्तिनेजोनिरोधदोषानुदर्शनं परिभूतता चेति। तथा व्याधिषु शिरोरोगादिषु दोषानुदर्शनं, तथा दु खेष्वध्यात्माधिभूताधिदैवनिमित्तेषु। अथवा दु खान्येव दोषो दु खदोषस्तस्य जन्मादिषु पूर्ववदनुदर्शनम्। दु ख जन्म दु ख मृत्युर्दु ख जरा दु ख व्याधय। दु खनिमित्तत्वाज्जन्मादयो दु खानि न पुन स्वरूपेणैव दु खमिति। एव जन्मादिषु दु खदोषानुदर्शनाद्देहेन्द्रियविषयभोगेषु वैराग्यमुपजायते। ततः प्रत्यगात्मनि प्रवृत्तिः करणानामात्मदर्शनाय। एवं ज्ञानहेतुत्वाज्ज्ञानमुच्यते जन्मादिदु खदोषानुदर्शनम्॥ ८॥

किं च–

**असक्तिरनभिष्वङ्ग पुत्रदारगृहादिषु।**
**नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु॥ ९॥**

असक्ति सक्ति सङ्गनिमित्तेषु विषयेषु प्रीतिमात्र तदभावोऽसक्ति। अनभिष्वङ्गोऽभिष्वङ्गाभावोऽभिष्वङ्गो नाम सक्तिविशेष एवानन्यात्मभावनालक्षण। यथाऽन्यस्मिन्सुखिनि दु खिनि वाहमेव सुखी दु खी च जीवति मृते वाहमेव जीवामि मरिष्यामि चेति। केत्याह पुत्रदारगृहादिषु। पुत्रेषु दारेषु गृहेष्वादिग्रहणादन्येष्वप्यत्यन्तेष्टेषु दासवर्गादिषु। तच्चोभय ज्ञानार्थत्वाज्ज्ञानमुच्यते। नित्य च समचित्तत्व तुल्यचित्तता, क इष्टानिष्टोपपत्तिषु, इष्टानामनिष्टाना चोपपत्तय सप्राप्तयस्तास्विष्टानिष्टोपपत्तिषु नित्यमेव तुल्यचित्तता, इष्टोपपत्तिषु न हृष्यति न कुप्यति चानिष्टोपपत्तिषु। तच्चैतन्नित्य समचित्तत्व ज्ञानम्॥ ९॥

किं च—

**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी।**
**विविक्तदेशसेवित्वमरतिर्जनसंसदि॥ १०॥**

मयि चेश्वरेऽनन्ययोगेनापृथक्समाधिना नान्यो भगवतो वासुदेवात्परोऽस्त्यत स एव नो गतिरित्येव निश्चिताव्यभिचारिणी बुद्धिरनन्ययोगस्तेन भजन भक्तिर्व्यभिचरणशीलाव्यभिचारिणी। सा च ज्ञानम्। विविक्तदेशसेवित्व विविक्त स्वभावत सस्कारेण वाशुच्यादिभि सर्पव्याघ्रादिभिश्च रहितोऽरण्यनदीपुलिनदेवगृहादिभिर्विविक्तो देशस्त सेवितु शीलमस्येति विविक्तदेशसेवी तद्भावो विविक्तदेशसेवित्वम्। विविक्तेषु हि देशेषु चित्त प्रसीदति यतस्तत आत्मादिभावना विविक्त उपजायतेऽतो विविक्तदेशसेवित्व ज्ञानमुच्यते अरतिररमण जनसंसदि जनाना प्राकृतानां सस्कारशून्यानामविनीतानां ससत्समवायो जनससत्न ससारवता विनीतानां समत्तस्या ज्ञानोपकारकत्वादत प्राकृतजनससदरतिर्ज्ञानार्थत्वाज्ज्ञानम्॥१०॥

किं च—

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११ ॥

अध्यात्मज्ञाननित्यत्वमात्मादिविषयं ज्ञानमध्यात्मज्ञानं तस्मिन्नित्यभावो नित्यत्वममानित्वादीनां ज्ञानसाधनानां भावनापरिपाकनिमित्तं तत्त्वज्ञानं तस्यार्थो मोक्षः संसारोपरमस्तस्यालोचनं तत्त्वज्ञानार्थदर्शनम् । तत्त्वज्ञानफलालोचने हि तत्साधनानुष्ठाने प्रवृत्तिः स्यादिति । एतदमानित्वादितत्त्वज्ञानार्थदर्शनान्तमुक्तं ज्ञानमिति प्रोक्तं ज्ञानार्थत्वात् । अज्ञानं यदतोऽस्माद्यथोक्तादन्यथा विपर्ययेण मानित्वं दम्भित्वं हिंसाक्षान्तिरनार्जवमित्याद्यज्ञानं विज्ञेयं परिहरणाय संसारप्रवृत्तिकारणत्वादिति ॥ ११ ॥

यथोक्तेन ज्ञानेन ज्ञातव्यं किमित्याकाङ्क्षायामाह ज्ञेयं यत्तदित्यादि । ननु यमा नियमाश्चामानित्वादयो न तैर्ज्ञेयं ज्ञायते । न ह्यमानित्वादि कस्यचिद्वस्तुनः परिच्छेदकं दृष्टम् । सर्वत्रैव च यद्विषयं ज्ञानं तदेव तस्य ज्ञेयस्य परिच्छेदकं दृश्यते । न ह्यन्यविषयेण ज्ञानेनान्यदुपलभ्यते । यथा घटविषयेण ज्ञानेनाग्निः । नैष दोषो ज्ञाननिमित्तत्वाज्ज्ञानमुच्यते इति ह्यवोचाम । ज्ञानसहकारिकारणत्वाच्च ।

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥

ज्ञेयं ज्ञातव्यं यत्तत्प्रवक्ष्यामि प्रकर्षेण यथावद्वक्ष्यामि । किंफलं तदिति प्ररोचनेन श्रोतुरभिमुखीकरणायाह यज्ज्ञेयं ज्ञात्वामृतममृतत्वमश्नुते न पुनर्म्रियत इत्यर्थः । अनादिमदादिरस्यास्तीत्यादिमन्नादिमदनादिमत् । किं तत्परं निरतिशयं ब्रह्म ज्ञेयमिति प्रकृतम् ।

पू०-*अत्र केचिदनादिमत्परमिति पदं छिन्दन्ति बहुव्रीहिणोक्तेऽर्थे मतुप आनर्थक्यमनिष्टं स्यादिति । अर्थविशेषं च दर्शयन्ति अहं वासुदेवाख्या परा

*A Purvapaksa of a Vaisnava Vedanta School—(1) The compound अनादिमत्परम् should be solved as अनादि + मत्परम् and (2) it would mean 'The eternal Brahman with Me (Vasudeva) as its supreme Power (परा शक्ति)'.

Sankara's Reply—(1) The sense you propose is not possible and hence we solve the compound as अनादिमत् + परम्. The sense is not possible because ब्रह्मन् is explained by the negation of every attribute and your explanation of मत्परम् would mean that ब्रह्मन् has an attribute (शक्ति = power in the form of वासुदेव)

शक्तिर्यस्य तन्महत्परमिति । सि०—सत्यमेवमपुनरुक्त स्यादर्थश्चेत्संभवति न त्वर्थ संभवति ब्रह्मण सर्वविशेषप्रतिषेधेनैव विजिज्ञापयिषितत्वात्र सत्तन्नासदुच्यत इति । विशिष्टशक्तिमत्त्वप्रदर्शन विशेषप्रतिषेधश्चेति विप्रतिषिद्धम् । तस्मान्मतुपो बहुव्रीहिणा समानार्थत्वेऽपि प्रयोग श्लोकपूरणार्थ ।

अमृतत्वफल ज्ञेय मयोच्यत इति प्ररोचनेनाभिमुखीकृत्याह न सत्तन्नासदुच्यत इति नाप्यसदुच्यते । (1) ननु महता परिकरबन्धन कण्ठरवेणोद्घुष्य ज्ञेय प्रवक्ष्यामीति ननुरूपमुक्त न सत्तन्नासदुच्यत इति । न, अनुरूपमेवोक्तम् । कथ, सर्वासु ह्युपनिषसु ज्ञेय ब्रह्म "नेति नेति (Br Upn II 3 6) अस्थूलमनणु (Br Upn III 8 8)" इत्यादिविशेषप्रतिषेधेनैव निर्दिश्यते नेद तदिति, वाचोऽगोचरत्वात् । (2) ननु (a) न तदस्ति यद्वस्त्वस्तिशब्देन नोच्यते । (b) अथास्तिशब्देन नोच्यते नास्ति तज्ज्ञेयम् । (c) विप्रतिषिद्ध च ज्ञेय तदस्तिशब्देन नोच्यत इति च । (d) न तावन्नास्ति नास्तिबुद्ध्यविषयत्वात् । (e) ननु सर्वा बुद्धयोऽस्तिनास्तिबुद्ध्यनुगता एव । तत्रैव सति ज्ञेयमप्यस्तिबुद्ध्यनुगतप्रत्ययविषय वा स्यान्नास्तिबुद्ध्यनुगतप्रत्ययविषय वा स्यात् ।

---

(1) A Purvapaksa objects to Sankara s explanation of 12d (न सत्तन्नासदुच्यते)

Sankara s Reply —We follow the Upanisads in which ब्रह्मन् is always described negatively

(2) Purvapaksa—(a) We know nothing which cannot be described as 'it is' i e everything we know can only be described *positively* and as Brahman is to be known, it must be described positively (b) If you cannot describe a thing as 'it is', the thing itself will be a non-entity (lit that object does not exist) (c) And it is self-contradictory to say, 'Brahman is ज्ञेय (an object of knowledge) and that it cannot be positively described' (d) As a matter of fact, Brahman cannot be said to be non-existent (असत् cannot be interpreted as non-existent), because it is not cognized as 'It is not (e) If Sankara argues that all cognitions are both positive and negative (e g, one can think of a pot *once* as 'it is' and at another time as 'it is not') then Brahman also should be by turn only cognized as सत् and असत्

सि०—न (a) अतीन्द्रियत्वेनोभयबुद्ध्यनुगतप्रत्ययाविषयत्वात्। यदीन्द्रियगम्यं वस्तु घटादिकं तदस्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यान्नास्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात्। इदं तु ज्ञेयमतीन्द्रियत्वेन शब्दैकप्रमाणगम्यत्वान्न घटादिवदुभयबुद्ध्यनुगतप्रत्ययविषयमित्यतो न सत्तन्नासदित्युच्यते। (b) यदुक्तं विरुद्धमुच्यते ज्ञेयं तन्न सत्तन्नासदुच्यत इति। न विरुद्धम् "अन्यदेव तद्विदितादथो अविदितादधि" (Ken Upa. I. 3) इति श्रुतेः। पू०—श्रुतिरपि विरुद्धार्थेति चेद्यथा यज्ञाय शालामारभ्य को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वेत्येवमिति (Tai. Sam. VI. 1.1) चेत्। सि०—न, विदिताविदिताभ्यामन्यत्वश्रुते (Ken. Upa. II. 3) रवश्यविज्ञेयार्थप्रतिपादनपरत्वात्। यद्यमुष्मिन्नित्यादि तु विधिशेषोऽर्थवादः। (c) उपपत्तेश्च सदसदादिशब्दैर्ब्रह्म नोच्यत इति। सर्वो हि शब्दोऽर्थप्रकाशनाय प्रयुक्तः श्रूयमाणश्च श्रोतृभिर्जातिक्रियागुणसंबन्धद्वारेण संकेतग्रहणसव्यपेक्षोऽर्थं प्रत्याययति, नान्यथाऽदृष्टत्वात्। तद्यथा गौरश्व इति वा जातितः, पचति पठतीति वा क्रियातः, शुक्लः कृष्ण इति वा गुणतः, धनी गोमानिति वा संबन्धतः, न तु ब्रह्म जातिमदतो न सदादिशब्दवाच्यं नापि गुणवद्येन गुणशब्देनोच्येत निर्गुणत्वान्नापि क्रियाशब्दवाच्यं निष्क्रियत्वात् "निष्कलं निष्क्रियं शान्तम्" इति श्रुतेः (Śve. Upa VI. 19)। न च संबन्धी, एकत्वादद्वयत्वादविषयत्वादात्मत्वाच्च; न केनचिच्छब्देनोच्यत इति युक्तं "यतो वाचो निवर्तन्ते" (Tai. Upa. II. 9) इत्यादिश्रुतिभ्यश्च ॥ १२ ॥

मच्छब्दप्रत्ययाविषयत्वादसत्त्वाशङ्कायां ज्ञेयस्य सर्वप्राणिकरणोपाधिद्वारेण सदास्तित्वं प्रतिपादयंस्तदाशङ्कानिवृत्त्यर्थमाह—

सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥

---

Śankara's Reply :—No. Because (a) Brahman is imperceptible and therefore it is unlike घट. Brahman is cognized through Śabda only. (b) There is no self-contradiction, because Śruti itself adopts that description about Brahman. And you cannot object to the Śruti (e. g. Ken. Upa. I. 3) because that Śruti should necessarily be taken as explaining what it undertakes to explain (i. e. Brahman), otherwise the Śruti will be meaningless. (c) It is also reasonable that 'Brahman cannot be described either as सत् or as असत्'. The well-known rule is that a शब्द can describe a thing as qualified by जाति, क्रिया, गुण or संबन्ध. But Brahman has neither of these four. Hence it cannot be described by any word (शब्द).

सर्वतः पाणिपादं सर्वतः पाणयः पादाश्चास्येति सर्वतःपाणिपादं तज्ज्ञेयम् । सर्वप्राणिकरणोपाधिभिः क्षेत्रज्ञास्तित्वं विभाव्यते । क्षेत्रज्ञश्च क्षेत्रोपाधित उच्यते । क्षेत्रं च पाणिपादादीभिरनेकधा भिन्नम् । क्षेत्रोपाधिभेदकृतं विशेषजातं मिथ्यैव क्षेत्रज्ञस्येति तदपनयेन ज्ञेयत्वमुक्तं न सत्तन्नासदुच्यत इति । उपाधिकृतं मिथ्यारूपमप्यस्तित्वाधिगमाय ज्ञेयधर्मवत्परिकल्प्योच्यते सर्वतःपाणिपाद-मित्यादि । तथा हि संप्रदायविदां वचनम् 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ।' — इति सर्वत्र सर्वदेहावयवत्वेन गम्यमाना पाणिपादादयो ज्ञेयशक्तिसद्भावनिमित्तस्वकार्या इति ज्ञेयसद्भावे लिङ्गानि ज्ञेयस्येत्युपचारत उच्यन्ते । तथा व्याख्येयमन्यत्सर्वतःपाणिपादं तज्ज्ञेयम् । सर्वतोक्षिशिरोमुखं सर्वतोऽक्षीणि शिरांसि मुखानि च यस्य तत्सर्वतोक्षिशिरोमुखम् । सर्वतः श्रुतिमच्छ्रुतिः श्रवणेन्द्रियं तद्यस्य तच्छ्रुतिमल्लोके प्राणिनिकाये सर्वमावृत्य संव्याप्य तिष्ठति स्थितिं लभते ॥ १३ ॥

उपाधिभूतपाणिपादादीन्द्रियाध्यारोपणाज्ज्ञेयस्य तद्वत्ताशङ्का मा भूदित्येवमर्थः श्लोकारम्भः —

> सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
> असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥

सर्वेन्द्रियगुणाभासं सर्वाणि च तानीन्द्रियाणि श्रोत्रादीनि बुद्धीन्द्रियकर्मेन्द्रियाख्यान्यन्तःकरणे च बुद्धिमनसी ज्ञेयोपाधित्वस्य तुल्यत्वात्सर्वेन्द्रियग्रहणेन गृह्यन्ते । अपि चान्तःकरणोपाधिद्वारेणैव श्रोत्रादीनामप्युपाधित्वमित्यतोऽन्तःकरणबहिःकरणोपाधिभूतैः सर्वेन्द्रियगुणैरध्यवसायसंकल्पश्रवणवचनादिभिरवभासत इति सर्वेन्द्रियगुणाभासं सर्वेन्द्रियव्यापारैर्व्यापृतमिव तज्ज्ञेयमित्यर्थः "ध्यायतीव लेलायतीव" इति श्रुतेः (Br Upa IV 3 7) । कस्मात्पुनः कारणान्न व्यापृतमेवेति गृह्यत इत्यत आह सर्वेन्द्रियविवर्जितं सर्वकरणरहितमित्यर्थः । अतो न करणव्यापारैर्व्यापृतं तज्ज्ञेयम् । यस्त्वयं मन्त्रः — "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" (Sve. Upa III 19) इत्यादिः स सर्वेन्द्रियोपाधिगुणानुगुण्यभजनशक्तिमत्तज्ज्ञेयमित्येवंप्रदर्शनार्थो न तु साक्षादेव जवनादिक्रियावत्त्वप्रदर्शनार्थः । "अन्धो मणिमविन्दत्" (Tai Āra I 11) इत्यादिमन्त्रार्थवत्तस्य मन्त्रस्यार्थः । यस्मात्सर्वकरणवर्जितं तज्ज्ञेयं तस्मादसक्तं सर्वसंश्लेषवर्जितम् । यद्यप्येवं तथापि सर्वभृच्चैव । सदास्पदं हि सर्वं सर्वत्र सद्बुद्ध्यनुगमात् । न हि मृगतृष्णिकादयोऽपि निरास्पदा भवन्ति । अतः सर्वभृत्सर्वं बिभर्तीति । स्यादिदं चान्यज्ज्ञेयस्य सत्त्वाधिगमद्वारं—निर्गुणं सत्त्वरजस्तमांसि गुणास्तैर्वर्जितं तज्ज्ञेयं तथापि

गुणभोक्तृ च गुणानां सत्त्वरजस्तमसां शब्दादिद्वारेण सुखदुःखमोहाकारपरिणतानां भोक्तृ चोपलब्धृ तज्ज्ञेयमित्यर्थः ॥ १४ ॥

किंच—

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १५ ॥

बहिस्त्वक्पर्यन्तं देहमात्मत्वेनाविद्याकल्पितमपेक्ष्य तमेवावधिं कृत्वा बहिरुच्यते। तथा प्रत्यगात्मानमपेक्ष्य देहमेवावधिं कृत्वान्तरुच्यते । बहिरन्तश्चेत्युक्ते मध्येऽभावे प्राप्त इदमुच्यतेऽचरं चरमेव च यच्चराचरं देहाभासमपि तदेव ज्ञेयं यथा रज्जुसर्पाभासः पू०—यद्यचरं चरमेव च व्यवहारविषयं सर्वं ज्ञेयं किमर्थमिदमिति सर्वैर्न विज्ञेयमिति । सि०—उच्यते, सत्यं सर्वाभासं तत्तथापि व्योमवत्सूक्ष्ममतः सूक्ष्मत्वात्स्वेन रूपेण तज्ज्ञेयमप्यविज्ञेयमविदुषाम् । विदुषां त्वात्मैवेदं सर्वं ( Br. Upa. II. 4. 6 ) ब्रह्मैवेदं सर्वं ( Br. Upa. II. 5. 1 ) मित्यादिप्रमाणतो नित्यं विज्ञातमविज्ञाततया दूरस्थं वर्षसहस्रकोट्याप्यविदुषामप्राप्यत्वादन्तिके च सदात्मत्वाद्विदुषाम् ॥ १५ ॥

किंच—

अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥

अविभक्तं च प्रतिदेहं व्योमवत्तदेकं भूतेषु सर्वप्राणिषु विभक्तमिव च स्थितं देहेष्वेव विभाव्यमानत्वाद्भूतभर्तृ च भूतानि बिभर्तीति तज्ज्ञेयं भूतभर्तृ च स्थितिकाले । प्रलयकाले ग्रसिष्णु ग्रसनशीलम् । उत्पत्तिकाले प्रभविष्णु च प्रभवनशीलं यथा रज्ज्वादिः सर्पादेर्मिथ्याकल्पितस्य ॥ १६ ॥

किंच सर्वत्र विद्यमानं सन्नोपलभ्यते चेज्ज्ञेयं तमस्तर्हि । न, किं तर्हि—

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १७ ॥

ज्योतिषामादित्यादीनामपि तज्ज्ञेयं ज्योतिः । आत्मचैतन्यज्योतिषेद्धानि ह्यादित्यादीनि ज्योतींषि दीप्यन्ते "येन सूर्यस्तपति तेजसेद्धः" (Tai. Bra. III. 12. 9) "तस्य भासा सर्वमिदं विभाति" (Śve. Upa. VI. 14) इत्यादिश्रुतिभ्यः। स्मृतेश्चेहैव 'यदादित्यगतं तेजः' (XV. 12) इत्यादेः । तमसोऽज्ञानात्परमस्पृष्टमुच्यते। ज्ञानादेर्दुःसंपादनबुद्ध्या प्राप्तावसादस्योत्तम्भनार्थमाह ज्ञानममानित्वादि (XIII. 7-11) । ज्ञेयं ज्ञेयं यत्तत्प्रवक्ष्यामीत्यादिनोक्तम् (XIII 12-17) ज्ञानगम्यं ज्ञेयमेव ज्ञातं सज्ज्ञानफलमिति ज्ञानगम्यमुच्यते । ज्ञायमानं तु ज्ञेयम् । तदेतत्त्रयमपि हृदि बुद्धौ सर्वस्य प्राणिजातस्य विष्ठितं विशेषेण स्थितम् । तत्रैव हि त्रयं विभाव्यते ॥ १७ ॥

यथोक्तार्थोपसंहारार्थोऽयं श्लोक आरभ्यते—

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥

इत्येवं क्षेत्रं महाभूतादि धृत्यन्तं तथा ज्ञानममानित्वादि तत्त्वज्ञानार्थदर्शनपर्यन्तं ज्ञेयं च 'ज्ञेयं यत्तत्' इत्यादि 'तमसः परमुच्यते' इत्येवमन्तमुक्तं समासतः संक्षेपतः । एतावान्सर्वो हि वेदार्थो गीतार्थश्चोपसंहृत्योक्तः । अस्मिन्सम्यग्दर्शने कोऽधिक्रियत इत्युच्यते मद्भक्तो मयीश्वरे सर्वज्ञे परमगुरौ वासुदेवे समर्पितसर्वात्मभावो यत्पश्यति शृणोति स्पृशति वा सर्वमेव भगवान्वासुदेव इत्येवंग्रहाविष्टबुद्धिर्मद्भक्तः स एतद्यथोक्तं सम्यग्दर्शनं विज्ञाय मद्भावाय मम भावो मद्भावः परमात्मभावस्तस्मै मद्भावायोपपद्यते मोक्षं गच्छति ॥ १८ ॥

तत्र सप्तमे ( Gita VII ) ईश्वरस्य द्वे प्रकृती उपन्यस्ते परापरे क्षेत्रक्षेत्रज्ञलक्षणे । एतद्योनीनि भूतानीति ( VII 6 ) चोक्तम् । क्षेत्रक्षेत्रज्ञप्रकृतिद्वययोनित्वं कथं भूतानामित्ययमर्थोऽधुनोच्यते—

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १९ ॥

प्रकृतिं पुरुषं चैवेश्वरस्य प्रकृती तौ प्रकृतिपुरुषावुभावप्यनादी विद्धि । न विद्यत आदिर्ययोस्तावनादी । नित्येश्वरत्वादीश्वरस्य तत्प्रकृत्योरपि युक्तं नित्यत्वेन भवितुम् । प्रकृतिद्वयवत्त्वमेव हीश्वरस्येश्वरत्वम् । याभ्यां प्रकृतिभ्यामीश्वरो जगदुत्पत्तिस्थितिप्रलयहेतुस्ते द्वे अनादी सत्यौ संसारस्य कारणम् ।

पू०*—नादी अनादी इति तत्पुरुषसमासं केचिद्वर्णयन्ति तेन हि किलेश्वरस्य कारणत्वं सिध्यति । यदि पुनः प्रकृतिपुरुषावेव नित्यौ स्यातां तत्कृतमेव जगन्नेश्वरस्य जगतः कर्तृत्वम् इति ।

सि०—तदसत्,

( i ) प्राक्प्रकृतिपुरुषयोरुत्पत्तेरीशितव्याभावादीश्वरस्यानीश्वरत्वप्रसङ्गात् । ( ii )

---

*Sankara introduces a Purvapaksa according to which the individual soul (पुरुष) and the Matter (प्रकृति) are two created principles, and hence not eternal This may be a Vedanta School This Purvapaksa claimed that in its School the Lord (ईश्वर) alone would be the Creator

Śankara replies that (i) if the soul and the Matter were non-existent in the beginning, the Lord would be

— v I नेश्वरस्य for किलेश्वरस्य

समारस्य निर्निमित्तत्वेऽनिर्मोक्षत्वप्रसङ्गाच्छास्त्रानर्थक्यप्रसङ्गाद्(iii)बन्धमोक्षाभावप्रसङ्गाच्च (iv) नित्यत्वे पुनरीश्वरस्य प्रकृत्योः सर्वमेतदुपपन्नं भवेत् ।

कथ, विकारांश्च गुणांश्चैव वक्ष्यमाणान्विकारान्बुद्ध्यादिदेहेन्द्रियान्तान्गुणांश्च सुखदुःखमोहप्रत्ययाकारपरिणतान्विद्धि जानीहि प्रकृतिसंभवान्प्रकृतिरीश्वरस्य विकारकारणशक्तिस्त्रिगुणात्मिका माया सा संभवो येषां विकाराणां गुणानां च तान्विकारान्गुणांश्च विद्धि प्रकृतिसंभवान्प्रकृतिपरिणामान् ॥ १९ ॥

के पुनस्ते विकारा गुणाश्च प्रकृतिसंभवाः —

कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥

कार्यकरणकर्तृत्वे कार्यं शरीरं करणानि तत्स्थानि त्रयोदश । देहस्यारम्भकाणि भूतानि विषयाश्च प्रकृतिसंभवा विकाराः पूर्वोक्ता इह कार्यग्रहणेन गृह्यन्ते गुणाश्च प्रकृतिसंभवाः सुखदुःखमोहात्मकाः करणाश्रयत्वात्करणग्रहणेन गृह्यन्ते । तेषां कार्यकरणानां कर्तृत्वमुत्पादकत्वं यत्तत्कार्यकरणकर्तृत्वं तस्मिन्कार्यकरणकर्तृत्वे हेतुः कारणमारम्भकत्वेन प्रकृतिरुच्यते । एवं कार्यकरणकर्तृत्वेन संसारस्य कारणं प्रकृतिः । कार्यकारणकर्तृत्व इत्यस्मिन्नपि पाठे कार्यं यद्यस्य विपरिणामस्तत्तस्य कार्यं विकारो, विकारि कारणं, तयोर्विकारविकारिणोः कार्यकारणयोः कर्तृत्व इति* । अथवा षोडश विकाराः कार्यं सप्त प्रकृतिविकृतयः कारणं तान्येव कार्यकारणान्युच्यन्ते । तेषां कर्तृत्वे हेतुः प्रकृतिरुच्यत आरम्भकत्वेनैव । पुरुषश्च

at that time no Lord because there was nothing then to be governed, (ii) if the world was created at all, the Purva paksa holding the soul and the world to be newly created will have to say that they were created without any reason ( निर्निमित्तत्व ) and in that case, the soul will never be released and hence the Scripture ( which starts to explain the Path to Moksa ) will be futile, and ( iii ) as there were in the beginning no soul and no matter, there ought to have been no bondage and no liberation. (iv) But if the two प्रकृतिs of the Lord, viz, the soul and the matter, be eternal with the Lord all these faults will not arise

* POA reads इति तानि एव कार्यकरणानि उच्यन्ते, and drops तानि एव उच्यन्ते from the next sentence

संसारस्य कारणं यथा स्यात्तदुच्यते पुरुषो जीवः क्षेत्रज्ञो भोक्तेति पर्यायः सुखदुःखानां भोग्यानां भोक्तृत्वे उपलब्धृत्वे हेतुरुच्यते।

* कथं पुनरनेन कार्यकरणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च प्रकृतिपुरुषयोः संसारकारणत्वमुच्यत इति। अत्रोच्यते कार्यकरणसुखदुःखरूपेण हेतुफलात्मना प्रकृतेः परिणामाभावे पुरुषस्य चेतनस्यासति तदुपलब्धृत्वे कुतः संसारः स्यात्। यदा पुनः कार्यकरणसुखदुःखस्वरूपेण हेतुफलात्मना परिणतया प्रकृत्या भोग्यया पुरुषस्य तद्विपरीतस्य भोक्तृत्वेनाविद्यारूपः संयोगः स्यात्तदा संसारः स्यादिति। अतो यत्प्रकृतिपुरुषयोः कार्यकरणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च संसारकारणत्वमुक्तं तद्युक्तम्। कः पुनरयं संसारो नाम, सुखदुःखसंभोगः संसारः पुरुषस्य च सुखदुःखानां संभोक्तृत्वं संसारित्वमिति ॥ २० ॥

यत्पुरुषस्य सुखदुःखानां भोक्तृत्वं संसारित्वमित्युक्तं तस्य तत्किंनिमित्तमित्युच्यते—

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान्।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥

पुरुषो भोक्ता प्रकृतिस्थः प्रकृतावविद्यालक्षणायां कार्यकरणरूपेण परिणतायां स्थितः प्रकृतिस्थः प्रकृतिमात्मत्वेन गत इत्येतद्धि यस्मात्तस्माद्भुङ्क्ते उपलभत इत्यर्थः। प्रकृतिजान्प्रकृतितो जातान्सुखदुःखमोहाकाराभिव्यक्तान्गुणान्सुखी दुःखी मूढः पण्डितोऽहमित्येवम्। सत्यामप्यविद्यायां सुखदुःखमोहेषु गुणेषु भुज्यमानेषु यः सङ्ग आत्मभावः संसारस्य (1) स प्रधानं कारणं जन्मनः, "स यथाकामो भवति तत्क्रतुर्भवति" (Br. Upa IV 4 5) इत्यादिश्रुतेः। तदेतदाह कारणं हेतुर्गुणसङ्गो गुणेषु सङ्गोऽस्य पुरुषस्य भोक्तुः सदसद्योनिजन्मसु (2) सत्यश्चासत्यश्च योनयः सदसद्योनयस्तासु सदसद्योनिषु जन्मानि सदसद्योनिजन्मानि तेषु सदसद्योनिजन्मसु विषयभूतेषु कारणं गुणसङ्गः। अथवा सदसद्योनिजन्मस्वस्य संसारस्य कारणं गुणसङ्ग इति संसारपदमध्याहार्यम्। सद्योनयो देवादियोनयोऽसद्योनयः पश्वादियोनयः। सामर्थ्यात्सदसद्योनयो मनुष्ययोनयोऽप्यविरुद्धा द्रष्टव्याः। एतदुक्तं भवति प्रकृतिस्थत्वाख्याविद्या गुणेषु च सङ्गः कामः संसारस्य कारणमिति। तच्च परिवर्जनायोच्यते। अस्य च निवृत्तिकारणं ज्ञानवैराग्ये ससंन्यासे गीताशास्त्रे प्रसिद्धम्। तच्च ज्ञानं पुरस्तादुपन्यस्तं क्षेत्रक्षेत्रज्ञविषयम्। (3) यज्ज्ञात्वामृत-

---

* Śankara explains his theory of अविद्या.

(1) POA drops संसारस्य

(2) POA reads सच्च असच्च सदसती, तयोः योनयः for सत्यश्चा-सत्यश्च योनयः

(3) POA connects यज्ज्ञात्वा...इति with विषयम्.

मदनुत (XIII. 12) इत्युक्तं चान्यारोहेनातद्धर्माध्यारोपेण च ॥ २१ ॥

तस्यैव पुनः साक्षान्निर्देशः क्रियते—

उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥ २२ ॥

उपद्रष्टा समीपस्थः सन्द्रष्टा स्वयमव्यापृतो यथर्त्विग्यजमानेषु यज्ञकर्मव्यापृतेषु तटस्थोऽन्योऽव्यापृतो यज्ञविद्याकुशल ऋत्विग्यजमानव्यापारगुणदोषाणामीक्षिता तद्वत्कार्यकरणव्यापारेष्वव्यापृतोऽन्यो विलक्षणस्तेषां कार्यकरणानां सव्यापाराणां सामीप्येन द्रष्टोपद्रष्टा। अथवा देहचक्षुर्मनोबुद्ध्यात्मानो द्रष्टारस्तेषां बाह्यो द्रष्टा देहस्तत आरभ्यान्तरतमश्च प्रत्यक्समीप आत्मा द्रष्टा। यतः परोऽन्तरो नास्ति द्रष्टा सोऽतिशयसामीप्येन द्रष्टृत्वादुपद्रष्टा स्यात्। यज्ञोपद्रष्टृवद्वा सर्वविषयीकरणादुपद्रष्टा। अनुमन्ता चानुमोदनमनुमननं कुर्वत्सु तत्क्रियासु परितोषस्तत्कर्ताऽनुमन्ता च। अथवाऽनुमन्ता कार्यकरणप्रवृत्तिषु स्वयमप्रवृत्तोऽपि प्रवृत्त इव तदनुकूलो विभाव्यते तेनानुमन्ता। अथवा प्रवृत्तान्स्वव्यापारेषु तत्साक्षिभूतः कदाचिदपि न निवारयतीत्यनुमन्ता। भर्ता भरणं नाम देहेन्द्रियमनोबुद्धीनां संहतानां चैतन्यात्मपारार्थ्येन निमित्तभूतेन चैतन्याभासानां यत्स्वरूपधारणं तच्चैतन्यात्मकृतमेवेति भर्तात्मेत्युच्यते। भोक्ताग्न्युष्णवन्नित्यचैतन्यस्वरूपेण बुद्धेः सुखदुःखमोहात्मकाः प्रत्ययाः सर्वविषयविषयाश्चैतन्यात्मग्रस्ता इव जायमाना विभक्ता विभाव्यन्त इति भोक्तात्मोच्यते। महेश्वरः सर्वात्मत्वात्स्वतन्त्रत्वाच्च महानीश्वरश्चेति महेश्वरः। परमात्मा देहादीनां बुद्ध्यन्तानां प्रत्यगात्मत्वेन कल्पितानामविद्यया परम उपद्रष्टृत्वादिलक्षण आत्मेति परमात्मा सोऽतः परमात्मेत्यनेन शब्देन चाप्युक्तः कथितः श्रुतौ। क्वासौ अस्मिन्देहे पुरुषः परोऽव्यक्तात्। 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति यो वक्ष्यमाणः 'क्षेत्रज्ञं चापि मां विद्धि' इत्युपन्यस्तो व्याख्यायोपसंहृतश्च ॥ २२ ॥

तमेवं यथोक्तलक्षणमात्मानम्—

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २३ ॥

य एवं यथोक्तप्रकारेण वेत्ति पुरुषं साक्षादहमिति प्रकृतिं च यथोक्तामविद्यालक्षणां गुणैः स्वविकारैः सह निवर्तितामभावमापादितां विद्यया सर्वथा सर्वप्रकारेण वर्तमानोऽपि स भूयः पुनः पतितेऽस्मिन्विद्वच्छरीरे देहान्तराय नाभिजायते नोत्पद्यते देहान्तरं न गृह्णातीत्यर्थः। अपिशब्दात्किमु वक्तव्यं स्ववृत्तस्थो न जायत इत्यभिप्रायः।

* पू०—ननु यद्यपि ज्ञानोत्पत्त्यनन्तरं पुनर्जन्माभाव उक्तस्तथाऽपि प्राग्ज्ञानोत्पत्तेः

* Sankara raises a Purvapaksa not only to explain his own theory of the exhaustion of actions by ज्ञान, but

कृतानां कर्मणामुत्तरकालभाविनां च यानि चातिक्रान्तानेकजन्मकृतानि तेषां फलमदत्त्वा नाशो न युक्त इति त्रयाणि जन्मानि। (a) कृतविप्रणाशो हि न युक्त इति। (b) यथा फले प्रवृत्तानामारब्धजन्मनां कर्मणाम्। न च कर्मणां विशेषोऽवगम्यते। तस्मात्त्रिप्रकाराण्यपि कर्माणि त्रीणि जन्मान्यारभेरन्संहतानि वा सर्वाण्येकं जन्मारभेरन्। अन्यथा कृतविनाशे सति सर्वत्रानाश्वासप्रसङ्गः शास्त्रानर्थक्यं च स्यादित्यत इदमयुक्तमुक्तं न स भूयोऽभिजायत इति। सि०—न, (a) "क्षीयन्ते चास्य कर्माणि" (Mu Upa II 2 4), "ब्रह्म वेद ब्रह्मैव भवति" (Mu. Upa III 2, 9), "तस्य तावदेव चिरम्" (Chā. Upa. VI 14 2), "ईषीकातूलवत्सर्वं कर्माणि प्रदूयन्ते" (Chā Upa. V 24 3) इत्यादिश्रुतिशतेभ्य उक्तो विदुषः सर्वकर्मदाहः। (b) इहापि चोक्तो यथैधांसीत्यादिना (IV. 37) सर्वकर्मदाहः। वक्ष्यति च। (c) उपपत्तेश्च। अविद्याकामक्लेशबीजनिमित्तानि हि कर्माणि जन्मान्तराङ्कुरमारभन्ते। इहापि च साहंकाराभिसंधीनि कर्माणि फलारम्भकाणि नेतराणीति तत्र तत्र भगवतोक्तम्।

---

also to establish his theory of जीवन्मुक्ति 'Liberation in this life.'

Opposition—Jñāna *cannot burn* (i) the actions done *before* and after the attainment of knowledge of Brahman in this *life*, called क्रियमाण कर्माणि, (ii) *actions done in innumerable past lives* called संचित कर्माणि and (iii) actions which have *begun to give their good and bad results in this* life, called प्रारब्धफलानि कर्माणि Knowledge can burn none of these actions because (a) The *destruction* of actions done before they give their results, is unreasonable and it will lead to dis-belief in everything in this life (सर्वत्रानाश्वासप्रसङ्ग) and to the futulity of the Scripture which promises certain *rewards and punishments for doing certain* good and bad deeds (शास्त्रानर्थक्यप्रसङ्ग), (b) Sankara admits that one part of actions, *viz*, that part which is *classified* as प्रारब्धफलानि कर्माणि, is not burnt by ज्ञान, so, we argue that प्रारब्धफलानि संचितानि and क्रियमाणानि कर्माणि—*all* kinds *of* actions are not burnt since all are equally actions (न च कर्मणां विशेषोऽवगम्यते).

Therefore '*He is not reborn*' (v. 23*d*) should mean "He is reborn three times only or once only".

*Sankara's Reply*—*No*, (*a*) *Sruti* (Mundaka Upa II. 2 8, etc) mentions the fact of all the actions of a sage being *burnt* (b) The *Gitā also mentions* the same (c) And because

" बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः ।
ज्ञानदग्धैस्तथा क्लेशैर्नाऽऽत्मा संपद्यते पुनः " ॥ इति च ।

(d) पू०-अस्तु तावज्ज्ञानोत्पत्त्युत्तरकालकृतानां कर्मणां ज्ञानेन दाहो ज्ञानसहभावित्वात् । न त्विह जन्मनि ज्ञानोत्पत्तेः प्राक्कृतानामतीतानेकजन्मान्तरकृतानां च दाहो युक्तः । सि०-न, सर्वकर्माणीति विशेषणात् । ज्ञानोत्तरकालभाविनामेव सर्वकर्मणामिति चेत् । न, संकोचे कारणानुपपत्तेः ।

(e) पू०-यदुक्तं यथा वर्तमानजन्मारम्भकाणि कर्माणि न क्षीयन्ते फलदानाय प्रवृत्तान्येव सत्यपि ज्ञाने तथानारब्धफलानामपि कर्मणां क्षयो न युक्त इति । सि०-तदसत् । कथं, तेषां मुक्तेषुवत्प्रवृत्तफलत्वात् । यथा पूर्वं लक्ष्यवेधाय मुक्त इषुर्धनुषो लक्ष्यवेधोत्तरकालमप्यारब्धवेगक्षयात्पतनेनैव निवर्तते एवं शरीरारम्भकं कर्म शरीरस्थितिप्रयोजने निवृत्तेऽप्यासंस्कारवेगक्षयात्पूर्ववद्वर्तत एव । स एवेषुः प्रवृत्तिनिमित्तानारब्धवेगस्त्वमुक्तो धनुषि प्रयुक्तोऽप्युपसंह्रियते तथाऽनारब्धफलानि कर्माणि स्वाश्रयस्थान्येव ज्ञानेन निर्बीजी क्रियन्त इति पतितेऽस्मिन्विद्वच्छरीरे 'न स भूयोऽभिजायते' इति युक्तमेवोक्तमिति सिद्धम् ॥ २३ ॥

अत्राऽऽत्मदर्शने उपायविकल्पा इमे ध्यानादय उच्यन्ते—

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २४ ॥

ध्यानेन ध्यानं नाम शब्दादिभ्यो विषयेभ्यः श्रोत्रादीनि करणानि मनस्युपसंहृत्य मनश्च प्रत्यक्चेतनितर्येकाग्रतया यच्चिन्तनं तद्ध्यानम् । तथा ध्यायतीव बको ध्यायतीव पृथिवी ध्यायन्तीव पर्वता (Cha. Upa. VII 6 1.) इत्युपमोपादानात्तैलधारावत्संततोऽविच्छिन्नप्रत्ययो ध्यानं तेन ध्यानेनात्मनि बुद्धौ पश्यन्त्यात्मानं प्रत्यक्चेतनमात्मना ध्यानसंस्कृतेनान्तःकरणेन केचिद्योगिनः । अन्ये सांख्येन योगेन सांख्यं नाम—इमे सत्त्वरजस्तमांसि गुणा मया दृश्या

---

it is reasonable that some actions (e. g., those caused by Avidyā and Desire for the reward) and not others, give their results. (d) The Śruti distinctly says " All actions are burnt by jñāna", and 'all' should not be interpreted to mean 'some'. (e) The non-burning of the प्रारब्धफलकर्माणि of a sage can be illustrated by the non-return of an arrow already discharged from the bow and the burning of the संचितानि कर्माणि and क्रियमाणानि कर्माणि which preceded the ज्ञान in this life by an arrow joined to the bow but withdrawn (धनुषि प्रयुक्तोऽप्युपसंहृतः).

महं तेभ्योऽन्यस्तद्व्यापारसाक्षिभूतो नित्यो गुणविलक्षण आत्मेति चिन्तनमेष सांख्यो योगस्तेन पश्यन्त्यात्मानमात्मनेति अनुवर्तते । कर्मयोगेन कर्मैव योग ईश्वरार्पणबुद्ध्याऽनुष्ठीयमानं घटनरूपं योगार्थत्वाद्योग उच्यते गुणतस्तेन सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेण चापरे ॥ २४ ॥

अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥

अन्ये त्विति । अन्ये त्वेषु विकल्पेष्वन्यतरेणाप्येवं यथोक्तमात्मानमजानन्तोऽन्येभ्य आचार्येभ्यः श्रुत्वेदमेव चिन्तयतेत्युक्ता उपासते श्रद्दधानाः सन्तश्चिन्तयन्ति तेऽपि चातितरन्त्येवातिक्रामन्त्येव मृत्युं मृत्युयुक्तं संसारमित्येतत् । श्रुतिपरायणाः श्रुतिः श्रवणं परमयनं गमनं मोक्षमार्गप्रवृत्तौ परं साधनं येषां ते श्रुतिपरायणाः केवलपरोपदेशप्रमाणाः स्वयं विवेकरहिता इत्यभिप्रायः । किमु वक्तव्यं प्रमाणं प्रति स्वतन्त्रा विवेकिनो मृत्युमतितरन्तीत्यभिप्रायः ॥ २५ ॥

क्षेत्रज्ञेश्वरैकत्वविषयं ज्ञानं मोक्षसाधनं यज्ज्ञात्वाऽमृतमश्नुत ( XIII. 12 ) इत्युक्तं तत्कस्माद्धेतोरिति तद्धेतुप्रदर्शनार्थं श्लोक आरभ्यते—

यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २६ ॥

यावद्यत्किंचित्संजायते समुत्पद्यते सत्त्वं वस्तु किमविशेषेणेत्याह स्थावरजङ्गमं स्थावरं जङ्गमं च क्षेत्रक्षेत्रज्ञसंयोगात्तज्जायत इत्येवं विद्धि जानीहि हे भरतर्षभ ।

पू०—कः पुनरयं क्षेत्रक्षेत्रज्ञयोः संयोगोऽभिप्रेतः । न तावद्रज्ज्वेव घटस्यावयवसंश्लेषद्वारकः सम्बन्धविशेषः संयोगः क्षेत्रेण क्षेत्रज्ञस्य संभवत्याकाशवन्निरवयवत्वात् । नापि समवायलक्षणस्तन्तुपटयोरिव क्षेत्रक्षेत्रज्ञयोरितरेतरकार्यकारणभावानभ्युपगमादिति ।

सि०—उच्यते, क्षेत्रक्षेत्रज्ञयोर्विषयविषयिणोर्भिन्नस्वभावयोरितरेतरतद्धर्माध्यासलक्षणः संयोगः क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबन्धनो रज्जुशुक्तिकादीनां तद्विवेकज्ञानाभावादध्यारोपितसर्परजतादिसंयोगवत् । सोऽयमध्यासस्वरूपः क्षेत्रक्षेत्रज्ञसंयोगो मिथ्याज्ञानलक्षणः । यथाशास्त्रं क्षेत्रक्षेत्रज्ञलक्षणभेदपरिज्ञानपूर्वकं प्राग्दर्शितरूपात्क्षेत्रान्मुञ्जादिवेषीकां यथोक्तलक्षणं क्षेत्रज्ञं प्रविभज्य न सत्तन्नासदुच्यते ( XIII. 12 ) इत्यनेन निरस्तसर्वोपाधिविशेषं ज्ञेयं ब्रह्म स्वरूपेण यः पश्यति क्षेत्रं च मायानिर्मितहस्तिस्वप्नदृष्टवस्तुगन्धर्वनगरादिवदसदेव सदिवावभासत इत्येवं निश्चितविज्ञानो यस्तस्य यथोक्तसम्यग्दर्शनविरोधादपगच्छति मिथ्याज्ञानम् ।

तस्य जन्महेतोरपगमात् ' य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ' इत्यनेन विद्वान्भूयो नाभिजायत इति यदुक्तं तदुपपन्नमुक्तम् ॥ २६ ॥

न स भूयोऽभिजायते ( XIII. 23 ) इति सम्यग्दर्शनफलमविद्यादिसंसारबीजनिवृत्तिद्वारेण जन्माभाव उक्तः । जन्मकारणं चाविद्यानिमित्तकः क्षेत्रक्षेत्रज्ञसंयोग उक्तः । अतस्तस्या अविद्याया निवर्तकं सम्यग्दर्शनमुक्तमपि पुनः शब्दान्तरेणोच्यते—

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७ ॥

समं निर्विशेषं तिष्ठन्तं स्थितिं कुर्वन्तं, क्व सर्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु प्राणिषु, कं परमेश्वरं देहेन्द्रियमनोबुद्ध्यव्यक्तात्मनोऽपेक्ष्य परमेश्वरस्तं सर्वेषु भूतेषु समं तिष्ठन्तम् । तानि विशिनष्टि विनश्यत्स्विति । तं च परमेश्वरमविनश्यन्तमिति भूतानां परमेश्वरस्य चात्यन्तवैलक्षण्यप्रदर्शनार्थम् । कथं, सर्वेषां हि भावविकाराणां जनिलक्षणो भावविकारो मूलं जन्मोत्तरभाविनोऽन्ये सर्वे भावविकारा विनाशान्ताः। विनाशात्परो न कश्चिदस्ति भावविकारो भावाभावात् । सति हि धर्मिणि धर्मा भवन्त्यतोऽन्त्यभावविकाराभावानुवादेन पूर्वभाविनः सर्वे भावविकाराः प्रतिषिद्धा भवन्ति सह कार्यैः । तस्मात्सर्वभूतैर्वैलक्षण्यमत्यन्तमेव परमेश्वरस्य सिद्धं निर्विशेषत्वमेकत्वं च । य एवं यथोक्तं परमेश्वरं पश्यति स पश्यति । ननु सर्वोऽपि लोकः पश्यति किं विशेषणेनेति, सत्यं पश्यति किंतु विपरीतं पश्यत्यतो विशिनष्टि स एव पश्यतीति । यथा तिमिरदृष्टिरनेकं चन्द्रं पश्यति तमपेक्ष्यैकचन्द्रदर्शी विशिष्यते स एव पश्यतीति । तथैवेहाप्येकमविभक्तं यथोक्तमात्मानं यः पश्यति स विभक्तानेकात्मविपरीतदर्शिभ्यो विशिष्यते स एव पश्यतीति । इतरे पश्यन्तोऽपि न पश्यन्ति विपरीतदर्शित्वादनेकचन्द्रदर्शिवदित्यर्थः ॥ २७ ॥

यथोक्तस्य सम्यग्दर्शनस्य फलवचनेन स्तुतिः कर्तव्येति श्लोक आरभ्यते—

समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ २८ ॥

समं पश्यन्नुपलभमानो हि यस्मात्सर्वत्र सर्वभूतेषु समवस्थितं तुल्यतयावस्थितमीश्वरमतीतानन्तरश्लोकोक्तलक्षणमित्यर्थः । समं पश्यन्किं न हिनस्ति हिंसां न करोत्यात्मना स्वेनैव स्वमात्मानं ततस्तदहिंसनाद्याति परां प्रकृष्टां गतिं मोक्षाख्याम् । ननु नैव कश्चित्प्राणी स्वयं स्वमात्मानं हिनस्ति कथमुच्यतेऽप्राप्तं न हिनस्तीति । यथा न ' पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे ' इत्यादि । नैष दोषः, अज्ञानामात्मतिरस्करणोपपत्तेः । सर्वो ह्यज्ञोऽत्यन्तप्रसिद्धं साक्षादपरोक्षादात्मानं तिरस्कृत्यानात्मानमात्मत्वेन परिगृह्य तमपि धर्माधर्मौ कृत्वोपात्तमात्मानं हत्वान्यमात्मानमुपादत्ते नवं तं चैवं हत्वान्यमेवं तमपि हत्वान्यमित्येवमुपात्तमुपात्तमात्मानं हन्तीत्यात्महा

सर्वोऽज्ञः। यस्तु परमार्थात्मा सोऽपि सर्वदाविद्यया हत इव विद्यमानफलाभावा-दिति सर्वे आत्महन एवाविद्वांसः। यस्त्वितरो यथोक्तात्मदर्शी स उभयथाप्यात्मनाऽऽत्मानं न हिनस्ति ततो याति परां गतिं, यथोक्तं फलं तस्य भवतीत्यर्थः ॥ २८ ॥

सर्वभूतस्थमीशं समं पश्यन्न हिनस्त्यात्मनात्मानमित्युक्तं तदनुपपन्नं स्वगुण-कर्मवैलक्षण्यभेदभिन्नेष्वात्मस्वित्येतदाशङ्क्याह—

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ २९ ॥

प्रकृत्या प्रकृतिर्भगवतो माया त्रिगुणात्मिका, मायां तु प्रकृतिं विद्यादिति (Sve Upa IV 10) मन्त्रवर्णात्तया प्रकृत्यैव च नान्येन महदादिकार्यकार-णाकारपरिणतया कर्माणि वाङ्मनःकायारभ्याणि क्रियमाणानि निर्वर्त्यमानानि सर्वशः सर्वप्रकारैर्यः पश्यत्युपलभते तथात्मानं क्षेत्रज्ञमकर्तारं सर्वोपाधिविवर्जितं पश्यति स परमार्थदर्शीत्यभिप्रायः। निर्गुणस्याकर्तुर्निर्विशेषस्याकाशस्येव भेदे प्रमाणानुपपत्ति-रित्यर्थः ॥ २९ ॥

पुनरपि तदेव सम्यग्दर्शनं शब्दान्तरेण प्रपञ्चयति—

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥

यदा यस्मिन्काले भूतपृथग्भावं भूतानां पृथग्भावं पृथक्त्वमेकस्थमेकस्मिन्नात्मनि स्थितमेकस्थमनुपश्यति शास्त्राचार्योपदेशतो मत्त्वात्मप्रत्यक्षत्वेन पश्यत्यात्मैवेदं सर्व-मिति। तत एव च तस्मादेव च विस्तारमुत्पत्तिं विकासमात्मतः प्राण आत्मत आशा आत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमित्येवमादिप्रकारैर्विस्तारं (Cha Upa VII 26 1) यदा पश्यति ब्रह्म संपद्यते ब्रह्मैव भवति तदा तस्मिन्काल इत्यर्थः ॥ ३० ॥

एतस्यात्मनः सर्वदेहात्मत्वे तद्दोषसंबन्धे प्राप्त इदमुच्यते—

अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३१ ॥

अनादित्वादनादेर्भावोऽनादित्वमादिः कारणं तद्यस्य नास्ति तदनादि। यद्-ध्यादिमत्तत्स्वेनात्मना व्येत्ययं त्वनादिस्त्वान्निरवयव इति कृत्वा न व्येति। तथा निर्गुणत्वात्सगुणो हि गुणव्ययाद्व्येत्ययं तु निर्गुणत्वान्न व्येतीति परमात्मायमव्ययो नास्य व्ययो विद्यत इत्यव्ययः। यत एवमतः शरीरस्थोऽपि शरीरेष्वात्मन उप-लब्धिर्भवतीति शरीरस्थ उच्यते तथापि न करोति। तदकरणादेव तत्फलेन

न लिप्यते। यो हि कर्ता स कर्मफलेन लिप्यतेऽयं त्वकर्तातो न फलेन लिप्यत इत्यर्थः। कः पुनर्देहेषु करोति लिप्यते च यदि तावदन्यः परमात्मनो देही करोति लिप्यते च ततः इदमनुपपन्नमुक्तं क्षेत्रज्ञेश्वरैकत्वं क्षेत्रज्ञं चापि मां विद्धीत्यादि। अथ नास्तीश्वरादन्यो देही कः करोति लिप्यते चेति वाच्यं परो वा नास्तीति। सर्वथा दुर्विज्ञेयं दुर्वाच्यं चेति भगवत्प्रोक्तमौपनिषदं दर्शनं परित्यक्तं वैशेषिकैः सांख्यार्हतबौद्धैश्च। तत्राय परिहारो भगवता स्वेनैवोक्तः 'स्वभावस्तु प्रवर्तते' इति (V. 14)। अविद्यामात्रस्वभावो हि करोति लिप्यत इति व्यवहारो भवति न तु परमार्थत एकस्मिन्परमात्मनि तदस्ति। अत एतस्मिन्परमार्थसांख्यदर्शने स्थितानां ज्ञाननिष्ठानां परमहंसपरिव्राजकानां तिरस्कृताविद्याव्यवहाराणां कर्माधिकारो नास्तीति तत्र तत्र दर्शितं भगवता ॥ ३१ ॥

किमिव न करोति न लिप्यत इत्यत्र दृष्टान्तमाह—

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२ ॥

यथा सर्वगतं व्याप्यपि सत्सौक्ष्म्यात्सूक्ष्मभावादाकाशं खं नोपलिप्यते न संबध्यते सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२ ॥

किंच—

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥

यथा प्रकाशयत्यवभासयत्येकः कृत्स्नं लोकमिमं रविः सवितादित्यस्तथा तद्वन्महाभूतादिधृत्यन्तं क्षेत्रमेकः सन्प्रकाशयति कः क्षेत्री परमात्मेत्यर्थः। रविदृष्टान्तोऽत्रात्मन उभयार्थोऽपि भवति रविवत्सर्वक्षेत्रेष्वेक आत्मालेपकश्चेति ॥ ३३ ॥

समस्ताध्यायार्थोपसंहारार्थोऽयं श्लोकः—

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३४ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे प्रकृतिपुरुषविवेकयोगो नाम

त्रयोदशोऽध्यायः ॥ १३ ॥

क्षेत्रक्षेत्रज्ञयोर्यथाव्याख्यातयोरेवं यथाप्रदर्शितप्रकारेणान्तरमितरेतरवैलक्षण्यविशेषं ज्ञानचक्षुषा शास्त्राचार्योपदेशजनितमात्मप्रत्ययिकज्ञानं चक्षुस्तेन ज्ञानचक्षुषा भूतप्रकृतिमोक्षं च भूतानां प्रकृतिरविद्यालक्षणाव्यक्ताख्या तस्या भूतप्रकृतेर्मोक्षणमभावगमनं च ये विदुर्विजानन्ति यान्ति गच्छन्ति ते परं परमार्थतत्त्वं ब्रह्म न पुनर्देहमाददत इत्यर्थः ॥ ३४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकर
भगवतः कृतौ श्रीभगवद्गीताभाष्ये क्षेत्रक्षेत्रज्ञयोगो नाम
त्रयोदशोऽध्यायः ॥ १३ ॥



# चतुर्दशोऽध्यायः ।

सर्वमुत्पद्यमानं क्षेत्रक्षेत्रज्ञसंयोगादुत्पद्यत इत्युक्तं तत्कथमिति तत्प्रदर्शनार्थं 'परं भूय' इत्यादिरध्याय आरभ्यते, अथवा ईश्वरपरतन्त्रयो क्षेत्रक्षेत्रज्ञयोर्जगत्कारणत्वं न तु सांख्यानामिव स्वतन्त्रयोरित्येवमर्थं, प्रकृतिस्थत्व गुणेषु च सङ्गः संसारकारणमित्युक्तं कस्मिन्गुणे कथं सङ्गः के वा गुणाः कथं वा ते बध्नन्तीति गुणेभ्यश्च मोक्षणं कथं स्यान्मुक्तस्य च लक्षणं वक्तव्यमित्येवमर्थं च–

**श्रीभगवानुवाच–**

परं भूय प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥

परं ज्ञानमिति व्यवहितेन सबन्ध । भूय पुन पूर्वेषु सर्वेष्वध्यायेष्वसकृदुक्तमपि प्रवक्ष्यामि । तच्च परं परवस्तुविषयत्वात्, किं तत्, ज्ञानं सर्वेषां ज्ञानानामुत्तममुत्तमफलत्वात् । ज्ञानानामिति नामानित्वादीनां ( XIII 7 ) किं तर्हि यज्ञादिज्ञेयवस्तुविषयाणामिति । तानि न मोक्षायेदं तु मोक्षायेति परोत्तमशब्दाभ्यां स्तौति श्रोतृबुद्धिरुच्युत्पादनार्थम् । यज्ज्ञात्वा यज्ज्ञानं ज्ञात्वा प्राप्य मुनयः संन्यासिनो मननशीलाः सर्वे परां सिद्धिं मोक्षाख्यामितोऽस्माद्देहबन्धनादूर्ध्वं गता प्राप्ता ॥ १ ॥

अस्याश्च सिद्धेरैकान्तिकत्वं दर्शयति–

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥

इदं ज्ञानं यथोक्तमुपाश्रित्य ज्ञानसाधनमनुष्ठायेत्येतत् । मम परमेश्वरस्य साधर्म्यं मत्स्वरूपतामागताः प्राप्ता इत्यर्थो न तु समानधर्मता साधर्म्यं क्षेत्रज्ञेश्वरयोर्भेदानभ्युपगमाद्गीताशास्त्रे । फलवादश्चायं स्तुत्यर्थमुच्यते । सर्गेऽपि सृष्टिकालेऽपि नोपजायन्ते नोत्पद्यन्ते प्रलये ब्रह्मणोऽपि विनाशकाले न व्यथन्ति न व्यथां नापद्यन्ते न च्यवन्तीत्यर्थः ॥ २ ॥

क्षेत्रक्षेत्रज्ञसंयोग ईदृशो भूतकारणमित्याह—

मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥

मम स्वभूता मदीया माया त्रिगुणात्मिका प्रकृतिर्योनिः सर्वभूतानां, सर्वकार्येभ्यो महत्त्वात्कारणात् स्वविकाराणां महद्ब्रह्मेति योनिरेव विशिष्यते । तस्मिन्महति ब्रह्मणि योनौ गर्भं हिरण्यगर्भस्य जन्मनो बीजं सर्वभूतजन्मकारणं बीजं दधामि निक्षिपामि क्षेत्रक्षेत्रज्ञप्रकृतिद्वयशक्तिमानीश्वरोऽहमविद्याकामकर्मोपाधिस्वरूपानुविधायिनं क्षेत्रज्ञं क्षेत्रेण संयोजयामीत्यर्थः । संभव उत्पत्तिः सर्वभूतानां हिरण्यगर्भोत्पत्तिद्वारेण ततस्तस्माद्गर्भाधानाद्भवति हे भारत ॥ ३ ॥

सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥

सर्वयोनिष्विति । देवपितृमनुष्यपशुमृगादिसर्वयोनिषु कौन्तेय मूर्तयो देहसंस्थानलक्षणा मूर्छिताङ्गावयवा मूर्तयः संभवन्ति यास्तासां मूर्तीनां ब्रह्म महत्सर्वावस्थं योनिः कारणमहमीशो बीजप्रदो गर्भाधानस्य कर्ता पिता ॥ ४ ॥

के गुणाः कथं बध्नन्तीत्युच्यते—

सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥

सत्त्वं रजस्तम इत्येवंनामानो, गुणा इति पारिभाषिकः शब्दो न रूपादिवद्द्रव्याश्रिता । न च गुणगुणिनोरन्यत्वमत्र विवक्षितम् । तस्माद्गुणा इव नित्यपरतन्त्राः क्षेत्रज्ञं प्रत्यविद्यात्मकत्वात्क्षेत्रज्ञं निबध्नन्तीव तमास्पदीकृत्यात्मानं प्रतिलभन्त इति निबध्नन्तीत्युच्यते । ते च प्रकृतिसंभवा भगवन्मायासंभवा निबध्नन्तीव हे महाबाहो महान्तौ समर्थतरावाजानुप्रलम्बौ बाहू यस्य स महाबाहुर्हे महाबाहो देहे शरीरे देहिनं देहवन्तमव्ययमव्ययत्वं चोक्तमनादित्वादित्यादिश्लोके (XIII 31)। ननु देही न लिप्यत (XIII 31) इत्युक्तं तत्कथमिह निबध्नन्तीत्यन्यथोच्यते, परिहृतमस्माभिरिवशब्देन निबध्नन्तीवेति ॥ ५ ॥

तत्र सत्त्वादीनां सत्त्वस्यैव तावल्लक्षणमुच्यते—

तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥

तत्र सत्त्वादीनि । निर्मलत्वात्स्फटिकमणिरिव प्रकाशकमनामयं निरुपद्रवं सत्त्वं, तन्निबध्नाति । कथं सुखसङ्गेन सुख्यहमिति विषयभूतस्य सुखस्य विषयिण्या-

रमति संश्लेषापादानं मृषैव सुखे सञ्जनम्। सैषाऽविद्या। न हि विषय-धर्मो विषयिणो भवति। इच्छादि च धृत्यन्तं क्षेत्रस्यैव विषयस्य धर्म इत्युक्तं भगवता। अतोऽविद्यैव स्वकीयधर्मभूतया विषयविषय्यविवेकलक्षणयाऽस्वात्मभूते सुखे सञ्जयतीव सक्तमिव करोत्यसुखिनं सुखिनमिव। तथा ज्ञानसङ्गेन च। ज्ञानमिति सुखमाहचर्यात्क्षेत्रस्यैवान्तःकरणस्य धर्मो नात्मनः। आत्मधर्मत्वे सङ्गानुपपत्तेर्बन्धानुपपत्तेश्च। सुख इव ज्ञानादौ सङ्गो मन्तव्यो हेऽनघाव्यसन ॥ ६ ॥

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥

रजो रागात्मकमिति। रजो रागात्मकं रञ्जनाद्रागो गैरिकादिवद्रागात्मकं विद्धि जानीहि तृष्णासङ्गसमुद्भवं तृष्णाऽप्राप्ताभिलाषः, आसङ्गः प्राप्ते विषये मनसः प्रीतिलक्षणः संश्लेषः, तृष्णासङ्गयोः समुद्भवं तृष्णासङ्गसमुद्भवं तन्निबध्नाति तद्रजः कौन्तेय कर्मसङ्गेन दृष्टादृष्टार्थेषु कर्मसु सञ्जनं तत्परता कर्मसङ्गस्तेन निबध्नाति रजो देहिनम् ॥ ७ ॥

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥

तमस्त्विति। तमस्तृतीयो गुणोऽज्ञानजमज्ञानाज्जातमज्ञानजं विद्धि मोहनं मोहकरमविवेककरं सर्वदेहिनां सर्वेषां देहवतां प्रमादालस्यनिद्राभिः प्रमादश्चालस्यं च निद्रा च प्रमादालस्यनिद्रास्ताभिस्तत्तमो निबध्नाति भारत ॥ ८ ॥

पुनर्गुणानां व्यापारः संक्षेपत उच्यते—

सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९ ॥

सत्त्वं सुखे सञ्जयति संश्लेषयति रजः कर्मणि हे भारत सञ्जयतीति अनुवर्तते। ज्ञानं सत्त्वकृतं विवेकमावृत्याच्छाद्य तु तमः स्वेनावरणात्मना प्रमादे सञ्जयत्युत प्रमादो नाम प्राप्तकर्तव्याकरणम् ॥ ९ ॥

उक्तं कार्यं कदा कुर्वन्ति गुणा इत्युच्यते—

रजस्तमश्चाभिभूय सत्त्वं भवति भारत।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥

रजस्तमश्चोभावप्यभिभूय सत्त्वं भवत्युद्भवति वर्धते यदा तदा लब्धात्मकं सत्त्वं स्वकार्यं ज्ञानसुखाद्यारभते हे भारत। तथा रजोगुणः सत्त्वं तमश्चैवोभावप्यभिभूय वर्धते यदा तदा कर्मतृष्णादि स्वकार्यमारभते। तमआख्यो गुणः सत्त्वं रजश्चोभावप्यभिभूय तथैव वर्धते यदा तदा ज्ञानावरणादि स्वकार्यमारभते ॥ १० ॥

यदा यो गुण उद्भूतो भवति तदा तस्य किं लिङ्गमित्युच्यते—

सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११ ॥

सर्वद्वारेष्वात्मन उपलब्धिद्वाराणि श्रोत्रादीनि सर्वाणि करणानि तेषु सर्वद्वारेष्वन्तःकरणस्य बुद्धेर्वृत्तिः प्रकाशो देहेऽस्मिन्नुपजायते । तदेव ज्ञानम् । यदैव प्रकाशो ज्ञानाख्य उपजायते तदा ज्ञानप्रकाशेन लिङ्गेन विद्याद्विवृद्धमुद्भूतं सत्त्वमित्युतापि ॥ ११ ॥

रजस उद्भूतस्येदं चिह्नम्—

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥

लोभः परद्रव्यादित्सा, प्रवृत्तिः प्रवर्तनं सामान्यचेष्टा, आरम्भः, कस्य, कर्मणाम्, अशमोऽनुपशमः हर्षरागादिप्रवृत्तिः, स्पृहा सर्वसामान्यवस्तुविषया तृष्णा, रजसि गुणे विवृद्ध एतानि लिङ्गानि जायन्ते हे भरतर्षभ ॥ १२ ॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥

अप्रकाश इति । अप्रकाशोऽविवेकोऽत्यन्तमप्रवृत्तिश्च प्रवृत्त्यभावस्तत्कार्यं प्रमादो मोह एव चाविवेको मूढतेत्यर्थः । तमसि गुणे विवृद्ध एतानि लिङ्गानि जायन्ते हे कुरुनन्दन ॥ १३ ॥

मरणद्वारेणापि यत्फलं प्राप्यते तदपि सङ्गरागहेतुकं सर्वं गौणमेवेति दर्शयन्नाह—

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ १४ ॥

यदा सत्त्वे प्रवृद्ध उद्भूते तु प्रलयं मरणं याति प्रतिपद्यते देहभृदात्मा तदोत्तमविदां महदादितत्त्वविदामित्येतत् । लोकानमलान्मलरहितान्प्रतिपद्यते प्राप्नोतीत्येतत् ॥ १४ ॥

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥

रजसि गुणे विवृद्धे प्रलयं मरणं गत्वा प्राप्य कर्मसङ्गिषु कर्मासक्तियुक्तेषु मनुष्येषु जायते । तथा तद्वदेव प्रलीनो मृतस्तमसि विवृद्धे मूढयोनिषु पश्वादियोनिषु जायते ॥ १५ ॥

अतीतश्लोकार्थस्यैव संक्षेप उच्यते—

कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥

कर्मणः सुकृतस्य सात्त्विकस्येत्यर्थः । आहुः शिष्टाः सात्त्विकस्यैव निर्मलं फलमिति । रजसस्तु फलं दुःखं राजसस्य कर्मण इत्यर्थः । कर्माधिकारात्फलमपि दुःखमेव कारणानुरूप्याद्राजसमेव । तथाज्ञानं तमसस्तामसस्य कर्मणोऽधर्मस्य पूर्ववत् ॥ १६ ॥

किं च गुणेभ्यो भवति—

सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥

सत्त्वात्सत्त्वात्मकात्संजायते समुत्पद्यते ज्ञानं रजसो लोभ एव च । प्रमादमोहौ चोभौ तमसो भवतोऽज्ञानमेव च भवति ॥ १७ ॥

किं च—

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः ॥ १८ ॥

ऊर्ध्वं गच्छन्ति देवलोकादिषूत्पद्यन्ते सत्त्वस्थाः सत्त्वगुणवृत्तस्थाः । मध्ये तिष्ठन्ति मनुष्येषूत्पद्यन्ते राजसाः । जघन्यगुणवृत्तस्था जघन्यश्चासौ गुणश्च जघन्यगुणस्तमस्तस्य वृत्तं निद्रालस्यादि तस्मिन्स्थिता जघन्यगुणवृत्तस्था मूढा अधो गच्छन्ति पश्वादिषूत्पद्यन्ते तामसाः ॥ १८ ॥

पुरुषस्य प्रकृतिस्थत्वरूपेण मिथ्याज्ञानेन युक्तस्य भोग्येषु गुणेषु सुखदुःखमोहात्मकेषु सुखी दुःखी मूढोऽहमस्मीत्येवंरूपो यः सङ्गस्तत्कारणं पुरुषस्य सदसद्योनिजन्मप्राप्तिलक्षणस्य संसारस्येति समासेन पूर्वाध्याये यदुक्तं तदिह सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवा इत्यत आरभ्य गुणस्वरूपं गुणवृत्तं स्ववृत्तेन च गुणानां बन्धकत्वं गुणवृत्तनिबद्धस्य च पुरुषस्य या गतिरित्येतत्सर्वं मिथ्याज्ञानमज्ञानमूलं बन्धकारणं विस्तरेणोक्त्वाधुना सम्यग्दर्शनान्मोक्षो वक्तव्य इत्यत आह भगवान्—

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥

नान्यं कार्यकारणविषयाकारपरिणतेभ्यो गुणेभ्यः कर्तारमन्यं यदा द्रष्टा विद्वान्सन्नानुपश्यति । गुणा एव सर्वावस्थाः सर्वकर्मणां कर्तार इत्येवं पश्यति । गुणेभ्यश्च परं गुणव्यापारसाक्षिभूतं वेत्ति मद्भावं मम भावं स द्रष्टाधिगच्छति ॥ १९ ॥

कथमधिगच्छतीत्युच्यते—

गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

गुणानेतान्यथोक्तानतीत्य जीवन्नेवातिक्रम्य मायोपाधिभूतांस्त्रीन्देही देहसमुद्भवान्देहोत्पत्तिबीजभूतान्, जन्ममृत्युजरादुःखैः, जन्म च मृत्युश्च जरा च दुःखानि च तैर्जीवन्नेव विमुक्तः सन्विद्वानमृतमश्नुते । एवं मद्भावमधिगच्छतीत्यर्थः ॥ २० ॥

जीवन्नेव गुणानतीतोऽमृतमश्नुत इति प्रश्नबीजं प्रतिलभ्य—

## अर्जुन उवाच—

कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥ २१ ॥

कैर्लिङ्गैश्चिह्नैस्त्रीनेतान्व्याख्याताद्गुणानतीतोऽतिक्रान्तो भवति प्रभो । किमाचारः कोऽस्याचार इति किमाचारः । कथं केन च प्रकारेणैतांस्त्रीन्गुणानतिवर्तते ॥ २१ ॥

गुणातीतस्य लक्षणं गुणातीतत्वोपायं चार्जुनेन पृष्टोऽस्मिन्श्लोके प्रश्नद्वयार्थं प्रतिवचनम्—

## श्रीभगवानुवाच—

यत्तावत्कैर्लिङ्गैर्युक्तो गुणातीतो भवतीति तच्छृणु—

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥

प्रकाशं च सत्त्वकार्यं प्रवृत्तिं च रजःकार्यं मोहमेव च तमःकार्यमित्येतानि न द्वेष्टि संप्रवृत्तानि सम्यग्विषयभावेनोद्भूतानि । मम तामसः प्रत्ययो जातस्तेनाहं मूढस्तथा राजसी प्रवृत्तिर्ममोत्पन्ना दुःखात्मिका तेनाहं रजसा प्रवर्तितः प्रचलितः स्वरूपात्कष्टं मम वर्तते योऽयं मत्स्वरूपावस्थानाद्भ्रंशस्तथा सात्त्विको गुणः प्रकाशात्मा मां विवेकित्वमापादयन्सुखे च सञ्जयन्बध्नातीति तानि द्वेष्ट्यसम्यग्दर्शित्वेन । तदेवं गुणातीतो न द्वेष्टि संप्रवृत्तानि । यथा च सात्त्विकादिपुरुषः सात्त्विकादिकार्याण्यात्मानं प्रति प्रकाश्य निवृत्तानि काङ्क्षति, न तथा गुणातीतो निवृत्तानि काङ्क्षतीत्यर्थः । एतन्न परप्रत्यक्षं लिङ्गं किं तर्हि स्वात्मप्रत्यक्षत्वादात्मविषयमेवैतल्लक्षणम् । न हि स्वात्मविषयं द्वेषमाकाङ्क्षां वा परः पश्यति ॥ २२ ॥

अथेदानीं गुणातीतः किमाचार इति प्रश्नस्य प्रतिवचनमाह—

उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ २३ ॥

उदासीनवद्यथोदासीनो न कस्यचित्पक्षं भजते तथायं गुणातीतत्वोपायमार्गेऽवस्थित आसीन आत्मविद्गुणैर्यः सन्यासी न विचाल्यते विवेकदर्शनावस्थानात्। तदेतत्स्फुटी करोति गुणाः कार्यकरणविषयाकारपरिणता अन्योन्यस्मिन्वर्तन्त इति योऽवतिष्ठति। छन्दोभङ्गभयात्परस्मैपदप्रयोगः। योऽनुतिष्ठतीति वा पाठान्तरम्। नेङ्गते न चलति स्वरूपावस्थ एव भवतीत्यर्थः ॥ २३ ॥

किं च—

समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥

समदुःखसुखः समे दुःखसुखे यस्य स समदुःखसुखः। स्वस्थः स्व आत्मनि स्थितः प्रसन्नः। समलोष्टाश्मकाञ्चनो लोष्टं चाश्मा च काञ्चनं च समानि यस्य स समलोष्टाश्मकाञ्चनः। तुल्यप्रियाप्रियः प्रियं चाप्रियं च प्रियाप्रिये तुल्ये समे यस्य सोऽयं तुल्यप्रियाप्रियः। धीरो धीमान्। तुल्यनिन्दात्मसंस्तुतिर्निन्दा चात्मसंस्तुतिश्च तुल्ये निन्दात्मसंस्तुती यस्य यतेः स तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥

किं च—

मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ २५ ॥

मानापमानयोस्तुल्यः समो निर्विकारः। तुल्यो मित्रारिपक्षयोः, यद्यप्युदासीना भवन्ति केचित्स्वाभिप्रायेण तथापि पराभिप्रायेण मित्रारिपक्षयोरिव भवन्तीति तुल्यो मित्रारिपक्षयोरित्याह। सर्वारम्भपरित्यागी दृष्टादृष्टार्थानि कर्माण्यारभ्यन्त इत्यारम्भाः सर्वानारम्भान्परित्यक्तुं शीलमस्येति सर्वारम्भपरित्यागी देहधारणमात्रनिमित्तव्यतिरेकेण सर्वकर्मपरित्यागीत्यर्थः। गुणातीतः स उच्यते। उदासीनवदित्यादि गुणातीतः स उच्यत इत्येतदन्तमुक्तं यावद्यत्नसाध्यं तावत्संन्यासिनाऽनुष्ठेयं गुणातीतत्वसाधनं मुमुक्षोः स्थिरीभूतं तु स्वसंवेद्यं सद्गुणातीतस्य यतेर्लक्षणं भवतीति ॥ २५ ॥

अधुना कथं च त्रीन्गुणानतिवर्तत इति प्रश्नस्य प्रतिवचनमाह—

मां च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥ २६ ॥

मां चेश्वरं नारायणं सर्वभूतहृदयाश्रितं यो यतिः कर्मी वाऽव्यभिचारेण न कदाचिद्यो व्यभिचरति भक्तियोगेन भजनं भक्तिः सैव योगस्तेन भक्तियोगेन सेवते स गुणान्समतीत्यैतान्यथोक्तान्ब्रह्मभूयाय भवनं भूयो ब्रह्मभूयाय ब्रह्मभवनाय मोक्षाय कल्पते समर्थो भवतीत्यर्थः ॥ २६ ॥

कुत एतदित्युच्यते—

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां भीष्म-
पर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे गुणत्रयविभागयोगो
नाम चतुर्दशोऽध्यायः ॥ १४ ॥

**ब्रह्मणः** परमात्मनो **हि** यस्मात्प्रतिष्ठाहं प्रतितिष्ठत्यस्मिन्निति प्रतिष्ठाहं प्रत्यगात्मा । कीदृशस्य ब्रह्मणोऽमृतस्याविनाशिनोऽव्ययस्याविकारिणः शाश्वतस्य च नित्यस्य **धर्मस्य** ज्ञानयोगधर्मप्राप्यस्य **सुखस्या**नन्दरूपस्यैकान्तिकस्याव्यभिचारिणः । (1) अमृतादिस्वभावस्य परमात्मनः प्रत्यगात्मा प्रतिष्ठा सम्यग्ज्ञानेन परमात्मतया निश्चीयते । तदेतद्ब्रह्मभूयाय कल्पत इत्युक्तम् । (2) यया चेश्वरशक्त्या भक्तानुग्रहादिप्रयोजनाय ब्रह्म प्रतितिष्ठते प्रवर्तते सा शक्तिर्ब्रह्मैवाहं शक्तिशक्तिमतोरनन्यत्वादित्यभिप्रायः । (3) अथवा ब्रह्मशब्दवाच्यत्वात्सविकल्पकं ब्रह्म तस्य ब्रह्मणो निर्विकल्पकोऽहमेव नान्यः प्रतिष्ठाश्रयः । किंविशिष्टस्यामृतस्यामरणधर्मकस्याव्ययस्य व्ययरहितस्य । किं च शाश्वतस्य च नित्यस्य **धर्मस्य** ज्ञाननिष्ठालक्षणस्य । **सुखस्य** तज्जनितस्यैकान्तिकस्यैकान्तनियतस्य च प्रतिष्ठाहमिति अनुवर्तते ॥ २७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकर-
भगवतः कृतौ श्रीभगवद्गीताभाष्ये गुणत्रयविभागयोगो
नाम चतुर्दशोऽध्यायः ॥ १४ ॥



# पञ्चदशोऽध्यायः ।

यस्मान्मदधीनं कर्मिणा कर्मफलं ज्ञानिना च ज्ञानफलमतो भक्तियोगेन मां ये सेवन्ते ते मत्प्रसादाज्ज्ञानप्राप्तिक्रमेण गुणातीता मोक्षं गच्छन्ति किमु वक्तव्यमात्मनस्तत्त्वमेव सम्यग्विजानन्त इत्यतो भगवानर्जुनेनापृष्टमप्यात्मनस्तत्त्वं विवक्षुरुवाच—ऊर्ध्वमूलमित्यादि। तत्र तावद्वृक्षरूपककल्पनया वैराग्यहेतोः संसारस्वरूपं वर्णयति विरक्तस्य हि संसाराद्भगवत्तत्त्वज्ञानेऽधिकारो नान्यस्येति—

श्रीभगवानुवाच—

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥

ऊर्ध्वमूलं कालतः सूक्ष्मत्वात्कारणत्वान्नित्यत्वान्महत्त्वाच्चोर्ध्वमुच्यते ब्रह्माव्यक्तमायाशक्तिमत्तन्मूलमस्येति सोऽयं संसारवृक्ष ऊर्ध्वमूलः । श्रुतेश्च—'ऊर्ध्वमूलोऽवाक्शाख' (Katha Upa. III 2. 1) इति ।

पुराणे च—" अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोत्थितः ।
बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः ॥
महाभूतविशाखश्च विषयैः पत्रवांस्तथा ।
धर्माधर्मसुपुष्पश्च सुखदुःखफलोदयः ॥
आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः ।
एतद्ब्रह्मवनं चैव *ब्रह्माचरति नित्यशः ॥
एतच्छित्त्वा च भित्त्वा च ज्ञानेन परमासिना ।
ततश्चात्मरतिं प्राप्य तस्मान्नावर्तते पुनः " ॥ इत्यादि

MBh. XIV. 47. 12–15 ।

---

*POA reads ब्रह्मवृक्षस्य तस्य तद् for ब्रह्मा चरति नित्यशः ।

तमूर्ध्वमूलं समारमायामयं वृक्षमध शाखं महदहंकारतन्मात्रादयः शाखा इवाऽधो भवन्तीति सोऽयमध शाखरामधःशाखं न श्वोऽपि स्थातेत्यश्वत्थस्त क्षणप्रध्वंसिनमश्वत्थं प्राहुः कथयन्ति । अव्ययं (1) संसारमायाया अनादिकालप्रवृत्तत्वात्सोऽय संसारवृक्षो-ऽव्ययोऽनाद्यनन्तदेहादिसंतानाश्रयो हि सुप्रसिद्धस्तमव्ययम् । तस्यैव संसारवृक्षस्ये-दमन्यद्विशेषणं छन्दांसि यस्य पर्णानि छन्दांसि छादनादृग्यजुःसामलक्षणानि यस्य संसारवृक्षस्य पर्णानीव पर्णानि । यथा वृक्षस्य परिरक्षणार्थानि पर्णानि तथा वेदाः संसारवृक्षपरिरक्षणार्थाः धर्माधर्मतद्धेतुफलप्रकाशनार्थत्वात् । यथाव्याख्यातं संसारवृक्षं समूलं यस्तं वेद स वेदविद्वेदार्थविदित्यर्थः । नहि संसारवृक्षादस्मात्समूलाज्ज्ञेयो-ऽन्योऽणुमात्रोऽप्यवशिष्टोऽस्त्यतः **सर्वज्ञः स (2) यो वेदार्थविदिति** समूलसंसार-वृक्षज्ञानं **स्तौति** ॥ १ ॥

तस्यैव संसारवृक्षस्यापराऽवयवकल्पनोच्यते—

**अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ।**
**अधश्च मूलान्यनुसंततानि कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥**

अधो **मनुष्यादिभ्यो** यावत्स्थावरमूर्ध्वं च यावद्ब्रह्मणो विश्वसृजो धाम (3) इत्ये-तदन्तं **यथाकर्म यथाश्रुतं ज्ञानकर्मफलानि** तस्य वृक्षस्य शाखा इव शाखाः प्रसृताः प्रगताः गुणप्रवृद्धा गुणैः सत्त्वरजस्तमोभिः प्रवृद्धाः स्थूलीकृता उपादानभूतैर्वि-षयप्रवाला विषयाः शब्दादयः प्रवाला इव देहादिकर्मफलेभ्यः शाखाभ्योऽङ्कुरी भवन्तीव तेन विषयप्रवालाः शाखाः । संसारवृक्षस्य परममूलमुपादानकारणं पूर्वमुक्त-मथेदानीं कर्मफलजनितरागद्वेषादिवासना मूलानीव धर्माधर्मप्रवृत्तिकारणान्यवान्तर-भावीनि तान्यधश्च (4) देवाद्यपेक्षया मूलान्यनुसंततान्यनुप्रविष्टानि कर्मानुबन्धीनि कर्म धर्माधर्मलक्षणमनुबन्धः पश्चाद्भावी येषामुद्भूतिमनु उद्भवतीति तानि कर्मानु-बन्धीनि मनुष्यलोके विशेषतोऽत्र हि मनुष्याणां कर्माधिकारः प्रसिद्धः ॥ २ ॥

यस्त्वयं वर्णितः संसारवृक्षः —

**न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा ।**
**अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३ ॥**

न रूपमस्येह यथा वर्णितं तथा नैवोपलभ्यते स्वप्नमरीच्युदकमायागन्धर्वनगर-समत्वाद् दृष्टनष्टस्वरूपो हि स इत्यत एव नान्तो न पर्यन्तो निष्ठा समाप्तिर्वा विद्यते । तथा न चादिरित आरभ्याय प्रवृत्त इति न केनचिद्गम्यते । न च संप्रतिष्ठा स्थितिर्मध्यमस्य केनचिदुपलभ्यते । अश्वत्थमेनं यथोक्तं सुविरूढमूलं सुष्ठु विरूढानि

(1) ASS reads संसारमायामयमनादि......for संसारमायाया अनादि...
(2) VPP and POA have सर्ववेदार्थविदिति for स यो वेदार्थविदिति.
(3) ASS reads यावद् ब्रह्मा विश्वसृजो धर्म for यावद्.........धाम.
(4) ASS reads देहाद्यपेक्षया for देवाद्यपेक्षया.

विरोह गतानि सुदृढानि मूलानि यस्य तमेनं सुविरूढमूलमसङ्गशस्त्रेणासङ्ग पुत्रवित्त लोकैषणादिभ्यो व्युत्थानं तेनासङ्गशस्त्रेण दृढेन परमात्माभिमुख्यनिश्चयदृढीकृतेन पुनःपुनर्विवेकाभ्यासाश्मनिशितेन छित्त्वा समारवृक्षं सबीजमुद्धृत्य ॥ ३ ॥

ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥

तत इति । ततः पश्चात्यत् वैष्णवं तत्परिमार्गितव्यं परिमार्गणमन्वेषणं ज्ञातव्यमित्यर्थः । यस्मिन्पदे गता प्रविष्टा न निवर्तन्ति नावर्तन्ते भूयः पुनः ससाराय । कथं परिमार्गितव्यमित्याह तमेव च यः पदशब्देनोक्तः आद्यमादौ भवं पुरुषं प्रपद्य इत्येवं परिमार्गितव्यं तच्छरणतयेत्यर्थः । कोऽसौ पुरुष इत्युच्यते यतो यस्मात्पुरुषात्संसारमायावृक्षप्रवृत्तिः प्रसृता निःसृतैन्द्रजालिकादिव माया पुराणी चिरन्तनी ॥ ४ ॥

कथंभूतास्तत्पदं गच्छन्तीत्युच्यते—

निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥

निर्मानमोहा मानश्च मोहश्च मानमोहौ तौ निर्गतौ येभ्यस्ते निर्मानमोहा मानमोहवर्जिता जितसङ्गदोषाः सङ्ग एव दोषः सङ्गदोषो जितः सङ्गदोषो यैस्ते जितसङ्गदोषा अध्यात्मनित्याः परमात्मस्वरूपालोचननित्यास्तत्परा विनिवृत्तकामा विशेषतो निर्लेपेन निवृत्ताः कामा यथा ते विनिवृत्तकामा यतयः सन्यासिनो द्वन्द्वैः प्रियाप्रियादिभिर्विमुक्ताः सुखदुःखसंज्ञैः परित्यक्ता गच्छन्त्यमूढा मोहवर्जिताः पदमव्ययं तद्यथोक्तम् ॥ ५ ॥

तदेव पदं पुनर्विशिष्यते—

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥

तद्धामेति व्यवहितेन धाम्ना सबन्धः । धाम तेजोरूपं पदं न भासयते सूर्य आदित्यः सर्वावभासनशक्तिमत्त्वेऽपि सति । तथा न शशाङ्कश्चन्द्रो न पावकोऽग्निरपि । यद्धाम वैष्णवं पदं गत्वा प्राप्य न निवर्तन्ते यच्च सूर्यादिर्न भासयते तद्धाम पदं परमं मम विष्णोः ॥ ६ ॥

यद्गत्वा न निवर्तन्त इत्युक्तम् । ननु सर्वा हि गतिरागत्यन्ताः संयोगा विप्रयोगान्ताः (MBh XII 330 20) इति हि प्रसिद्धं कथमुच्यते तद्धामगतानां नास्ति निवृत्तिरिति, शृणु तत्र कारणम्—

ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥

ममैव परमात्मनोऽशो भागोऽवयव एकदेश इत्यनर्थान्तरं जीवलोके जीवानां लोके संसारे जीवभूतो भोक्ता कर्तेति प्रसिद्धः सनातनश्चिरंतनः। यथा जलसूर्यकः सूर्यांशो जलनिमित्तापाये सूर्यमेव गत्वा न निवर्तते *तथायमप्यंशस्तेनैवात्मना संगच्छत्येवमेव यथा वा घटाद्युपाधिपरिच्छिन्नो घटाद्याकाश आकाशांशः सन्घटादिनिमित्तापाय आकाशं प्राप्य न निवर्तत इत्येवमत उपपन्नमुक्तं यद्गत्वा न निवर्तन्त इति। ननु निरवयवस्य परमात्मनः कुतोऽवयव एकदेशोंऽश इति। सावयवत्वे च विनाशप्रसङ्गोऽवयवविभागात्। नैष दोषोऽविद्याकृतोपाधिपरिच्छिन्न एकदेशोंऽश इव कल्पितो यतः। दर्शितश्चायमर्थः क्षेत्राध्याये विस्तरशः। स च जीवो मदंशत्वेन कल्पितः कथं संसरत्युत्क्रामति चेदुच्यते मनःषष्ठानीन्द्रियाणि श्रोत्रादीनि प्रकृतिस्थानि स्वस्थाने कर्णशष्कुल्यादौ प्रकृतौ स्थितानि कर्षत्याकर्षति ॥ ७ ॥

कस्मिन्काले—

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥

यच्चापि यदा चाप्युत्क्रामतीश्वरो देहादिसंघातस्वामी जीवस्तदा कर्षतीति श्लोकस्य द्वितीयपादोऽर्थवशात्प्राथम्येन संबध्यते। यदा च पूर्वस्माच्छरीराच्छरीरान्तरमाप्नोति तदा गृहीत्वैतानि मनःषष्ठानीन्द्रियाणि संयाति सम्यग्याति गच्छति। किमिवेत्याह वायुः पवनो गन्धानिवाशयात्पुष्पादेः ॥ ८ ॥

कानि पुनस्तानीति—

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥

श्रोत्रं चक्षुः स्पर्शनं त्वगिन्द्रियं रसनं जिह्वा घ्राणमेव च मनश्च षष्ठं प्रत्येकमिन्द्रियेण सहाधिष्ठाय देहस्थो विषयाञ्शब्दादीनुपसेवते ॥ ९ ॥

एवं देहगतं देहात्—

उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥

उत्क्रामन्तं परित्यजन्तं देहं पूर्वोपात्तं स्थितं वा देहे तिष्ठन्तं भुञ्जानं वा शब्दादींश्चोपलभमानं गुणान्वितं सुखदुःखमोहाद्यैर्गुणैरन्वितमनुगतं संयुक्तमित्यर्थः। एवंभूतमप्येनमत्यन्तदर्शनगोचरप्राप्तं विमूढा दृष्टादृष्टविषयभोगबलाकृष्टचेतस्तयानेकधा मूढा नानुपश्यन्त्यहो कष्टं वर्तत इत्यनुक्रोशति च भगवान्। ये तु पुनः प्रमाण

* POA and VPP drop तथायमप्यंशः।

जनितज्ञानचक्षुषस्त एनं पश्यन्ति ज्ञानचक्षुषो विविक्तदृष्टय इत्यर्थः ॥ १० ॥

केचित्तु—

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥

यतन्तः प्रयत्नं कुर्वन्तो योगिनश्च समाहितचित्ता एनं प्रकृतमात्मानं पश्यन्त्ययमहमस्मीत्युपलभन्त आत्मनि स्वस्यां बुद्धाववस्थितं यतन्तोऽपि शास्त्रादिप्रमाणैरकृतात्मानोऽसंस्कृतात्मानस्तपसेन्द्रियजयेन च दुश्चरितादनुपरता अशान्तदर्पाः प्रयत्नं कुर्वन्तोऽपि नैनं पश्यन्त्यचेतसोऽविवेकिनः ॥ ११ ॥

यत्पदं सर्वस्यावभासकमप्यग्न्यादित्यादिकं ज्योतिर्नावभासयते यत्प्राप्ताश्च मुमुक्षवः पुनः संसाराभिमुखा न निवर्तन्ते यस्य च पदस्योपाधिभेदमनु विधीयमाना जीवा घटाकाशादय इवाकाशस्यांशास्तस्य पदस्य सर्वात्मत्वं सर्वव्यवहारास्पदत्वं च विवक्षुश्चतुर्भिः श्लोकैर्विभूतिसंक्षेपमाह भगवान्—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥

यदादित्यगतमादित्याश्रयं किं तत्तेजो दीप्तिः प्रकाशो जगद्भासयते प्रकाशयत्यखिलं समस्तं यच्चन्द्रमसि शशभृति तेजोऽवभासकं वर्तते यच्चाग्नौ हुतवहे तत्तेजो विद्धि विजानीहि मामकं मदीयं मम विष्णोस्तज्ज्योतिः । अथवा यदादित्यगतं तेजश्चैतन्यात्मकं ज्योतिर्यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकं मदीयं मम विष्णोस्तज्ज्योतिः । ननु स्थावरेषु जङ्गमेषु च तत्समानं चैतन्यात्मकं ज्योतिस्तत्र कथमिदं विशेषणं यदादित्यगतमित्यादि । नैष दोषः सत्त्वाधिक्यादाविस्तरत्वोपपत्तेः[1] । आदित्यादिषु हि सत्त्वमत्यन्तप्रकाशमत्यन्तभास्वरमतस्तत्रैवाविस्तरं ज्योतिरिति तद्विशिष्यते, न तु तत्रैव तदधिकमिति । यथा हि लोके तुल्येऽपि मुखसंस्थाने न काष्ठकुड्यादौ मुखमाविर्भवत्यादर्शादौ तु स्वच्छे स्वच्छतरे च तारतम्येनाविर्भवति तद्वत् ॥ १२ ॥

किं च—

गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥

गां पृथिवीमाविश्य प्रविश्य धारयामि भूतानि जगदहमोजसा बलेन यद्बलं कामरागविवर्जितमैश्वरं जगद्विधारणाय पृथिव्यां प्रविष्टं येन गुर्वी पृथिवी नाधः पतति न विदीर्यते च । तथा च मन्त्रवर्णः—"येन द्यौरुग्रा पृथिवी च दृढा" इति

(1) ASS reads आधिक्योपपत्तेः for आविस्तरत्वोपपत्तेः ।

(Tai. Samhita IV. 1. 8)। "स दाधार पृथिवीम्" (Tai. Samhita IV. 1. 8) इत्यादिश्च। अतो गामाविश्य च भूतानि चराचराणि धारयामीति युक्तमुक्तम्। किं च पृथिव्यां जाता ओषधीः सर्वा व्रीहियवाद्याः पुष्णामि पुष्टिमतो रसस्वादुमतीश्च करोमि सोमो भूत्वा रसात्मकः सोमः सन् रसात्मको रसस्वभावः सर्वरसानामाकरः सोमः स हि सर्वा ओषधीः स्वात्मरसानुप्रवेशेन पुष्णाति ॥ १३ ॥

किं च—

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥

अहमेव वैश्वानर उदरस्थोऽग्निर्भूत्वा "अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते" (Br. Upa. V. 9. 1) इत्यादिश्रुतेर्वैश्वानरः सन्प्राणिनां प्राणवतां देहमाश्रितः प्रविष्टः प्राणापानसमायुक्तः प्राणापानाभ्यां समायुक्तः संयुक्तः पचामि पक्तिं करोमि चतुर्विधं चतुष्प्रकारमन्नमशनं भोज्यं भक्ष्यं चोष्यं लेह्यं च भोक्ता वैश्वानरोऽग्निर्भोज्यमन्नं सोमस्तदेतदुभयमग्नीषोमौ सर्वमिति पश्यतोऽन्नदोषलेपो न भवति ॥ १४ ॥

किं च—

सर्वस्य चाहं हृदि संनिविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥

सर्वस्य प्राणिजातस्याहमात्मा सन्हृदि बुद्धौ संनिविष्टोऽतो मत्त आत्मनः सर्वप्राणिनां स्मृतिर्ज्ञानं तदपोहनं च। यथा* पुण्यकर्मिणा पुण्यकर्मानुरोधेन ज्ञानस्मृती भवतस्तथा पापकर्मिणा पापकर्मानुरूपेण स्मृतिज्ञानयोरपोहनं चापायनमपगमनं च। वेदैश्च सर्वैरहमेव परमात्मा वेद्यो वेदितव्यो वेदान्तकृद्वेदान्तार्थसंप्रदायकृदित्यर्थः। वेदविद्वेदार्थविदेव चाहम् ॥ १५ ॥

भगवत ईश्वरस्य नारायणाख्यस्य विभूतिसंक्षेप उक्तो विशिष्टोपाधिकृतो यदादित्यगतं तेज इत्यादिना, अथाधुना तस्यैव क्षराक्षरोपाधिप्रविभक्ततया निरुपाधिकस्य केवलस्य स्वरूपनिर्दिधारयिषयोत्तरश्लोका आरभ्यन्ते। तत्र सर्वमेवातीतानागताध्यायार्थजातं+ त्रिधा राशीकृत्याह—

---

* POA and VPP read यथा पुण्यकर्मिणाम् for पुण्यकर्मिणाम्.

\+ ASS—अतीतानागतानन्तराध्यायार्थजातम्.

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥

द्वाविमौ पृथग्राशीकृतौ पुरुषावित्युच्येते लोके संसारे। क्षरश्च क्षरतीति क्षरो विनाश्येको राशिरपरः पुरुषोऽक्षरस्तद्विपरीतो भगवतो मायाशक्तिः क्षराख्यस्य पुरुषस्योत्पत्तिबीजमनेकसंसारिजन्तुकामकर्मादिसंस्काराश्रयोऽक्षरः पुरुष उच्यते। कौ तौ पुरुषावित्याह स्वयमेव भगवान्क्षरः सर्वाणि भूतानि समस्तं विकारजातमित्यर्थः। कूटस्थः कूटो राशी राशिरिव स्थितः, अथवा कूटो माया वञ्चना जिह्मता कुटिलतेति पर्यायाः, अनेकमायावञ्चनादिप्रकारेण स्थितः कूटस्थः संसारबीजानन्त्यान्न क्षरतीत्यक्षर उच्यते ॥ १६ ॥

आभ्यां क्षराक्षराभ्यां विलक्षणः क्षराक्षरोपाधिद्वयदोषेणास्पृष्टो नित्यशुद्धबुद्धमुक्तस्वभावः—

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥

उत्तम उत्कृष्टतमः पुरुषस्त्वन्योऽत्यन्तविलक्षण आभ्यां परमात्मेति परमश्चासौ देहाद्यविद्याकृतात्मभ्य आत्मा च सर्वभूतानां प्रत्यक्चेतन इत्यतः परमात्मेत्युदाहृत उक्तो वेदान्तेषु। स एव विशिष्यते यो लोकत्रयं भूर्भुवःस्वराख्यं स्वकीयया चैतन्यबलशक्त्याविश्य प्रविश्य बिभर्ति स्वरूपसद्भावमात्रेण बिभर्ति धारयत्यव्ययो नास्य व्ययो विद्यत इत्यव्यय ईश्वरः सर्वज्ञो नारायणाख्य ईशनशीलः ॥ १७ ॥

यथाव्याख्यातस्येश्वरस्य पुरुषोत्तम इत्येतन्नाम प्रसिद्धं तस्य नामनिर्वचनप्रसिद्ध्यार्थवत्त्वं नाम्नो दर्शयन्निरतिशयोऽहमीश्वर इत्यात्मानं दर्शयति भगवान्—

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥

यस्मात्क्षरमतीतोऽहं संसारमायावृक्षमश्वत्थाख्यमतिक्रान्तोऽहमक्षरादपि संसारमायावृक्षबीजभूतादपि चोत्तम उत्कृष्टतम ऊर्ध्वतमो वातः क्षराक्षराभ्यामुत्तमत्वादस्मि भवामि लोके वेदे च प्रथितः प्रख्यातः पुरुषोत्तम इत्येवं मां भक्तजना विदुः कवयः काव्यादिषु चेदं नाम निबध्नन्ति पुरुषोत्तम इत्यनेनाभिधानेनाभिगृणन्ति ॥ १८ ॥

अथेदानीं यथानिरुक्तमात्मानं यो वेद तस्येदं फलमुच्यते—

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥

यो मामीश्वरं यथोक्तविशेषणमेवं यथोक्तेन प्रकारेणासंमूढः संमोहवर्जितः सञ्जानात्ययमहमस्मीति पुरुषोत्तमं स सर्ववित्सर्वात्मना सर्वं वेत्तीति सर्वज्ञः सर्वभूतस्थं भजति मां सर्वभावेन सर्वात्मचित्ततया हे भारत ॥ १९ ॥

अस्मिन्नध्याये भगवत्तत्त्वज्ञानं मोक्षफलमुक्त्वाथेदानीं तत्स्तौति—

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥ २० ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

इत्येतद्गुह्यतमं गोप्यतममत्यन्तरहस्यमित्येतत् । किं तच्छास्त्रम् । यद्यपि गीताख्यं समस्तं शास्त्रमुच्यते तथाप्ययमेवाध्याय इह शास्त्रमित्युच्यते स्तुत्यर्थं प्रकरणात् । सर्वो हि गीताशास्त्रार्थोऽस्मिन्नध्याये समासेनोक्तो न केवलं, सर्वश्च वेदार्थ इह परिसमाप्तो 'यस्तं वेद स वेदवित्' ( XV. 1 ) 'वेदैश्च सर्वैरहमेव वेद्यः' ( XV. 15 ) इति चोक्तम् । इदमुक्तं कथितं मया हेऽनघापाप । एतच्छास्त्रं यथादर्शितार्थं बुद्ध्वा बुद्धिमान्स्याद्भवेन्नान्यथा कृतकृत्यश्च भारत कृतं कृत्यं कर्तव्यं येन स कृतकृत्यो विशिष्टजन्मप्रसूतेन ब्राह्मणेन यत्कर्तव्यं तत्सर्वं भगवत्तत्त्वे विदिते कृतं भवेदित्यर्थः । न चान्यथा कर्तव्यं परिसमाप्यते कस्यचिदित्यभिप्रायः ।

'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति चोक्तम् ( IV. 33 ) ।

"एतद्धि जन्मसामग्र्यं * ब्राह्मणस्य विशेषतः ।
प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा" ॥ (Manu XII 93)

इति च मानवं वचनम् । यत एतत्परमार्थतत्त्वं मत्तः श्रुतवानसि ततः कृतार्थस्त्वं भारतेति ॥ २० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

* Manusmrti reads जन्मसाफल्यम् for जन्मसामग्र्यम्.



# षोडशोऽध्यायः

दैव्यासुरी राक्षसी चेति प्राणिनां प्रकृतयो नवमेऽध्याये सूचितास्तासां विस्तरेण प्रदर्शनायाभयं सत्त्वसंशुद्धिरित्यादिरध्याय आरभ्यते, तत्र संसारमोक्षाय दैवी प्रकृतिर्निबन्धनायासुरी राक्षसी चेति दैव्या आदानाय प्रदर्शनं क्रियत इतरयोः परिवर्जनाय च—

**श्रीभगवानुवाच—**

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥

अभयमभीरुता सत्त्वसंशुद्धिः सत्त्वस्यान्तःकरणस्य संशुद्धिः संव्यवहारेषु परवञ्चनामायानृतादिपरिवर्जनं शुद्धभावेन व्यवहार इत्यर्थः । ज्ञानयोगव्यवस्थितिर्ज्ञानं शास्त्रत आचार्यतश्चात्मादिपदार्थानामवगमोऽवगतानामिन्द्रियाद्युपसंहारेणैकाग्रतया स्वात्मसंवेद्यतापादनं योगस्तयोर्ज्ञानयोगयोर्व्यवस्थितिर्व्यवस्थानं तन्निष्ठतैषा प्रधाना दैवी सात्त्विकी संपत्, यत्र येषामधिकृतानां या प्रकृतिः संभवति सात्त्विकी सोच्यते । दानं यथाशक्ति संविभागोऽन्नादीनां, दमश्च बाह्यकरणानामुपशमोऽन्तःकरणस्योपशमं शान्तिं वक्ष्यति, यज्ञश्च श्रौतोऽग्निहोत्रादिः, स्मार्तश्च देवयज्ञादिः, स्वाध्याय ऋग्वेदाद्यध्ययनमदृष्टार्थं, तपो वक्ष्यमाणं शारीरादि, आर्जवमृजुत्वं सर्वदा ॥ १ ॥

किं च—

अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ २ ॥

अहिंसाहिंसनं प्राणिनां पीडावर्जनं, सत्यमप्रियानृतवर्जितं यथाभूतार्थवचनम्, अक्रोधः परैराक्रुष्टस्याभिहतस्य वा प्राप्तस्य क्रोधस्योपशमनं, त्यागः संन्यासः पूर्वं दानस्योक्तत्वात्, शान्तिरन्तःकरणस्योपशमः, अपैशुनमपिशुनता परस्मै पररन्ध्रप्रकटीकरणं पैशुनं तदभावोऽपैशुनं, दया कृपा भूतेषु

दुःखितेषु, अलोलुप्त्वमिन्द्रियाणां विषयसंनिधावविक्रिया, मार्दवं मृदुताऽक्रौर्यं ह्रीर्लज्जा, अचापलमसति प्रयोजने वाक्पाणिपादादीनामव्यापारयितृत्वम् ॥ २ ॥

किं च—

**तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।**
**भवन्ति संपदं दैवीमभिजातस्य भारत ॥ ३ ॥**

तेजः प्रागल्भ्यं न त्वग्गता दीप्तिः, क्षमाक्रुष्टस्य ताडितस्य वान्तर्विक्रियायामुत्पद्यमानायां विक्रियायाः प्रशमनमक्रोध इत्यवोचाम, इत्थं क्षमाया अक्रोधस्य च विशेषः, धृतिर्देहेन्द्रियेष्ववसादं प्राप्तेषु तस्य प्रतिषेधकोऽन्तःकरणवृत्तिविशेषो येनोत्तम्भितानि करणानि देहश्च नावसीदन्ति, शौचं द्विविधं मृज्जलकृतं बाह्यमाभ्यन्तरं च मनोबुद्ध्योर्नैर्मल्यं मायारागादिकालुष्याभाव एवं द्विविधं शौचम्, अद्रोहः परजिघांसाभावोऽहिंसनं, नातिमानिताऽत्यर्थं मानोऽतिमानः स यस्य विद्यते सोऽतिमानी तद्भावोऽतिमानिता तदभावो नातिमानिताऽऽत्मनः पूज्यतातिशयभावनाभाव इत्यर्थः । भवन्त्यभयादीन्येतदन्तानि संपदमभिजातस्य । किंविशिष्टां संपदं दैवीं देवानां संपदमभिलक्ष्य जातस्य दैवविभूत्यर्हस्य भाविकल्याणस्येत्यर्थो हे भारत ॥ ३ ॥

अथेदानीमासुरी संपदुच्यते—

**दम्भो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च ।**
**अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४ ॥**

दम्भो धर्मध्वजित्वम्, दर्पो धनस्वजनादिनिमित्त उत्सेकोऽतिमानः पूर्वोक्तः क्रोधश्च, पारुष्यमेव च परुषवचनं यथा काणं चक्षुष्मान्, विरूपं रूपवान्, हीनाभिजनमुत्तमाभिजन इत्यादि । अज्ञानं चाविवेकज्ञानं मिथ्याप्रत्ययः कर्तव्याकर्तव्यादिविषयमभिजातस्य पार्थ । किमभिजातस्येत्याह—संपदमासुरीम्–असुराणां संपदासुरी तामभिजातस्येत्यर्थः ॥ ४ ॥

अनयोः संपदोः कार्यमुच्यते—

**दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।**
**मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥**

दैवी संपद्या सा विमोक्षाय संसारबन्धनात्, निबन्धाय नियतो बन्धो निबन्धस्तदर्थमासुरी संपन्मताभिमता तथा राक्षसी च । तत्रैवमुक्तेऽर्जुनस्यान्तर्गतं भावं किमहमासुरसंपद्युक्तः किं वा दैवसंपद्युक्त इत्येवमालोचनारूपमालक्ष्याह भगवान्मा शुचः शोकं मा कार्षीः संपदं दैवीमभिजातोऽस्यभिलक्ष्य जातोऽसि भाविकल्याणस्त्वमसीत्यर्थो हे पाण्डव ॥ ५ ॥

**द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।**
**दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥**

द्वौ भूतेति । द्वौ द्विसंख्याकौ भूतसर्गौ भूतानां मनुष्याणां सर्गौ सृष्टी भूतसर्गौ सृज्येते इति सर्गौ भूतान्येव सृज्यमानानि दैवासुरसंयुक्तानि द्वौ भूतसर्गावित्युच्येते "द्वया ह वै प्राजापत्या देवाश्चासुराश्च" इति श्रुतेः ( Br. Upa. I. 3. 1 )। लोकेऽस्मिन्संसार इत्यर्थः । सर्वेषां द्वैविध्योपपत्तेः । कौ तौ भूतसर्गावित्युच्येते प्रकृतावेव दैव आसुर एव च । उक्तयोरेव पुनरनुवादे प्रयोजनमाह दैवो भूतसर्गोऽभयं सत्त्वसंशुद्धिरित्यादिना विस्तरशो विस्तरप्रकारैः प्रोक्तः कथितो न त्वासुरो विस्तरशोऽतस्तत्परिवर्जनार्थमासुरं पार्थ मे मम वचनादुच्यमानं विस्तरशः शृण्ववधारय ॥ ६ ॥

आध्यायपरिसमाप्तेरासुरा प्रकृतिः प्राणिविशेषणत्वेन प्रदर्श्यते प्रत्यक्षीकरणेन च शक्यतेऽस्याः परिवर्जनं कर्तुमिति—

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥

प्रवृत्तिं च प्रवर्तनं यस्मिन्पुरुषार्थसाधने कर्तव्ये प्रवृत्तिस्तां निवृत्तिं च तद्विपरीतां यस्मादनर्थहेतोर्निवर्तितव्यं सा निवृत्तिस्तां च जना आसुरा न विदुर्न जानन्ति । न केवलं प्रवृत्तिनिवृत्ती एव न विदुर्न शौचं नापि चाचारो न सत्यं तेषु विद्यते । अशौचा अनाचारा मायाविनोऽनृतवादिनो ह्यासुराः ॥ ७ ॥

किं च—

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ८ ॥

असत्यं यथा वयमनृतप्रायास्तथेदं जगत्सर्वमसत्यमप्रतिष्ठं च नास्य धर्माधर्मौ प्रतिष्ठातोऽप्रतिष्ठं चेति ते आसुरा जना जगदाहुरनीश्वरं न च धर्माधर्मसव्यपेक्षकोऽस्य शासितेश्वरो विद्यत इत्यतोऽनीश्वरं जगदाहुः । किं चापरस्परसंभूतं कामप्रयुक्तयोः स्त्रीपुरुषयोरन्योन्यसंयोगाज्जगत्सर्वं संभूतम् । किमन्यत्कामहैतुकं कामहेतुकमेव कामहैतुकं किमन्यज्जगतः कारणं न किंचिददृष्टं धर्माधर्मादि कारणान्तरं विद्यते जगतः काम एव प्राणिनां कारणमिति लोकायतिकदृष्टिरियम् ॥८॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥

एतामिति । एतां दृष्टिमवष्टभ्याश्रित्य नष्टात्मानो नष्टस्वभावा विभ्रष्टपरलोकसाधना अल्पबुद्धयो विषयविषयैव बुद्धिर्येषां तेऽल्पबुद्धयः प्रभवन्त्युग्रकर्माणः क्रूरकर्माणो हिंसात्मकाः क्षयाय जगतः प्रभवन्तीति सम्बन्धः । जगतोऽहिताः शत्रव इत्यर्थः ॥ ९ ॥

ते च—

काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वासद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ॥ १० ॥

काममिच्छाविशेषमाश्रित्यावष्टभ्य दुष्पूरमशक्यपूरणं दम्भमानमदान्विता दम्भश्च मानश्च मदश्च दम्भमानमदास्तैरन्विता दम्भमानमदान्विता मोहादविवेकतो गृहीत्वो-पादायासद्ग्राहानशुभानिश्चयान्प्रवर्तन्ते लोकेऽशुचिव्रता अशुचीनि व्रतानि येषा तेऽशुचिव्रताः ॥ १० ॥

किं च—

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदितिनिश्चिताः ॥ ११ ॥

चिन्तामपरिमेयां च न परिमातु शक्यते यस्याश्चिन्ताया इयत्ता सापरिमेया तामपरिमेयां प्रलयान्तां मरणान्तामुपाश्रिताः सदा चिन्तापरा इत्यर्थः । कामोप-भोगपरमा काम्यन्त इति कामा शब्दादयस्तदुपभोगपरमा, अयमेव परम पुरुषार्थो य' कामोपभोग इत्येवनिश्चितात्मान एतावदितिनिश्चिताः ॥ ११ ॥

आशापाशशतैर्बद्धा. कामक्रोधपरायणा. ।
ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥ १२ ॥

आशापाशेति । आशापाशशतैराशा एव पाशास्तच्छतैराशापाशशतैर्बद्धा नियन्त्रिताः सन्तः सर्वतः आकृष्यमाणाः, कामक्रोधपरायणा' कामक्रोधौ परमयन पर आश्रयो येषा ते कामक्रोधपरायणाः, ईहन्ते चेष्टन्ते कामभोगार्थं कामभोगप्रयोजनाय न धर्मार्थमन्यायेनार्थसंचयानर्थप्रचयानन्यायेन परस्वापहरणादिनेत्यर्थः ॥ १२ ॥

ईदृशश्च तेषामभिप्राय –

इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥

इद द्रव्यमद्येदानीं मया लब्धमिदमन्यत्प्राप्स्ये मनोरथ मनस्तुष्टिकरमिद चास्ती-दमपि मे भविष्यत्यागामिनि संवत्सरे पुनर्धन तेनाहं धनी विख्यातो भविष्यामि ॥ १३ ॥

असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ १४ ॥

असौ मयेति । असौ देवदत्तनामा मया हतो दुर्जय. शत्रु., हनिष्ये चान्या-न्वराकानपरानपि किमेते करिष्यन्ति तपस्विनः सर्वथापि नास्ति मत्तुल्य ईश्वरोऽह-मह भोगी सर्वप्रकारेण च सिद्धोऽह संपन्न पुत्रैः पौत्रैर्नप्तृभिर्न केवल मानुषोऽह बलवान्सुखी चाहमेवान्ये तु भूमिभारायावतीर्णाः" ॥ १४ ॥

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥

आढ्य इति । आढ्यो धनेनाभिजनेनाभिजनवान्सत्कुलश्च श्रोत्रियत्वादिसपन्नस्तेनापि न मम तुल्योऽस्ति कश्चित्कोऽन्योऽस्ति सदृशस्तुल्यो मया, किंच यक्ष्ये यागेनाप्यन्यानभिभविष्यामि दास्यामि नटादिभ्यो मोदिष्ये हर्षं चातिशयं प्राप्स्यामीत्येवमज्ञानेन विमोहिता अज्ञानविमोहिता विविधमविवेकभावमापन्ना ॥ १५ ॥

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ता. कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥

अनेकेति । अनेकचित्तविभ्रान्ता उक्तप्रकारैरनेकैश्चित्तैर्विविधं भ्रान्ता अनेकचित्तविभ्रान्ता मोहजालसमावृता मोहोऽविवेकोऽज्ञानं तदेव जालमिवावरणात्मकत्वात्तेन समावृता' प्रसक्ता कामभोगेषु तत्रैव निषण्णा' सन्तस्तेनोपचितकल्मषा पतन्ति नरकेऽशुचौ वैतरण्यादौ ॥ १६ ॥

आत्मसभाविता. स्तब्धा धनमानमदान्विता' ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥

आत्मेति । आत्मसभाविता सर्वगुणविशिष्टतयात्मनैव सभाविता आत्मसभाविता न साधुभि, स्तब्धा अप्रणतात्मनो धनमानमदान्विता धननिमित्तो मानो मदश्च ताभ्या धनमानमदाभ्यामन्विता यजन्ते नामयज्ञैर्नाममात्रैर्यज्ञैस्ते दम्भेन धर्मध्वजितयाविधिपूर्वकं विहिताङ्गनिकर्तव्यतारहितम् ॥ १७ ॥

अहंकार बलं दर्पं काम क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयका ॥ १८ ॥

अहमिति । अहंकारमहंकरणमहंकारो विद्यमानैरविद्यमानैश्च गुणैरात्मन्यध्यारोपितैर्विशिष्टमात्मानमहमिति मन्यते सोऽहंकारोऽविद्याख्यः कष्टतमः सर्वदोषाणां मूल सर्वानर्थप्रवृत्तीनां च तम्। तथा बल पराभिभवनिमित्त कामरागान्वित दर्पं दर्पो नाम यस्योद्भवे धर्ममतिक्रामति सोऽयमन्तःकरणाश्रयो दोषविशेष काम स्त्र्यादिविषय क्रोधमनिष्टविषयमेतानन्याश्च महतो दोषान्संश्रिता किंच ते मामीश्वरमात्मपरदेहेषु स्वदेहे परदेहेषु च तद्बुद्धिकर्मसाक्षिभूत मां प्रद्विषन्तो मच्छासनातिवर्तित्व प्रद्वेषस्त कुर्वन्तोऽभ्यसूयका सन्मार्गस्थानां गुणेष्वसहमाना' ॥ १८ ॥

तानह द्विषत: क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥

* POA drops अन्ये तु भूमिभारायावतीर्णा

तानहमिति । तानहं सर्वान्सन्मार्गप्रतिपक्षभूतान्साधुद्वेषिणो द्विषतश्च मां क्रूरान्संसारेष्वेव नरकसंसरणमार्गेषु नराधमानधर्मदोषवत्त्वात्क्षिपामि प्रक्षिपाम्यजस्रं सततमशुभानशुभकर्मकारिण आसुरीष्वेव क्रूरकर्मप्रायासु व्याघ्रसिंहादियोनिषु क्षिपामीत्यनेन संबन्ध ॥ १९ ॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥

आसुरीमिति । आसुरीं योनिमापन्नाः प्रतिपन्ना मूढा अविवेकिनो जन्मनि जन्मनि प्रति जन्म तमोबहुलास्वेव योनिषु जायमाना अधो गच्छन्तो मूढा मामीश्वरमप्राप्यानासाद्य हे कौन्तेय ततस्तस्मादपि यान्त्यधमां निकृष्टतमां गतिम् । मामप्राप्यैवेति न मत्प्राप्तौ काचिदप्याशङ्कास्त्यतो मच्छिष्टसाधुमार्गमप्राप्येत्यर्थः ॥ २० ॥

सर्वस्या आसुर्याः संपदः संक्षेपोऽयमुच्यते, यस्मिंस्त्रिविधे सर्व आसुरसंपद्भेदोऽनन्तोऽप्यन्तर्भवति, यत्परिहारेण परिहृतश्च भवति, यन्मूलं सर्वस्यानर्थस्य तदेतदुच्यते—

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥

त्रिविधं त्रिप्रकारं नरकस्य प्राप्ताविदं द्वारं नाशनमात्मनो यद्द्वारं प्रविशन्नेव नश्यत्यात्मा कस्मैचित्पुरुषार्थाय योग्यो न भवतीत्येतदत उच्यते द्वारं नाशनमात्मन इति । किं तत्कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् । यत एतद्द्वारं नाशनमात्मनस्तस्मात्कामादित्रयमेतत्त्यजेत् ॥ २१ ॥

( * ) त्यागस्तुतिरियम्—

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥

एतैरिति । एतैर्विमुक्तः कौन्तेय तमोद्वारैस्तमसो नरकस्य दुःखमोहात्मकस्य द्वाराणि कामादयस्तैरेतैस्त्रिभिर्विमुक्तो नरः आचरत्यनुतिष्ठति । किमात्मनः श्रेयो यत्प्रतिबद्धः पूर्वं नाचरति—तदपगमादाचरति ततस्तदाचरणाद्याति परां गतिं मोक्षमपीति ॥ २२ ॥

सर्वस्यैतस्यासुरसंपत्परिवर्जनस्य श्रेयआचरणस्य च शास्त्रं कारणं शास्त्रप्रमाणादुभयं शक्यं कर्तुं नान्यथात—

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥

---

* ASS reads this as part of Bhāsya on v 21

— POA and VPP read नाचचार for नाचरति.

यः शास्त्रविधिं* कर्तव्याकर्तव्यज्ञानकारणं विधिप्रतिषेधाख्यमुत्सृज्य त्यक्त्वा वर्तते कामकारतः कामप्रयुक्तः सन् न सिद्धिं पुरुषार्थयोग्यतामवाप्नोति । नाप्यस्मिँल्लोके सुखं नापि परां प्रकृष्टां गतिं स्वर्गं मोक्षं वा ॥ २३ ॥

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्म-
पर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे दैवासुरसंपद्विभागयोगो
नाम षोडशोऽध्यायः ॥ १६ ॥

तस्मादिति । तस्माच्छास्त्रं प्रमाणं ज्ञानसाधनं ते तव कार्याकार्यव्यवस्थितौ कर्तव्याकर्तव्यव्यवस्थायामतो ज्ञात्वा बुद्ध्वा शास्त्रविधानोक्तं विधिर्विधानं शास्त्रेण विधानं शास्त्रविधानं कुर्यान्न कुर्यादित्येवंलक्षणं तेनोक्तं स्वकर्म यत्तत्कर्तुमिहार्हसि । इहेति कर्माधिकारभूमिप्रदर्शनार्थमिति ॥ २४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीम-
च्छंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये दैवासुरसंपद्विभागयोगो
नाम षोडशोऽध्यायः ॥ १६ ॥

---

* VPP and POA add शास्त्र वेदस्तस्य विधिम् after शास्त्रविधिम्, a reading noticed by ASS also.



# सप्तदशोऽध्यायः ।

तस्माच्छास्त्रं प्रमाणं त इति भगवद्वाक्यालब्धप्रश्नबीज —

## अर्जुन उवाच—

**ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः ।**
**तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥**

ये केचिदविशेषिताः शास्त्रविधिं शास्त्रविधानं श्रुतिस्मृतिशास्त्रचोदनामुत्सृज्य परित्यज्य यजन्ते देवादीन्पूजयन्ति श्रद्धयास्तिक्यबुद्ध्यान्विताः संयुक्ताः सन्तः श्रुतिलक्षणं स्मृतिलक्षणं वा कंचिच्छास्त्रविधिमपश्यन्तो वृद्धव्यवहारदर्शनादेव श्रद्दधानतया ये देवादीन्पूजयन्ति त इह ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विता इत्येवं गृह्यन्ते । ये पुनः कंचिच्छास्त्रविधिमुपलभमाना एव तमुत्सृज्यायथाविधि देवादीन्पूजयन्ति त इह 'ये शास्त्रविधिमुत्सृज्य यजन्ते' इति न परिगृह्यन्ते । कस्माच्छ्रद्धयान्वितत्वविशेषणात् । देवादिपूजाविधिपरं किंचिच्छास्त्रं पश्यन्त एव तदुत्सृज्याश्रद्दधानतया तद्विहितायां देवादिपूजायां श्रद्धयान्विताः प्रवर्तन्त इति न शक्यं कल्पयितुं यस्मात्तस्मात्पूर्वोक्ता एव 'ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः' इत्यत्र गृह्यन्ते । तेषामेवंभूतानां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः किं सत्त्वं निष्ठावस्थानमाहोस्विद्रजोऽथ वा तमः । एतदुक्तं भवति या तेषां देवादिविषया पूजा सा किं सात्त्विक्याहोस्विद्राजस्युत तामसीति ॥ १ ॥

सामान्यविषयोऽयं प्रश्नो नाप्रविभज्य प्रतिवचनमर्हतीति—

## श्रीभगवानुवाच—

**त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।**
**सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥**

त्रिविधा त्रिप्रकारा भवति श्रद्धा । यस्यां निष्ठायां त्वं पृच्छसि देहिनां सा

स्वभावजा । जन्मान्तरकृतो धर्मादिसंस्कारो मरणकालेऽभिव्यक्तः स्वभाव उच्यते ततो जाता स्वभावजा । सात्त्विकी सत्त्वनिर्वृत्ता देवपूजादिविषया, राजसी रजोनिर्वृत्ता यक्षरक्षःपूजादिविषया, तामसी तमोनिर्वृत्ता प्रेतपिशाचादिपूजाविषयैव त्रिविधा तामुच्यमाना श्रद्धा शृणु ॥ २ ॥

सैव त्रिविधा भवति—

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।

श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥

सत्त्वानुरूपा विशिष्टसंस्कारोपेतान्तःकरणानुरूपा सर्वस्य प्राणिजातस्य श्रद्धा भवति भारत । यद्येवं ततः किं स्यादित्युच्यते श्रद्धामय श्रद्धाप्रायोऽयं पुरुषः संसारी जीवः । कथं यो यच्छ्रद्धो या श्रद्धा यस्य जीवस्य स यच्छ्रद्धः स एव तच्छ्रद्धानुरूप एव स जीवः ॥ ३ ॥

ततश्च कार्येण लिङ्गेन देवादिपूजया सत्त्वादिनिष्ठानुमेयेत्याह—

यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ।

प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥

यजन्ते पूजयन्ति सात्त्विकाः सत्त्वनिष्ठा देवान्, यक्षरक्षांसि राजसाः, प्रेतान्भूतगणांश्च सप्तमातृकादींश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥

एवं कार्यतो निर्णीताः सत्त्वादिनिष्ठाः शास्त्रविध्युत्सर्गे तत्र कश्चिदेव सहस्रेषु देवपूजादितत्परः सत्त्वनिष्ठो भवति बाहुल्येन तु रजोनिष्ठास्तमोनिष्ठाश्चैव प्राणिनो भवन्ति, कथम्—

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।

दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥

अशास्त्रविहितं न शास्त्रविहितमशास्त्रविहितं घोरं पीडाकरं प्राणिनामात्मनश्च तपस्तप्यन्ते निर्वर्तयन्ति ये तपो जनास्ते च दम्भाहंकारसंयुक्ता दम्भश्चाहंकारश्च दम्भाहंकारौ ताभ्यां संयुक्ता दम्भाहंकारसंयुक्ताः कामरागबलान्विताः कामश्च रागश्च कामरागौ तत्कृतं बलं कामरागबलं तेनान्विताः कामरागबलैरन्विताः ॥ ५ ॥

कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ।

मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥

कर्शयन्त इति । कर्शयन्तः कृशीकुर्वन्तः शरीरस्थं भूतग्रामं करणसमुदायम् अचेतसोऽविवेकिनो मां चैव तत्कर्मबुद्धिसाक्षिभूतमन्तःशरीरस्थं कर्शयन्तो मद्-

मुखामनाकरणमेव सत्कर्शनं तान्विद्ध्यासुरनिश्चयानासुरो निश्चयो येषां त आसुर निश्चयास्तान्परिहरणार्थं विद्धीत्युपदेशः ॥ ६ ॥

आहाराणां च रस्यस्निग्धादिवर्गत्रयरूपेण भिन्नाना यथाक्रम सात्त्विक राजसतामसपुरुषप्रियत्वदर्शनमिद क्रियेत रस्यस्निग्धादिष्वाहारविशेषेष्वात्मन प्रीत्यतिरेकेण लिङ्गेन सात्त्विकत्व राजसत्व तामसत्व च बुद्ध्वा रजस्तमोलिङ्गानामाहाराणां परिवर्जनार्थं सत्त्वलिङ्गाना चोपादानार्थं तथा यज्ञा दीनामपि सत्त्वादिगुणभेदेन त्रिविधत्वप्रतिपादनमिद राजसतामसान्बुद्ध्वा कथ नु नाम परित्यजेत्सात्त्विकानेवानुतिष्ठेदित्येवमर्थम्—

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दान तेषा भेदमिमं शृणु ॥ ७ ॥

आहारस्त्वपि सर्वस्य भोक्तुस्त्रिविधो भवति प्रिय इष्टस्तथा यज्ञस्तथा तपस्तथा दान तेषामाहारादीना भेदमिम वक्ष्यमाण शृणु ॥ ७ ॥

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्या स्निग्धा स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥ ८ ॥

आयुरिति । आयुश्च सत्त्व च बल चारोग्य च सुख च प्रीतिश्च तासां विव र्धना आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनास्त च रस्या रसोपेता स्निग्धा स्नेहवन्त स्थिराश्चिरकालस्थायिनो देहे, हृद्या हृदयप्रिया आहाराः सात्त्विकप्रिया सात्त्विक स्येष्टा ॥ ८ ॥

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥

कट्विति । कटुरम्लो लवणोऽत्युष्णोऽतिशब्द कट्वादिषु सर्वत्र योज्योऽति कटुरतितीक्ष्ण इत्येव कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिन आहारा राजसस्येष्टा दुःख शोकामयप्रदा दुःख च शोक चामय च प्रयच्छन्तीति दुःखशोकामयप्रदा ॥ ९ ॥

यातयाम गतरस पूति पर्युषित च यत् ।
उच्छिष्टमपि चामेध्य भोजन तामसप्रियम् ॥ १० ॥

यातयाममिति । यातयाम मन्दपक्व निर्वीर्यस्य गतरसेनोक्तत्वाद्गतरस रसवि युक्त पूति दुर्गन्ध पर्युषित च पक्व सद्रात्र्यन्तरित च यदुच्छिष्टमपि च भुक्तावशिष्ट ममेध्यमयज्ञार्हं भोजनमीदृश तामसप्रियम् ॥ १० ॥

अथेदानीं यज्ञस्त्रिविध उच्यते—

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥

अफलाकाङ्क्षिभिरफलार्थिभिर्यज्ञो विधिदृष्टः शास्त्रचोदनादृष्टो यो यज्ञ इज्यते निर्वर्त्यते यष्टव्यमेवेति यज्ञस्वरूपनिर्वर्तनमेव कार्यमिति मनः समाधाय नानेन पुरुषार्थो मम कर्तव्य इत्येवं निश्चित्य स सात्त्विको यज्ञ उच्यते ॥ ११ ॥

अभिसंधाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥

अभिसंधायेति । अभिसंधायोद्दिश्य फलं दम्भार्थमपि चैव यदिज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥

विधिहीनमिति । विधिहीनं यथाचोदितविपरीतम् । असृष्टान्नं ब्राह्मणेभ्यो न सृष्टं न दत्तमन्नं यस्मिन्यज्ञे सोऽसृष्टान्नस्तमसृष्टान्नम् । मन्त्रहीनं मन्त्रतः स्वरतो वर्णतश्च वियुक्तं मन्त्रहीनम्, अदक्षिणमुक्तदक्षिणारहितं, श्रद्धाविरहितं यज्ञं तामसं परिचक्षते तमोनिर्वृत्तं कथयन्ति ॥ १३ ॥

अथेदानीं तपस्त्रिविधमुच्यते—

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥

देवाश्च द्विजाश्च गुरवश्च प्राज्ञाश्च देवद्विजगुरुप्राज्ञास्तेषां पूजनं देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवमृजुत्वं ब्रह्मचर्यमहिंसा च शरीरनिर्वर्त्यं शारीरं शरीरप्रधानैः सर्वैरेव कार्यकरणैः कर्त्रादिभिः साध्यं शारीरं तप उच्यते । पञ्चैते तस्य हेतव इति हि वक्ष्यति ( XVIII 15 ) ॥ १४ ॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥

अनुद्वेगेति । अनुद्वेगकरं प्राणिनामदुःखकरं वाक्यं सत्यं प्रियहितं च यत्प्रियहिते दृष्टादृष्टार्थे । अनुद्वेगकरत्वादिभिर्धर्मैर्वाक्यं विशिष्यते । विशेषणधर्मसमुच्चयार्थश्चशब्दः । परप्रत्ययनार्थं प्रयुक्तस्य वाक्यस्य सत्यप्रियहितानुद्वेगकरत्वानामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनता स्याद्यदि न तद्वाङ्मयं तपः । तथा सत्यवाक्यस्येतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनतायां न वाङ्मयतपस्त्वम् । तथा प्रियवाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनस्य न वाङ्मयतपस्त्वम् । तथा हितवाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा वियुक्तस्य न वाङ्मयतपस्त्वम् । किं पुनस्तत्तपो यत्सत्यं वाक्यमनुद्वेगकरं प्रियहितं च तत्परमं तपो वाङ्मयम् । यथा शान्तो भव वत्स स्वाध्यायं योगं चानुतिष्ठ तथा ते श्रेयो भविष्यति इति । स्वाध्यायाभ्यसनं चैव यथाविधि वाङ्मयं तप उच्यते ॥ १५ ॥

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥

मन इति । मनःप्रसादो मनसः प्रशान्तिः स्वच्छतापादनं मनसः प्रसादः । सौम्यत्वं यत्सौमनस्यमाहुर्मुखादिप्रसादकार्यान्तःकरणस्य* वृत्तिः, मौनं वाक्संयमोऽपि मनःसंयमपूर्वको भवतीति कार्येण कारणमुच्यते मनःसंयमो मौनमिति । आत्मविनिग्रहो मनोनिरोधः सर्वतः सामान्यरूप आत्मविनिग्रहो वाग्विषयस्येव मनसः संयमो मौनमिति विशेषः । भावसंशुद्धिः परैर्व्यवहारकालेऽमायावित्वं, भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥

यथोक्तं कायिकं वाचिकं मानसं च तपस्तप्तं नरैः सत्त्वादिभेदेन कथं त्रिविधं भवतीत्युच्यते—

श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥

श्रद्धयास्तिक्यबुद्ध्या परया प्रकृष्टया तप्तमनुष्ठितं तपस्तत्प्रकृतं त्रिविधं त्रिप्रकारं त्र्यधिष्ठानं नरैरनुष्ठातृभिरफलाकाङ्क्षिभिः फलाकाङ्क्षारहितैर्युक्तैः समाहितैर्यदीदृशं तपस्तत्सात्त्विकं सत्त्वनिर्वृत्तं परिचक्षते कथयन्ति शिष्टाः ॥ १७ ॥

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥

सत्कारेति । सत्कारमानपूजार्थं सत्कारः साधुकारः साधुरयं तपस्वी ब्राह्मण इत्येवमर्थं मानो माननं प्रत्युत्थानाभिवादनादिस्तदर्थं पूजा पादप्रक्षालनार्चनाशयित्वादिस्तदर्थं च तपः सत्कारमानपूजार्थं दम्भेन चैव यत्क्रियते तपस्तदिह प्रोक्तं कथितं राजसं चलं कादाचित्कफलत्वेनाध्रुवम् ॥ १८ ॥

मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥

मूढेति । मूढग्राहेणाविवेकनिश्चयेनात्मनः पीडया क्रियते यत्तपः परस्योत्सादनार्थं विनाशार्थं वा तत्तामसं तप उदाहृतम् ॥ १९ ॥

इदानीं दानभेद उच्यते—

* ASS reads मुखादिप्रसादकार्यान्तःकरणस्य ।

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

दातव्यमित्येव मनः कृत्वा यद्दानं दीयतेऽनुपकारिणे प्रत्युपकारासमर्थाय समर्थायापि निरपेक्षं दायिने देशे पुण्ये कुरुक्षेत्रादौ काले संक्रान्त्यादौ पात्रे च षडङ्गविद्वेदपारग इत्यादौ तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१ ॥

यत्त्विति । यत्तु दानं प्रत्युपकारार्थं काले त्वयं मां प्रत्युपकरिष्यतीत्येवमर्थं फलं वास्य दानस्य मे भविष्यत्यदृष्टमिति तदुद्दिश्य पुनर्दीयते च परिक्लिष्टं खेदसंयुक्तं तद्राजसं स्मृतम् ॥ २१ ॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥

अदेशेति । अदेशकालेऽपुण्ये देशे म्लेच्छाशुच्यादिसंकीर्णेऽकाले पुण्यहेतुत्वेनाप्रख्याते संक्रान्त्यादिविशेषरहितेऽपात्रेभ्यश्च मूर्खतस्करादिभ्यो देशादिसंपत्तौ चासत्कृतं प्रियवचनपादप्रक्षालनपूजादिरहितमवज्ञातं पात्रपरिभवयुक्तं यद्दानं तत्तामसमुदाहृतम् ॥ २२ ॥

यज्ञदानतपःप्रभृतीनां साद्गुण्यकरणायायमुपदेश उच्यते—

ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥

ॐ तत्सदित्येष निर्देशो निर्दिश्यतेऽनेनेति निर्देशस्त्रिविधो नामनिर्देशो ब्रह्मणः स्मृतश्चिन्तितो वेदान्तेषु ब्रह्मविद्भिः । ब्राह्मणास्तेन निर्देशेन त्रिविधेन वेदाश्च यज्ञाश्च विहिता निर्मिताः पुरा पूर्वमिति निर्देशस्तुत्यर्थमुच्यते ॥ २३ ॥

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥

तस्मादोमित्युदाहृत्योच्चार्य यज्ञदानतपःक्रिया यज्ञादिस्वरूपाः क्रियाः प्रवर्तन्ते विधानोक्ताः शास्त्रचोदिताः सततं सर्वदा ब्रह्मवादिनां ब्रह्मवदनशीलानाम् ॥ २४ ॥

तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥

तदितीति । तदित्यनभिसंधाय तदिति ब्रह्माभिधानमुच्चार्यानभिसंधाय च कर्मणः फलं यज्ञतपःक्रिया यज्ञक्रियाश्च तपःक्रियाश्च यज्ञतपःक्रिया दानक्रियाश्च विविधाः क्षेत्रहिरण्यप्रदानादिलक्षणाः क्रियन्ते निर्वर्त्यन्ते मोक्षकाङ्क्षिभिर्मोक्षार्थिभिर्मुमुक्षुभिः ॥ २५ ॥

ओंतच्छब्दयोर्विनियोग उक्तोऽधेदानीं सच्छब्दस्य विनियोगः कथ्यते—

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६ ॥

सद्भावेऽसतः सद्भावे तथाविद्यमानस्य पुत्रस्य जन्मनि तथा साधुभावेऽसद्वृत्तस्यासाधोः सद्वृत्तता साधुभावस्तस्मिन्साधुभावे च सदित्येतदभिधानं ब्रह्मणः प्रयुज्यते तेनोच्यतेऽभिधीयते । प्रशस्ते कर्मणि विवाहादौ च तथा सच्छब्दः पार्थ युज्यते प्रयुज्यत इत्येतत् ॥ २६ ॥

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥

यज्ञे यज्ञकर्मणि या स्थितिस्तपसि च या स्थितिर्दाने च या स्थितिः सा सदित्युच्यते विद्वद्भिः, कर्म चैव तदर्थीयं यज्ञदानतपोऽर्थीयमथवा यस्याभिधानत्रयं प्रकृतं तदर्थीयमीश्वरार्थीयमित्येतत् । सदित्येवाभिधीयते । तदेतद्यज्ञतपआदिकर्मासात्त्विकं त्रिगुणमपि श्रद्धापूर्वकं ब्रह्मणोऽभिधानत्रयप्रयोगेण सगुणं सात्त्विकं संपादितं भवति ॥ २७ ॥

तत्र च सर्वत्र श्रद्धाप्रधानतया सर्वं संपाद्यते यस्मात्तस्मात्—

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥ १७ ॥

अश्रद्धया हुतं हवनं कृतं दत्तं च ब्राह्मणेभ्योऽश्रद्धया, तपस्तप्तमनुष्ठितमश्रद्धया, तथाश्रद्धयैव कृतं यत्स्तुतिनमस्कारादि तत्सर्वमसदित्युच्यते मत्प्राप्तिसाधनमार्ग

बाह्यत्वात्पार्थ । न च तद्बहायासमपि प्रेत्य फलाय नो अपीहार्थं साधुभि-र्निन्दितत्वादिति ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकर-
भगवतः कृतौ श्रीभगवद्गीताभाष्ये श्रद्धात्रयविभागयोगो नाम
सप्तदशोऽध्यायः ॥ १७ ॥



अथ पञ्चमोऽध्यायः

# Coupon

THIS coupon entitles the holder to receive the remainining portion Adhyāya XI, etc. of my Bhagavadgītā with Śankara's Commentary free of any cost.

P. M. Modi.

Karmayoga. Arjuna, now, wishes to know which of the two is better.

II. An opponent holds that the Sannyāsa stated is that for a Jñānin while the Karmayoga is meant for an Ignorant man. He asks, " How does the question of a choice between the two arise at all? "

Śankara–Though the Sannyāsa mentioned is meant for an Atmavid, Arjuna believed that even an un–Atmavid may follow the Path of Sannyāsa, because the Lord has not intendend to exclude an Ignorant one from the Sana·

(b) अन्तरेण च कर्तारं तस्य कर्तव्यत्वासंभवात् अनात्मविदपि कर्ता पक्षे प्राप्तोऽनूद्यत एव,

(c) न पुनरात्मवित्कर्तृकत्वमेव संन्यासस्य विवक्षितमिति । एवं मन्वानस्यार्जुनस्य कर्मानुष्ठानकर्मसंन्यासयोरविद्वत्पुरुषकर्तृकत्वमप्यस्तीति पूर्वोक्तेन प्रकारेण तयोः परस्परविरोधादन्यतरस्य कर्तव्यत्वे प्राप्ते प्रशस्यतरं च कर्तव्यं नेतरदिति प्रशस्यतरविविदिषया प्रश्नो नानुपपन्नः ।

III प्रतिवचनवाक्यार्थनिरूपणेनापि प्रष्टुरभिप्राय एवमेवेति गम्यते ।

कथं, संन्यासकर्मयोगौ निःश्रेयसकरौ तयोस्तु कर्मयोगो विशिष्यत (V 2) इति प्रतिवचनमेतन्निरूप्य किमनेनात्मवित्कर्तृकयोः संन्यासकर्मयोगयोर्निःश्रेयसकरत्वं प्रयोजनमुक्त्वा तयोरेव कुतश्चिद्विशेषात्कर्मसंन्यासात्कर्मयोगस्य विशिष्टत्वमुच्यत आहोस्विदनात्मवित्कर्तृकयोः संन्यासकर्मयोगयोस्तदुभयमुच्यत इति । किंचातो यद्यात्मवित्कर्तृकयोः संन्यासकर्मयोगयोर्निःश्रेयसकरत्वं तयोस्तु कर्मसंन्यासात्कर्मयोगस्य विशिष्टत्वमुच्यते यदि वानात्मवित्कर्तृकयोः संन्यासकर्मयोगयोस्तदुभयमुच्यत इति ।

अत्रोच्यते ।

(a) आत्मवित्कर्तृकयोः संन्यासकर्मयोगयोरसंभवात्तयोर्निःश्रेयसकरत्ववचनं तदीयाच्च कर्मसंन्यासात्कर्मयोगस्य विशिष्टत्वाभिधानमित्येतदुभयमनुपपन्नम् । यद्यनात्मविदः* कर्मसंन्यासस्तत्प्रतिकूलश्च कर्मानुष्ठानलक्षणः कर्मयोगः संभवेतां तदा तयोर्निःश्रेयसकरत्वोक्तिः कर्मयोगस्य च कर्मसंन्यासाद्विशिष्टत्वाभिधानमित्येतदुभयमुपपद्यते, आत्मविदस्तु संन्यासकर्मयोगयोरसंभवात्तयोर्निःश्रेयसकरत्वाभिधानं कर्मसंन्यासाच्च कर्मयोगो विशिष्यत इति चानुपपन्नम् ।

---

yāsa So, he asks a question of choice between Sannyāsa of an Ignorant man and Karmayoga also of the same man

III. Form the answer of the Lord also we can infer that Arjuna's question is for a choice between Sannyāsa of the un-Atmavid and Karmayoga (which is always followed by the un-Atmavid)

The Lord's reply is two-fold (1) both the Paths lead to final Beatitude and (2) that the Karmayoga is better than the Sannyāsa.

Here Sankara says that—

(a) Both Sannyāsa and Karmayoga are *impossible for* the Atmavid. Therefore the above twofold reply of the Lord refers to both the Paths as adopted by un-Atmavid only

---

* POA reads आत्मविद which does not suit the context at all

(b1) अत्राह किमात्मविदः संन्यासकर्मयोगयोरुभयोरप्यसंभव आहोस्विदन्यतरस्या-
संभवो यदा चान्यतरस्यासंभवस्तदा किं कर्मसंन्यासस्योत कर्मयोगस्येत्यसंभवे कारणं
च वक्तव्यमिति ।

अत्रोच्यते, आत्मविदो निवृत्तमिथ्याज्ञानत्वाद्विपर्ययज्ञानमूलस्य **कर्मयोगस्या-**
संभव स्याज्जन्मादिसर्वविक्रियारहितत्वेन निष्क्रियमात्मानमात्मत्वेन यो वेत्ति तस्या-
त्मविदः सम्यग्दर्शनेनापास्तमिथ्याज्ञानस्य **निष्क्रियात्मस्वरूपावस्थानलक्षणं सर्व-**
**कर्मसंन्यासमुक्त्वा** तद्विपरीतस्य मिथ्याज्ञानमूलकर्तृत्वाभिमानपुरःसरस्य सक्रियात्मस्व-
रूपावस्थानरूपस्य **कर्मयोगस्येह** गीताशास्त्रे तत्र तत्रात्मस्वरूपनिरूपणप्रदेशेषु सम्यग्ज्ञान-
मिथ्याज्ञानतत्कार्यविरोधादभाव प्रतिपाद्यते यस्मात्तस्मादात्मविदो **निवृत्तमिथ्याज्ञा-**
**नस्य विपर्ययज्ञानमूलः कर्मयोगो न संभवतीति युक्तमुक्तं स्यात्** । केषु केषु
पुनरात्मस्वरूपनिरूपणप्रदेशेष्वात्मविदः कर्माभावः प्रतिपाद्यत इति । अत्रोच्यते, अवि
नाशी तु तद्विद्धीति ( II. 17 ) प्रकृत्य 'य एनं वेत्ति हन्तारम्' ( II. 19 )
'वेदाविनाशिनं नित्यम्' ( II 21 ) इत्यादौ तत्र तत्रात्मविदः कर्माभाव उच्यते।

(b2) ननु च कर्मयोगोऽप्यात्मस्वरूपनिरूपणप्रदेशेषु तत्र तत्र प्रतिपाद्यत एव
तद्यथा ' तस्माद्युध्यस्व भारत ' ( II. 18 ) ' स्वधर्ममपि चावेक्ष्य ' ( II. 31 )
' कर्मण्येवाधिकारस्ते ' ( II. 47 ) इत्यादावतश्च **कथमात्मविदः कर्मयोगस्या-**
**संभवः स्यादिति** । अत्रोच्यते ( i ) सम्यग्ज्ञानमिथ्याज्ञानतत्कार्यविरोधात् (ii)
' ज्ञानयोगेन साङ्ख्यानाम्' (III 3) इत्यनेन साङ्ख्यानामात्मतत्त्वविदामनात्मवित्कर्तृक-
कर्मयोगनिष्ठातो निष्क्रियात्मस्वरूपावस्थानलक्षणाया ज्ञानयोगनिष्ठाया पृथक्करणात् (iii)

---

( b1 ) Sannyāsa of all duties is prescribed in Bha. Gī. II–IV for an Atmavid Karmayoga is founded upon the Ignorance that Atman is a Kartr and is therefore impossible for an Atmavid

( b2 ) Karmayoga though mentioned in the verses which deal with the knowledge of Atman, just as the Sannyāsa, is meant for un-Atmavid and not for the Atmavid for the following reasons—

( i ) Karmayoga is the result of false knowledge, Sannyāsa or the Jñānayoga is the result of right knowledge The two are mutually inconsistent ( ii ) The Gītā says that Jñānayoga is meant for the Sāmkhyas and the Sāmkhyas are Atmavids And Bha Gī III. 3B separates the Jñānayoga from the Karmayoga So the latter is meant for un-Atmavid. ( iii ) Atmavid having achieved all his

कृतकृत्यत्वेनात्मविद प्रयोजनान्तराभावात् 'तस्य कार्यं न विद्यते' (III. 17) इति कर्तव्यान्तराभाववचनाच्च । (iv) 'न कर्मणामनारम्भात्' (III. 4) 'सन्यासस्तु महाबाहो दुःखमाप्तुमयोगत' (V 6) इत्यादिना चात्मज्ञानाङ्गत्वेन कर्मयोगस्य विधानात्, (v) योगारूढस्य तस्यैव शम कारणमुच्यते' (VI. 3) इत्यनेन चोत्पन्नसम्यग्दर्शनस्य कर्मयोगाभाववचनात् । (vi–vii) 'शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम्' (IV 21) इति च शरीरस्थितिकारणातिरिक्तस्य कर्मणो निवारणात् 'नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्' (V 8) इत्यनेन च शरीरस्थितिमात्रप्रयुक्तेष्वपि दर्शनश्रवणादि कर्मस्वात्मयाथात्म्यविद नाहं करोमीति प्रत्ययस्य समाहितचेतस्तया सदाकर्तव्यत्वोपदेशादात्मतत्त्वविद सम्यग्दर्शनविरुद्धो मिथ्याज्ञानहेतुक कर्मयोग स्वप्नेऽपि न संभावयितुं शक्यते यस्मात्तस्मादनात्मवित्कर्तृकयोरेव सन्यासकर्मयोगयोर्नि श्रेयसकरत्ववचन,

(c) तदीयाच्च कर्मसन्यासात्पूर्वोक्तात्मवित्कर्तृकसर्वकर्मसन्यासविलक्षणात्सत्येव कर्तृत्वविज्ञाने कर्मैकदेशविषयत्वाद्यमनियमादिसहितत्वेन च दुरनुष्ठेयत्वात्सुकरत्वेन च कर्मयोगस्य विशिष्टत्वाभिधानमित्येव प्रतिवचनवाक्यार्थनिरूपणेनापि पूर्वोक्त प्रष्टुरभिप्रायो निश्चीयत इति स्थितम् ।

---

aims has nothing to achieve and so need not follow Karma yoga (iv) In the Gita (III 4, V 6) Karmayoga is laid down as a help to Jñāna and the Gītā also says that there is no Karmayoga for one who has attained the right knowledge (v–vi) The Gītā asks a Jñānin to give up all actions not meant for the sustenance of his body only and not to believe that even those actions are done by him

Therefore Karmayoga can never be possible for an Atmavid

(c) When we have shown that the Sannyāsa and the Karmayoga in Adh V are both meant for the *Atmavid*, it is easy to see that the Karmayoga of the Ignorant is easier (and in that sense better) than the Sannyāsa of the same The Sannyāsa of the Ignorannt is in fact karman itself and is therefore a part of Karman Moreover that sannyāsa is difficult to follow because that sannyāsa must be accompanied by the practice of *yama*, *niyama*, etc

Thus, even according to the reply of the Lord the

IV. 'ज्यायसी चेत्कर्मणस्ते' इत्यत्र ज्ञानकर्मणोः सहासम्भवे यच्छ्रेय एतयोस्तन्मे ब्रूहीत्येवं पृष्टोऽर्जुनेन भगवान्सांख्यानां संन्यासिनां ज्ञानयोगेन निष्ठा पुनः कर्मयोगेन योगिनां निष्ठा प्रोक्तेति निर्णयं चकार । न च संन्यसनादेव केवलात्सिद्धिं समधिगच्छतीति (III 4) वचनाज्ज्ञानसहितस्य तस्य सिद्धिसाधनत्वमिष्टं; कर्मयोगस्य च विधानात् (IV 42) ज्ञानरहितस्य संन्यासः श्रेयान्कि वा कर्मयोगः श्रेयानित्येतयोर्विशेषबुभुत्सया—

## अर्जुन उवाच—

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥

संन्यासं परित्यागं कर्मणां शास्त्रीयाणामनुष्ठेयविशेषाणां शंससि कथयसीत्येतत् । पुनर्योगं च तेषामेवानुष्ठानमवश्यकर्तव्यत्वं शंससि अतो मे कतरच्छ्रेय इति संशयः किं कर्मानुष्ठानं श्रेयः किंवा तद्धानमिति, प्रशस्यतरं चानुष्ठेयमतश्च यच्छ्रेयः प्रशस्यतरमेतयोः कर्मसंन्यासकर्मयोगयोर्यदनुष्ठानाच्छ्रेयोवाप्तिर्मम स्यादिति मन्यसे तदेकमन्यतरत् सहैकपुरुषानुष्ठेयत्वासम्भवान्मे ब्रूहि सुनिश्चितमभिप्रेतं तवेति ॥ १ ॥

स्वाभिप्रायमाचक्षाणो निर्णयाय—

## श्रीभगवानुवाच—

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २ ॥

संन्यासः कर्मणां परित्यागः कर्मयोगश्च तेषामनुष्ठानं तावुभावपि निःश्रेयसकरौ निःश्रेयसं मोक्षं कुर्वाते ज्ञानोत्पत्तिहेतुत्वेनोभौ यद्यपि निःश्रेयसकरौ तथापि तयोस्तु निःश्रेयसहेत्वोः कर्मसंन्यासात्केवलात्कर्मयोगो विशिष्यत इति कर्मयोगं स्तौति ॥ २ ॥

कस्मादित्याह—

ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥ ३ ॥

---

Sannyāsa and Karmayoga of Adh V are both of them such as are followed by the Ignorant

IV. Introduction to verse I of Adh. V Sankara connects Adh. V with beginning of Adh III. In the latter Sannyāsa adopted by the Ignorant ( केवल सन्यास ) and Karmayoga were mentioned So, now Arjuna wants to know which of these two is better ( *in the sense of easier* )

ज्ञेय इति। ज्ञेयो ज्ञातव्य स कर्मयोगी नित्यसन्यासीति यो न द्वेष्टि किंचिन्न काङ्क्षति दु खसुखे तत्साधने चैवंविधो य कर्मणि वर्तमानोऽपि स नित्यसन्यासीति ज्ञातव्य इत्यर्थ। निर्द्वंद्वो द्वंद्ववर्जितो हि यस्मान्महाबाहो सुख बन्धादनायासेन प्रमुच्यते ॥ ३ ॥

सन्यासकर्मयोगयोर्भिन्नपुरुषानुष्ठेययोर्विरुद्धयो फलेऽपि विरोधो युक्तो न तूभयोर्नि श्रेयसकरत्वमेवेति प्राप्त इदमुच्यते—

साख्ययोगौ पृथग्बाला प्रवदन्ति न पण्डिता ।

एकमप्यास्थित सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥

साख्ययोगाविति । साख्ययोगौ पृथग्विरुद्धभिन्नफलौ बाला प्रवदन्ति न पण्डिता। पण्डितास्तु ज्ञानिन एक फलमविरुद्धमिच्छन्ति कथम्, एकमपि साख्ययोगयो सम्यगास्थित सम्यगनुष्ठितवानित्यर्थ । उभयोर्विन्दते फलमुभयोस्तदेव नि श्रेयस फलमतो न फले विरोधोऽस्ति। ननु सन्यासकर्मयोगशब्देन प्रस्तुत्य साख्ययोगयो फलैकत्व कथमिहाप्रकृत ब्रवीति । नैष दोषो यद्यप्यर्जुनेन सन्यास कर्मयोग च केवलमभिप्रेत्य प्रश्न कृतो भगवांस्तु तदपरित्यागेनैव स्वाभिप्रेत च विशेष सयोज्य शब्दान्तरवाच्यतया प्रतिवचन ददौ साख्ययोगाविति। तावेव सन्यास कर्मयोगौ ज्ञानतदुपायसमबुद्धित्वादिसयुक्तौ साख्ययोगशब्दवाच्याविति भगवतो मतमतो नाप्रकृतप्रक्रियेति ॥ ४ ॥

एकस्यापि सम्यगनुष्ठानात्कथमुभयो फल विन्दत इत्युच्यते—

यत्साख्यै प्राप्यते स्थान तद्योगैरपि गम्यते ।
एक साख्य च योग च य पश्यति स पश्यति ॥ ५ ॥

यदिति । यत्साख्यैर्ज्ञाननिष्ठै सन्यासिभि प्राप्यते स्थान मोक्षाख्य तद्योगैरपि ज्ञानप्राप्त्युपायत्वेनेश्वरे समर्प्य कर्माण्यात्मन फलमनभिसधायानुतिष्ठन्ति ये ते योगा योगिनस्तैरपि परमार्थज्ञानसन्यासप्राप्तिद्वारेण गम्यत इत्यभिप्रायोऽत एक साख्य च योग च य पश्यति फलैकत्वात्स पश्यति सम्यक्पश्यतीत्यर्थ ॥५॥

एव तर्हि योगात्सन्यास एव विशिष्यते । कथ तर्हीदमुक्त तयोस्तु कर्मसन्यासात्कर्मयोगो विशिष्यत इति । शृणु तत्र कारणम् । त्वया पृष्ट केवल कर्मसन्यास कर्मयोग चाभिप्रेत्य तयोरन्यतर क श्रेयान् । तदनुरूप प्रतिवचन मयोक्त कर्मसन्यासात्कर्मयोगो विशिष्यत इति ज्ञानमनपेक्ष्य । ज्ञानापेक्षस्तु सन्यास साख्यमिति मयाऽभिप्रेत । परमार्थयोगश्च स एव । यस्तु कर्मयोगो वैदिक स तादर्थ्याद्योग सन्यास इति चोपचर्यते । कथ तादर्थ्यमित्युच्यते—

सन्यासस्तु महाबाहो दु खमाप्तुमयोगत ।
योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ॥ ६ ॥

सन्यासस्तु पारमार्थिको हे महाबाहो दु खमाप्तु प्राप्तुमयोगतो योगेन विना। योगयुक्तो वैदिकेन कर्मयोगेनेश्वरसमर्पितरूपेण फलनिरपेक्षेण युक्तो मुनिर्मननादीश्वरस्वरूपस्य मुनिर्ब्रह्म परमात्मज्ञाननिष्ठालक्षणत्वात्प्रकृत सन्यासो ब्रह्मोच्यते " न्यास इति ब्रह्मा ब्रह्मा हि पर. " इति श्रुते (Mahana Upa 21 2)। ब्रह्म परमार्थ सन्यास परमात्मज्ञाननिष्ठालक्षण नचिरेण क्षिप्रमेवाधिगच्छति। प्राप्नोत्यतो मयोक्त कर्मयोगो विशिष्यत इति ॥ ६ ॥

यदा पुनरय सम्यग्दर्शनप्राप्त्युपायत्वेन—

**योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।**
**सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥**

योगेन युक्तो योगयुक्तो विशुद्धात्मा विशुद्धसत्त्वो विजितात्मा विजितदेहो जितेन्द्रियश्च सर्वभूतात्मभूतात्मा सर्वेषा ब्रह्मादीना स्तम्बपर्यन्ताना भूतानामात्मभूत आत्मा प्रत्यक्चेतनो यस्य स सर्वभूतात्मभूतात्मा सम्यग्दर्शीत्यर्थ । स तत्रैवं वर्तमानो **लोकसग्रहाय कर्म कुर्वन्नपि** न लिप्यते न कर्मभिर्बध्यत इत्यर्थ ॥ ७ ॥

न चासौ परमार्थत करोतीत्यत—

**नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।**

नैव किंचित्करोमीति युक्त समाहित सन्मन्येत चिन्तयेत्तत्त्वविदात्मनो याथात्म्य तत्त्व वेत्तीति तत्त्ववित्परमार्थदर्शीत्यर्थ ।

कदा कथ वा तत्त्वमवधारयन्मन्येतेत्युच्यते—

**पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ।**
**प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।**
**इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ८-९ ॥**

मन्येतेति पूर्वेण सबन्ध । यस्यैव तत्त्वविद सर्वकार्यकरणचेष्टासु सर्वकर्मस्वकर्मैव पश्यत सम्यग्दर्शिनस्तस्य **सर्वकर्मसन्यास एवाधिकार कर्मणोऽभावदर्शनात् । नहि मृगतृष्णिकायामुदकबुद्ध्या पानाय प्रवृत्त उदकाभावज्ञानेऽपि तत्रैव पानप्रयोजनाय प्रवर्तते ॥ ९ ॥**

यस्तु पुनरतत्त्वविन्प्रवृत्तश्च कर्मयोगे—

**ब्रह्मण्याधाय कर्माणि सङ्ग त्यक्त्वा करोति य ।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥**

ब्रह्मणीश्वर आधाय निक्षिप्य तदर्थ करोमीति भृत्य इव स्वाम्यर्थं सर्वाणि कर्माणि मोक्षेऽपि फले सङ्ग त्यक्त्वा करोति य सर्वकर्माणि, लिप्यते न स पापेन न सबध्यते पद्मपत्रमिवाम्भसोदकेन ॥ १० ॥

केवल सत्त्वशुद्धिमात्रमेव फल तस्य कर्मणः स्यात्, यस्मात्—

**कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥ ११ ॥**

कायेन देहेन मनसा बुद्ध्या च **केवलैर्ममत्ववर्जितैरीश्वरायैव** कर्म करोमि न मम फलायेति ममत्वबुद्धिशून्यैरिन्द्रियैरपि केवलशब्दः कायादिभिरपि **प्रत्येकं सम्बध्यते** सर्वव्यापारेषु ममतावर्जनाय, योगिनः कर्मिणः कर्म कुर्वन्ति सङ्गं त्यक्त्वा फलविषयम् **आत्मशुद्धये सत्त्वशुद्धये इत्यर्थः** । तस्मात्तत्रैव तवाधिकार इति कुरु कर्मैव ॥ ११ ॥

यस्माच्च—

**युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।**
**अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥**

युक्त इति युक्त ईश्वराय कर्माणि करोमि न मम फलायेत्येवं समाहितः सन्कर्मफलं त्यक्त्वा परित्यज्य शान्तिं मोक्षाख्यामाप्नोति नैष्ठिकीं निष्ठायां भवां **सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसन्यासज्ञाननिष्ठाक्रमेणेति** वाक्यशेषः । यस्तु पुनरयुक्तोऽसमाहितः कामकारेण करणं कारः कामस्य कारः कामकारस्तेन कामकारेण कामप्रेरिततयेत्यर्थः । मम फलायेदं करोमि कर्मेत्येवं फले सक्तो निबध्यतेऽतस्त्वं युक्तो भवेत्यर्थः ॥ १२ ॥

यस्तु **परमार्थदर्शी सः—**

**सर्वकर्माणि मनसा सन्यस्यास्ते सुखं वशी ।**
**नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥**

सर्वाणीति । सर्वाणि कर्माणि सर्वकर्माणि सन्न्यस्य परित्यज्य **नित्यं नैमित्तिकं काम्यं प्रतिषिद्धं** च तानि सर्वकर्माणि मनसा विवेकबुद्ध्या कर्मादावकर्मसन्दर्शनेन सन्त्यज्येत्यर्थः । आस्ते तिष्ठति सुखं त्यक्तवाङ्मनःकायचेष्टो निरायासः प्रसन्नचित्त आत्मनोऽन्यत्र निवृत्तसर्वबाह्यप्रयोजन इति सुखमास्त इत्युच्यते । वशी जितेन्द्रिय इत्यर्थः । क्व कथमास्त इत्याह—नवद्वारे पुरे सप्त शीर्षण्यान्यात्मन उपलब्धिद्वाराण्यर्वाग्द्वे मूत्रपुरीषविसर्गार्थे तैर्द्वारैर्नवद्वारं पुरमुच्यते शरीरं पुरमिव पुरमात्मैकस्वामिकं तदर्थप्रयोजनैश्चेन्द्रियमनोबुद्धिविषयैरनेकफलविज्ञानस्योत्पादकैः पौरैरिवाधिष्ठितं तस्मिन्नवद्वारे पुरे देही सर्वं कर्म सन्न्यस्यास्ते । किं विशेषणेन सर्वो हि देही सन्न्यास्यसन्न्यासी वा देहे एवास्ते तत्रानर्थकं विशेषणमिति । उच्यते, यस्त्वज्ञो देही देहेन्द्रियसंघातमात्मदर्शी स सर्वो गेहे भूमावासने वास इति मन्यते । न हि देहमात्रात्मदर्शिनो गेह इव देह आस इति प्रत्ययः सम्भवति । देहादिसंघातव्यतिरिक्तात्मदर्शिनस्तु देह आस इति प्रत्यय उपपद्यते । परकर्मणां च परस्मिन्नात्मन्यविद्ययाध्यारोपितानां

विद्यया विवेकज्ञानेन मनसा सन्यास उपपद्यते । उत्पन्नविवेकविज्ञानस्य* सर्वकर्मसन्यासिनोऽपि गेह इव देह एव नवद्वारे पुर आसन प्रारब्धफलकर्मसंस्कारशेषानुवृत्त्या देह एव विशेषविज्ञानोत्पत्तेर्देह एवास्त इत्यस्त्येव विशेषणफल विद्वदविद्वत्प्रत्ययभेदापेक्षत्वात् । यद्यपि कार्यकरणकर्माण्यविद्ययात्मन्यध्यारोपितानि सन्यस्यास्त इत्युक्त तथापि कृतसन्यासस्यात्मसमवायि× तु कर्तृत्वं कारयितृत्वं च स्यादित्याशङ्क्याह नैव कुर्वन्स्वयं न च कार्यकरणानि कारयन्क्रियासु प्रवर्तयन् । किं यत्तत्कर्तृत्व कारयितृत्व च देहिन स्वात्मसमवायि सत्सन्यासान्न सभवति यथा गच्छतो गतिर्गमनव्यापारपरित्यागे न स्यात्तद्वत्, किं वा स्वत एवात्मनो नास्तीति । अत्रोच्यते नास्त्यात्मन स्वत कर्तृत्व कारयितृत्व च । उक्तं हि–'अविकार्योऽयमुच्यते ' (II 25) ' शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ( XIII 31) ' इति । " ध्यायतीव लेलायतीव " ( Br Upa IV 3 7) इति च श्रुते ॥ १३ ॥

न कर्तृत्व न कर्माणि लोकस्य सृजति प्रभु ।
न कर्मफलसंयोग स्वभावस्तु प्रवर्तते ॥ १४ ॥

न कर्तृत्वमिति । न कर्तृत्व स्वत कुर्विति नापि कर्माणि रथघटप्रासादादानीप्सिततमानि लोकस्य सृजत्युत्पादयति प्रभुरात्मा नापि रथादि कृतवतस्तत्फलेन सयोग न कर्मफलसयोगम् । यदि किंचिदपि स्वतो न करोति न कारयति च देही कस्तर्हि कुर्वन्कारयश्च प्रवर्तत इत्युच्यते स्वभावस्तु स्वो भाव स्वभावोऽविद्यालक्षणा प्रकृतिर्माया प्रवर्तते दैवी हीत्यादिना ( VII 14 ) वक्ष्यमाणा ॥ १४ ॥

परमार्थतस्तु—

नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृत ज्ञान तेन मुह्यन्ति जन्तवः ॥ १५ ॥

नादत्ते न च गृह्णाति भक्तस्यापि कस्यचित्पाप न चैवादत्ते सुकृत भक्तै प्रयुक्तं विभु । किमर्थं तर्हि भक्तै पूजादिलक्षण यागदानहोमादिक च सुकृत प्रयुज्यत इत्याह-अज्ञानेनावृत ज्ञान विवेकविज्ञान तेन मुह्यन्ति करोमि कारयामि भोक्ष्ये भोजयामीत्येव मोह गच्छन्त्यविवेकिन ससारिणो जन्तव ॥ १५ ॥

ज्ञानेन तु तदज्ञानं येषा नाशितमात्मनः ।
तेषामादित्यवज्ज्ञान प्रकाशयति तत्परम् ॥ १६ ॥

ज्ञानेनेति । ज्ञानेन तु येनाज्ञानेनावृता मुह्यन्ति जन्तवस्तदज्ञान येषा जन्तूनां विवेकज्ञानेनात्मविषयेण नाशितमात्मनो भवति तेषामादित्यवद्यथादित्य समस्त रूपजातमवभासयति तद्वज्ज्ञान ज्ञेय वस्तु सर्वं प्रकाशयति तत्पर परमार्थतत्त्वम् ॥ १६ ॥

---

* ASS reads अविवेकज्ञानस्य for विवेकविज्ञानस्य

× ASS and VVP drop " कृतसन्यासस्य ".

यत्पर ज्ञान प्रकाशितम्—

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥

तस्मिन्नाता बुद्धिर्येषा ते तद्बुद्धयस्तदात्मानस्तदेव पर ब्रह्मात्मा येषां ते तदात्मानस्तन्निष्ठा निष्ठाभिनिवेशस्तात्पर्यं सर्वाणि कर्माणि संन्यस्य तस्मिन् ब्रह्मण्येवावस्थानं येषा ते तन्निष्ठास्तत्परायणाश्च तदेव परमयन परा गतिर्येषा भवति ते तत्परायणाः केवलात्मरतय इत्यर्थ । येषा ज्ञानेन नाशितमात्मनोऽज्ञान ते गच्छन्त्येवंविधा अपुनरावृत्तिमपुनर्देहसवन्ध ज्ञाननिर्धूनकल्मषा यथोक्तेन ज्ञानेन निर्धूतो नाशित कल्मष पापादिससारकारणदोषो येषा ते ज्ञाननिर्धूतकल्मषा यतय इत्यर्थः ॥ १७ ॥

येषा ज्ञानेन नाशितमात्मनोऽज्ञान ते पण्डिता कथ तत्त्व पश्यन्तीत्युच्यते—

विद्याविनयसपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥

विद्याविनयसपन्ने विद्या च विनयश्च विद्याविनयौ विनय उपशमस्ताभ्या विद्या विनयाभ्या सपन्नो विद्याविनयसंपन्नो विद्वान्विनीतश्च यो ब्राह्मणस्तस्मिन्ब्राह्मणे गवि हस्तिनि शुनि चैव श्वपाके च पण्डिता समदर्शिनो विद्याविनयसंपन्न उत्तमसंस्कारवति ब्राह्मणे सात्त्विके मध्यमायां च राजस्यां गवि संस्काररहितायामधमे च केवलतामसे हस्त्यादौ च सत्त्वादिगुणैस्तज्जैश्च संस्कारैस्तथा राजसैस्तथा तामसैश्च संस्कारैरत्यन्तमेवास्पृष्टं सममेकमविक्रियं तद्ब्रह्म द्रष्टुं शील येषा ते पण्डिता समदर्शिन ॥१८॥

नन्वभोज्यान्नास्ते दोषवन्त 'समासमाभ्यां विषमसमे पूजात' (Gau Dha. Sū II. 8 20, P. 143 of ASS) इति स्मृतेर्न ते दोषवन्त । कथम्—

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १९ ॥

इहैव जीवद्भिरेव तैः समदर्शिभि पण्डितैर्जितो वशीकृतः सर्गो जन्म येषा साम्ये सर्वभूतेषु ब्रह्मणि समभावे स्थितं निश्चलीभूतं मनोऽन्तःकरण निर्दोषम् । यद्यपि दोषवत्सु श्वपाकादिषु मूढैस्तद्दोषैर्दोषवदिव विभाव्यते तथापि तद्दोषैरस्पृष्टमिति निर्दोष दोषवर्जित हि यस्मान्नापि स्वगुणभेदभिन्न निर्गुणत्वाच्चैतन्यस्य, वक्ष्यति च भगवानिच्छादीनां क्षेत्रधर्मत्वमनादित्वान्निर्गुणत्वादिति च (XIII. 6, 31)। नाप्यन्त्या विशेषा आत्मनो भेदका सन्ति प्रतिशरीरं तेषां सत्त्वे प्रमाणानुपपत्तेरत सम ब्रह्मैक च तस्माद् ब्रह्मण्येव ते स्थितास्तस्मान्न दोषगन्धमात्रमपि तान्स्पृशति देहादिसंघातात्मदर्शनाभिमानाभावात् । देहादिसंघातात्मदर्शनाभिमानवद्विषय तु तत्सूत्र "समासमाभ्यां विषमसमे पूजातः" इति पूजाविषयत्वविशेषणात् । दृश्यते हि ब्रह्मवित्षडङ्गविच्चतुर्वेदविदिति पूजादानादौ गुणविशेषसवन्ध कारण, ब्रह्म तु सर्वगुणदोषसंबन्धवर्जितमित्यतो ब्रह्मणि ते स्थिता इति युक्तम् । कर्मविषय च समासमाभ्यामित्यादीद तु सर्वकर्म-

संन्यासिविषयं प्रस्तुतं सर्वकर्माणि मनसेत्यारभ्याध्यायपरिसमाप्तेः ॥ १९ ॥

यस्मान्निर्दोषं सम ब्रह्मात्मा तस्मात्—

**न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।**
**स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २० ॥**

न प्रहृष्येत् प्रहर्षं कुर्यात्प्रियमिष्टं प्राप्य लब्ध्वा नोद्विजेत्प्राप्यैव चाप्रियमनिष्टं लब्ध्वा देहमात्रात्मदर्शिनां हि प्रियाप्रियप्राप्ती हर्षविषादस्थाने न केवलात्मदर्शिनस्तस्य प्रियाप्रियप्राप्त्यसंभवात् । किं च सर्वभूतेष्वेकः समो निर्दोष आत्मेति स्थिरा निर्विचिकित्सा बुद्धिर्यस्य स स्थिरबुद्धिरसंमूढः संमोहवर्जितश्च स्याद्यथोक्तब्रह्मविद्ब्रह्मणि स्थितोऽकर्मकृत्सर्वकर्मसंन्यासीत्यर्थः ॥ २० ॥

किं च ब्रह्मणि स्थितः—

**बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।**
**स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥ २१ ॥**

बाह्यस्पर्शेषु बाह्याश्च ते स्पर्शाश्च बाह्यस्पर्शाः स्पृश्यन्त इति स्पर्शाः शब्दादयो विषयास्तेषु बाह्यस्पर्शेष्वसक्त आत्मान्तःकरणं यस्य सोऽयमसक्तात्मा विषयेषु प्रीतिवर्जितः सन्विन्दति लभत आत्मनि यत्सुखं तद्विन्दतीत्येतत् । स ब्रह्मयोगयुक्तात्मा ब्रह्मणि योगः समाधिर्ब्रह्मयोगस्तेन ब्रह्मयोगेन युक्तः समाहितस्तस्मिन्व्यापृत आत्मान्तःकरणं यस्य स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते व्याप्नोति । तस्माद्बाह्यविषयप्रीतेः क्षणिकाया इन्द्रियाणि निवर्तयेदात्मन्यक्षयसुखार्थीत्यर्थः ॥ २१ ॥

इतश्च निवर्तयेत्—

**ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।**
**आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥**

ये हि यस्मात्संस्पर्शजा विषयेन्द्रियसंस्पर्शेभ्यो जाता भोगा भुक्तयो दुःखयोनय एव तेऽविद्याकृतत्वात् । दृश्यन्ते ह्याध्यात्मिकादीनि दुःखानि तन्निमित्तान्येव । यथेह लोके तथा परलोकेऽपीति गम्यत एवशब्दात् । न संसारे सुखस्य गन्धमात्रमप्यस्तीति बुद्ध्वा विषयमृगतृष्णिकाया इन्द्रियाणि निवर्तयेत् । न केवलं दुःखयोनय आद्यन्तवन्तश्चादिर्विषयेन्द्रियसंयोगो भोगानामन्तश्च तद्वियोग एवात आद्यन्तवन्तोऽनित्या मध्यक्षणभावित्वादित्यर्थः । कौन्तेय न तेषु भोगेषु रमते बुधो विवेकी अवगतपरमार्थतत्त्वोऽत्यन्तमूढानामेव हि विषयेषु रतिर्दृश्यते यथा पशुप्रभृतीनाम् ॥ २२ ॥

अयं च श्रेयोमार्गप्रतिपक्षी कष्टतमो दोषः सर्वानर्थप्राप्तिहेतुर्दुर्निवारश्चेति तत्परिहारे यत्नाधिक्यं कर्तव्यमित्याह भगवान्—

शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २३ ॥

शक्नोत्युत्सहते इहैव जीवन्नेव यः सोढुं प्रसहितुं प्राक्पूर्वं शरीरविमोक्षणादामरणात्। मरणसीमाकरणं जीवतोऽवश्यंभावी हि कामक्रोधोद्भवो वेगोऽनन्तनिमित्तवान्हि स इति। यावन्मरणं तावन्न विश्रम्भणीय इत्यर्थः । कामः इन्द्रियगोचरप्राप्ते इष्टे विषये श्रूयमाणे स्मर्यमाणे वानुभूते सुखहेतौ या गर्धिस्तृष्णा स कामः, क्रोधश्चात्मनः प्रतिकूलेषु दुःखहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा यो द्वेषः स क्रोधस्तौ कामक्रोधावुद्भवो यस्य वेगस्य स कामक्रोधोद्भवो वेगः रोमाञ्चनहृष्टनेत्रवदनादिलिङ्गोऽन्तःकरणप्रक्षोभरूपः कामोद्भवो वेगो गात्रप्रकम्पप्रस्वेदसंदष्टौष्ठपुटरक्तनेत्रादिलिङ्गः क्रोधोद्भवो वेगस्तं कामक्रोधोद्भवं वेगं यः उत्सहते प्रसहते सोढुं प्रसहितुं स युक्तो योगी सुखी चेह लोके नरः ॥ २३ ॥

कथंभूतश्च ब्रह्मणि स्थितो ब्रह्म प्राप्नोतीत्याह—

योऽन्तःसुखोऽन्तरारामस्तथाऽन्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४ ॥

योऽन्तःसुखोऽन्तरात्मनि सुखं यस्य सोऽन्तःसुखस्तथाऽन्तरेवात्मन्यारामः आक्रीडा यस्य सोऽन्तरारामस्तथैवान्तरात्मैव ज्योतिः प्रकाशो यस्य सोऽन्तर्ज्योतिरेव । यः ईदृशः स योगी ब्रह्मनिर्वाणं ब्रह्मणि निर्वृतिं मोक्षमिह जीवन्नेव ब्रह्मभूतः सन्नधिगच्छति प्राप्नोति ॥ २४ ॥

किं च—

लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २५ ॥

लभन्ते ब्रह्मनिर्वाणं मोक्षमृषयः सम्यग्दर्शिनः संन्यासिनः क्षीणकल्मषाः क्षीणपापादिदोषाश्छिन्नद्वैधाश्छिन्नसंशया यतात्मानः संयतेन्द्रियाः सर्वभूतहिते रताः सर्वेषां भूतानां हितमानुकूल्ये रता अहिंसका इत्यर्थः ॥ २५ ॥

किं च—

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २६ ॥

कामक्रोधवियुक्तानां कामश्च क्रोधश्च कामक्रोधौ ताभ्यां वियुक्तानां यतीनां संन्यासिनां यतचेतसां संयतान्तःकरणानामभितः उभयतो जीवतां मृतानां च ब्रह्मनिर्वाणं मोक्षो वर्तते, विदितात्मनां विदितो ज्ञात आत्मा येषां ते विदितात्मानस्तेषां विदितात्मनां सम्यग्दर्शिनामित्यर्थः ॥ २६ ॥

सम्यग्दर्शननिष्ठानां संन्यासिनां सद्योमुक्तिरुक्ता कर्मयोगश्चेश्वरार्पितसर्वभावेनेश्वरे ब्रह्मण्याधाय क्रियमाणः सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासक्रमेण मोक्षायेति भगवान्पदे पदेऽब्रवीद्वक्ष्यति च । अथेदानीं ध्यानयोगं सम्यग्दर्शनस्यान्तरङ्गं विस्तरेण वक्ष्यामीति तस्य सूत्रस्थानीयाञ्श्लोकानुपदिशति स्म—

स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७ ॥

स्पर्शाञ्छब्दादीन्कृत्वा बहिर्बाह्याञ्छ्रोत्रादिद्वारेणान्तर्बुद्धौ प्रवेशिता शब्दादयो विषया-
स्तानचिन्तयत शब्दादयो बाह्या बहिरेव कृता भवन्ति । तानेवं बहिः कृत्वा चक्षुश्चैवान्तरे
भ्रुवोः कृत्वेत्यनुषज्यते । तथा प्राणापानौ नासाभ्यन्तरचारिणौ समौ कृत्वा ॥ २७ ॥

यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २८ ॥

यतेन्द्रिय इति । यतेन्द्रियमनोबुद्धिर्यतानि संयतानीन्द्रियाणि मनो बुद्धिश्च यस्य
स यतेन्द्रियमनोबुद्धिर्मननान्मुनिः संन्यासी मोक्षपरायण एवं देहसंस्थानो मोक्ष-
परायणो मोक्ष एव परमयनं परा गतिर्यस्य सोऽयं मोक्षपरायणो मुनिर्भवेत् । विगते-
च्छाभयक्रोधः इच्छा च भयं च क्रोधश्चेच्छाभयक्रोधास्ते विगता यस्मात्स विगतेच्छा
भयक्रोधः । य एवं वर्तते सदा संन्यासी मुक्त एव स न तस्य मोक्षोऽन्यः
कर्तव्योऽस्ति ॥ २८ ॥

एवं समाहितचित्तेन किं विज्ञेयमित्युच्यते—

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २९ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मप-
र्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे संन्यासयोगो नाम
पञ्चमोऽध्यायः ॥ ५ ॥

भोक्तारं यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च सर्वलोकमहेश्वरं सर्वेषां
लोकानां महान्तमीश्वरं सर्वलोकमहेश्वरं सुहृदं सर्वभूतानां सर्वप्राणिनां प्रत्युपकारनि-
रपेक्षतयोपकारिणं सर्वभूतानां हृदयेशयं सर्वकर्मफलाध्यक्षं सर्वप्रत्ययसाक्षिणं मां
नारायणं ज्ञात्वा शान्तिं सर्वसंसारोपरतिमृच्छति प्राप्नोति ॥ २९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः
कृतौ श्रीभगवद्गीताभाष्ये प्रकृतिगर्भो नाम
पञ्चमोऽध्यायः ॥ ५ ॥

# अथ षष्ठोऽध्यायः ।

## श्रीभगवानुवाच—

I. अतीतानन्तराध्यायान्ते ध्यानयोगस्य सम्यग्दर्शनं प्रत्यन्तरङ्गस्य सूत्रभूताः श्लोकाः स्पर्शान्कृत्वा बहिरित्यादयः ( V. 27–29 ) उपदिष्टास्तेषां वृत्तिस्थानीयोऽयं षष्ठोऽध्याय आरभ्यते । तत्र ध्यानयोगस्य बहिरङ्गं कर्मेति यावद्ध्यानयोगारोहणासमर्थस्तावद्गृहस्थेनाधिकृतेन कर्तव्यं कर्मेत्यतस्तत्स्तौति अनाश्रितः VI.1) इति ।

II. (a) ननु किमर्थं ध्यानयोगारोहणसीमाकरणं यावताऽनुष्ठेयमेव विहितं कर्म यावज्जीवम् । न, आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते (VI.3) इति विशेषणादारूढस्य च शमेनैव संबंधकरणात् । आरुरुक्षोरारूढस्य च शमः कर्म चोभयं कर्तव्यत्वेनाभिप्रेतं चेत्स्यात्तदारुरुक्षोरारूढस्य चेति शमकर्मविषयभेदेन विशेषणं विभागकरण चानर्थकं स्यात् ।

---

I. Relation of Adh. VI to Adh. V. 27 A grhastha should do his ( daily ) duties till he is able to practise Dhyānayoga.

II An opponent of Śankara or his Predecesser who wrote a commentary on the Gītā held that the follower of the Path of Dhyānayoga taught in this Adhyāya is asked to practise Jñāna and Karman combined Śankara holds that the follower of the Dhyānayoga is a Sannyāsin and Karmayoga is only the first step for him; in the next step he must renounce all actions including the daily duties.

Śankara's arguments—

( a ) In verse 3 'Śama' means Sannyāsa "renunciation of all duties." And that verse does not *comline Karma* and *Sama*, but assigns each of them to a distinct stage in the Practice of Dhyānayoga.

(b1) तत्राश्रमिणा कश्चिद्योगमारुरुक्षुर्भवत्यारूढश्च कश्चिदन्ये नारुरुक्षवो न चा दारूढास्तानपेक्ष्यारुरुक्षोरारूढस्य चेति विशेषण विभागकरण चोपपद्यत एवेति चेत् ।

न तस्यैवेति वचनात् ।

(b2) पुनर्योगग्रहणाच्च योगारूढस्येति य आसीत्पूर्व योगमारुरुक्षुस्तस्यैवारूढ शम एव कर्तव्य कारण योगफल प्रत्युच्यत इति । अतो न यावज्जीव कर्तव्यप्राप्ति कस्यचिदपि कर्मण ।

(c) योगविभ्रष्टवचनाच्च ( i ) गृहस्थस्य चेत्कर्मिणो योगो विहि षष्ठेऽध्याये स योगविभ्रष्टोऽपि कर्मगतिं कर्मफल प्राप्नोतीति तस्य नाशाशङ्कानुपप स्यात् । अवश्य हि कृत कर्म काम्य नित्य वा मोक्षस्य नित्यत्वादनारभ्यत्वे स्वफलमारभत एव । (ii) नित्यस्य च कर्मणो वेदप्रमाणावबुद्धत्वात्फलेन भवितव्यमित्यवोचाम ( Sa Bha on Bha Gi IV 18 ) अन्यथा वेदस्यानर्थक्यप्रसङ्गादिति । (iii) न च कर्मणि सत्युभयविभ्रष्टवचनमर्थवत्कर्मणो* विभ्रंशकारणानुपपत्ते । (iv) कर्म कृतमीश्वरे सन्यस्येत्यत कर्तारं कर्म नारभत इति चेत्, न, ईश्वरे सन्यासस्याधिकतरफलहेतुत्वोपपत्ते । मोक्षायैवेति चेत्स्वकर्मणा कृतानामीश्वरे न्यासो मोक्षायैव न फलान्तराय योगसहितो योगाच्च विभ्रष्ट इत्यतस्तं प्रति नाशाशङ्का युक्तैवेति चेत् । न एकाकी यतचित्तात्मा निराशीरप-

(b1) The words तस्य एव' in v 3 show that the same person in two different stages is to follow Karma and Sama, not simultaneously

(b2) The repetition of the word योग in योगारूढ also shows that the same person in two distinct stages is to practise Karma and Sama separately

(c) In VI 37 the follower of this Dhyānayoga is called योगविभ्रष्ट and a doubt about his own destruction (nāsa) is raised by Arjuna This doubt is possible only if the Yogavibhrasta is a Sannyasin—

(i) If he were a grhastha, he would be doing actions (nitya and others), so his gati or destiny will be surely according to his actions No नाश is possible in his case. (ii) We have already proved that even the nitya Karman must bear its reward, so the destiny (gati) of the Yogavibhrasta will be fixed up by those duties (iii) The statement that the Yogavibhrasta has fallen from both

* AbS notices the v l कर्मिणो for कर्मण ।

रिग्रह ( VI 10 ) ब्रह्मचारिव्रते स्थित (VI 14) इति कर्मसन्यासविधानात्। न चात्र ध्यानकाल स्त्रीसहायत्वाशङ्का येनैकाकित्व विधीयते । न च गृहस्थस्य निराशीरपरिग्रह (VI 10) इत्यादिवचनमनुकुलम् । उभयविभ्रष्टप्रश्नानुपपत्तेश्च ।

(d1) अनाश्रित (VI.1) इत्यनेन कर्मिण एव सन्यासित्वं योगित्वं चोक्त प्रतिषिद्ध च निरग्नेरक्रियस्य च सन्यासित्व योगित्व चेति चेत् । न, ध्यानयोग प्रति बहिरङ्गस्य सत कर्मण फलाकाङ्क्षासन्यासस्तुतिपरत्वात् । न केवल निरग्निरक्रिय एव सन्यासी योगी च किं तर्हि कर्म्यपि कर्मफलासङ्ग सन्यस्य कर्मयोगमनुतिष्ठन्सत्त्वशुद्ध्यर्थं, स सन्यासी च योगी च भवतीति स्तूयते।

(d2) न चैकेन वाक्येन कर्मफलासङ्गसन्यासस्तुतिश्चतुर्थाश्रमप्रतिषेधश्चोपपद्यते ।

---

(Karmayoga and Dhyanayoga-Sannyāsa) is proper only if he is a Sannyasin. (iv) If it be argued that the Yogavibhrasta is a grhastha doing his duties in dedication to the Lord, and these duties will not give him any reward, and hence he is उभयविभ्रष्ट, Sankara replies that such actions should give him much more definite reward The opponent argues that this definite reward will be मोक्ष ( Sankara is, at this stage, perplexed and gives up arguing on the strength of the statement of Yogavibhrasta and takes up his stand on the discussion of Adh VI. 10, 14 etc ) Sankara says that the context ( VI. 10, 14 ) shows that the Yogavibhrasta is a Sannyāsin ( without wife, without a house ) and he argues that the Yogavibhrasta is said to be ubhayavibhrasta " fallen from both Karman and Dhyanayoga which implies Sannyasa "

( d1 ) Verse 1 of Adh. VI does not mean that one who is without fires and without actions is not a Sannyāsin and a Yogin ( here a Dhyānayogin ), it means that such persons are real Sannyāsins and Yogins, and by way of praise ( *stuti* in the mimāmsa sense ) one who does not do his duties for their respective rewards but does them for the purification of his mind is also said to be as good as a Sannyāsin and a Yogin.

( d2 ) Verse 1 of Adh VI cannot do the double func-

( d 3 ) न च प्रसिद्ध निरग्नेरक्रियस्य परमार्थसन्यासित्व श्रुतिस्मृतिपुराणेतिहासयोगशास्त्रविहित सन्यासित्व योगित्व च प्रतिषेधति भगवान् ।

( d 4 ) स्ववचनविरोधाच्च । 'सर्वकर्माणि मनसा सन्यस्य नैव कुर्वन्न कारयन् आस्ते' ( V 13 ), 'मौनी सतुष्टो येन केनचित् । अनिकेत स्थिरमति' ( XII 19 ) 'विहाय कामान्य सर्वान्पुमाश्चरति निस्पृह' ( II 71 ) 'सर्वारम्भपरित्यागी' ( XII 16 ) इति च तत्र तत्र भगवता स्ववचनानि दर्शितानि तैर्विरुध्येत चतुर्थाश्रमप्रतिषेध । तस्मान्मुनेर्योगमारुरुक्षो प्रतिपन्नगार्हस्थ्यस्याग्निहोत्रादि कर्म फलनिरपेक्षमनुष्ठीयमान ध्यानयोगारोहणसाधनत्व सत्त्वशुद्धिद्वारेण प्रतिपद्यत इति स सन्यासी च योगी चेति स्तूयते—

श्रीभगवानुवाच—

अनाश्रित कर्मफल कार्यं कर्म करोति य ।
स सन्यासी च योगी च न निरग्निर्न चाक्रिय ॥ १ ॥

अनाश्रित नाश्रितोऽनाश्रित कि कर्मफल कर्मणा फल कर्मफल यत्तदनाश्रित कर्मफलतृष्णारहित इत्यर्थ । यो हि कर्मफलतृष्णावान्स कर्मफलमाश्रितो भवत्यय तु तद्विपरीतोऽतोऽनाश्रित कर्मफलमेवभूत सन्कार्यं कर्तव्य नित्य काम्यविपरीतमग्निहोत्रादिक कर्म करोति निर्वर्तयति । य कश्चिदीदृश कर्मी स कर्म्यन्तरेभ्यो विशिष्यत इत्येतमर्थमाह स सन्यासी च योगी चेति । सन्यास परित्याग स यस्यास्ति स सन्यासी च योगी च योगश्चित्तसमाधान स यस्यास्ति स योगी चेत्येवगुणसम्पन्नोऽय मन्तव्यो न केवल निरग्निरक्रिय एव सन्यासी योगी चेति मन्तव्य । निर्गता अग्नय कर्माङ्गभूता यस्मात्स निरग्निरक्रियश्चानग्निसाधना अप्यविद्यमाना क्रियास्तपोदानादिका यस्यासावक्रिय * ॥ १ ॥

ननु च निरग्नेरक्रियस्यैव श्रुतिस्मृतियोगशास्त्रेषु सन्यासित्व योगित्व च प्रसिद्ध कथमिह साग्नेः सक्रियस्य च सन्यासित्व योगित्व चाप्रसिद्धमुच्यत इति । नैष दोष । कयाचिद्गुणवृत्त्योभयस्य सम्पिपादयिषितत्वात् । तत्कथ कर्मफलसकल्पसन्यासात्-

---

tion of praising the Karmayogin and denying the existence of the order of Sannyasins

( d 3 ) The entire Scripture, Sruti, Smrti Purana, Itihāsa, Yogasastra, etc mention the order of sannyasa So, the Lord would not deny it

( d 4 ) We have shown that the Lord himself mentions the order of sannyasa in the Gita in several verses How can he contradict himself here ?

---

* POA reads अविक्रिय for अक्रिय

न्यासमित्व योगाङ्गत्वेन च कर्मानुष्ठानात्कर्मफलसंकल्पस्य वा चित्तविक्षेपहेतो परित्यागाद्योगित्व चेति गौणमुभयं न पुनर्मुख्यं सन्यासित्वं योगित्वं चाभिप्रेत-मित्येतमर्थं दर्शयितुमाह—

यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥

यमिति । य सर्वकर्मतत्फलपरित्यागलक्षण परमार्थसन्यास संन्यासमिति प्राहुः श्रुतिस्मृतिविदो योगा कर्मानुष्ठानलक्षणं त परमार्थसन्यास विद्धि जानीहि हे पाण्डव । कर्मयोगस्य प्रवृत्तिलक्षणस्य निवृत्तिलक्षणेन परमार्थसन्यासेन कीदृश सामान्यमङ्गीकृत्य तद्भाव उच्यत इत्यपेक्षायामिदमुच्यते । अस्ति परमार्थसन्यासेन सादृश्य कर्तृद्वारक कर्मयोगस्य । यो हि परमार्थसन्यासी स त्यक्तसर्वकर्मसाधनतया सर्वकर्मतत्फलविषय सकल्प प्रवृत्तिहेतुकामकारण सन्यस्यति । अयमपि कर्मयोगी कर्म कुर्वाण एव फलविषय सकल्प सन्यस्यतीत्येतमर्थं दर्शयन्नाह न हि यस्मादसन्यस्तसकल्पोऽसन्यस्तोऽपरित्यक्त फलविषय सकल्पोऽभिसन्धिर्येन सोऽसन्यस्तसकल्पः कश्चन कश्चिदपि कर्मी योगी समाधानवान्भवति न सभवतीत्यर्थः । फलसकल्पस्य चित्तविक्षेपहेतुत्वात् । तस्मात्कश्चन कर्मी सन्यस्तफलसकल्पो भवेत्स योगी समाधानवानविक्षिप्तचित्तो भवेच्चित्तविक्षेपहेतो फलसकल्पस्य सन्यस्तत्वादित्यभिप्रायः । एव परमार्थसन्यासकर्मयोगयो कर्तृद्वारक सन्याससामान्यमपेक्ष्य ' यसन्यासमिति प्राहुर्योग त विद्धि पाण्डव' इति कर्मयोगस्य स्तुत्यर्थं संन्यासत्वमुक्तम्+ ॥ २ ॥

ध्यानयोगस्य फलनिरपेक्षः कर्मयोगो बहिरङ्गं साधनमिति तं संन्यासत्वेन स्तुत्वाधुना कर्मयोगस्य ध्यानयोगसाधनत्व दर्शयति—

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥

आरुरुक्षोरारोढुमिच्छतोऽनारूढस्य ध्यानयोगेऽवस्थातुमशक्तस्यैवेत्यर्थः । कस्यारुरुक्षोर्मुनेः कर्मफलसंन्यासिन इत्यर्थः । किमारुरुक्षोर्योग कर्म कारण साधनमुच्यते । योगारूढस्य पुनस्तस्यैव शम उपशमः सर्वकर्मभ्यो निवृत्तिः कारण योगारूढत्वस्य साधनमुच्यत इत्यर्थः । यावद्यावत्कर्मभ्य उपरमते तावत्तावन्निरायासस्य जितेन्द्रियस्य चित्त समाधीयते । तथा सति स झटिति योगारूढो भवति । तथा चोक्त व्यासेन—

" नैतादृश ब्राह्मणस्यास्ति वित्त
यथैकता समता सत्यता च ।
शील स्थितिर्दण्डनिधानमार्जवं
ततस्ततश्चोपरमः क्रियाभ्यः " इति (MBh. XII. 175. 38) ॥३॥

+ POA takes this sentence as introduction to v. 3.

अथेदानीं कदा योगारूढो भवतीत्युच्यते—

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥४॥

यदा समाधीयमानचित्तो योगी ह्यन्द्रियार्थेष्विन्द्रियाणामर्थाः शब्दादयस्तेष्विन्द्रियार्थेषु कर्मसु च नित्यनैमित्तिककाम्यप्रतिषिद्धेषु प्रयोजनाभावबुद्ध्या नानुषज्जतेऽनुषङ्गं कर्तव्यताबुद्धिं न करोतीत्यर्थः । सर्वसंकल्पसंन्यासी सर्वान्संकल्पानिहामुत्रार्थकामहेतून्संन्यसितुं शीलमस्येति स सर्वसंकल्पसंन्यासी योगारूढः प्राप्तयोग इत्येतत्तदा तस्मिन्काल उच्यते । सर्वसंकल्पसंन्यासीति वचनात्सर्वांश्च कामान्सर्वाणि च कर्माणि संन्यसेदित्यर्थः । संकल्पमूला हि सर्वे कामाः—

" संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः " ( Manu II 3 )
" काम जानामि ते मूलं संकल्पात्त्वं हि जायसे ।
न त्वां संकल्पयिष्यामि तेन मे न भविष्यसि ॥ " (MBh XII 177 25)
इत्यादिस्मृतेः ।

सर्वकामपरित्यागे च सर्वकर्मसंन्यासः सिद्धो भवति " स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते " ( Br Upn IV 4 5 ) इत्यादिश्रुतिभ्यो ' यद्यद्धि कुरुते कर्म तत्तत्कामस्य चेष्टितम् ' ( Manu II 4 ) इत्यादिस्मृतिभ्यश्च । न्यायाच्च । न हि सर्वसंकल्पसंन्यासे कश्चित्स्पन्दितुमपि शक्तः । तस्मात्सर्वसंकल्पसंन्यासीति वचनात्सर्वान्कामान्सर्वाणि कर्माणि च त्याजयति भगवान् ॥ ४ ॥

यदैवं योगारूढस्तदा तेनात्मात्मनोद्धृतो भवति संसारादनर्थजातादतः—

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥

उद्धरेदिति । उद्धरेत्संसारसागरे निमग्नमात्मनात्मानं तत उत्क्षिप्य उद्धरेद्योगारूढतामापादयेदित्यर्थः । नात्मानमवसादयेन्नाधो नयेन्नाधो गमयेत् । आत्मैव हि यस्मादात्मनो बन्धुः । न ह्यन्यः कश्चिद्बन्धुर्यः संसारमुक्तये भवति । बन्धुरपि तावन्मोक्षं प्रति प्रतिकूल एव स्नेहादिबन्धनायतनत्वात्तस्माद्युक्तमवधारणमात्मैव ह्यात्मनो बन्धुरिति । आत्मैव रिपुः शत्रुर्योऽन्योऽपकारी बाह्यः शत्रुः सोऽप्यात्मप्रयुक्त एवेति युक्तमेवावधारणमात्मैव रिपुरात्मन इति ॥ ५ ॥

आत्मैव बन्धुरात्मैव रिपुरात्मन इत्युक्तं तत्र किंलक्षण आत्मात्मनो बन्धुः किंलक्षणो वा आत्मात्मनो रिपुरित्युच्यते—

बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥

बन्धुरिति । बन्धुरात्मात्मनस्तस्य तस्यात्मनः स आत्मा बन्धुर्येनात्मनात्मैव जित आत्मा कार्यकरणसंघातो येन वशीकृतो जितेन्द्रिय इत्यर्थः । अनात्मनस्त्वजितात्मनस्तु शत्रुत्वे शत्रुभावे वर्तेतात्मैव शत्रुवत्‌ यथानात्मा शत्रुरात्मनोऽपकारी तथात्मात्मनोऽपकारे वर्तेतेत्यर्थः ॥ ६ ॥

जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ७ ॥

जितात्मन इति । जितात्मनः कार्यकरणसंघात आत्मा जितो येन स जितात्मा तस्य जितात्मनः प्रशान्तस्य प्रसन्नान्तःकरणस्य सतः संन्यासिनः परमात्मा समाहितः साक्षादात्मभावेन वर्तत इत्यर्थः । किंच शीतोष्णसुखदुःखेषु तथा मानेऽपमाने च मानापमानयोः पूजापरिभवयोः * ॥ ७ ॥

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥

ज्ञानेति । ज्ञानविज्ञानतृप्तात्मा ज्ञानं शास्त्रोक्तपदार्थानां परिज्ञानं, विज्ञानं तु शास्त्रतो ज्ञातानां तथैव स्वानुभवकरणं ताभ्यां ज्ञानविज्ञानाभ्यां तृप्तः संजातालंप्रत्यय आत्मान्तःकरणं यस्य स ज्ञानविज्ञानतृप्तात्मा कूटस्थोऽप्रकम्प्यो भवतीत्यर्थः । विजितेन्द्रियश्च । य ईदृशो युक्तः समाहित इति स उच्यते कथ्यते । स योगी समलोष्टाश्मकाञ्चनो लोष्टाश्मकाञ्चनानि समानि यस्य स समलोष्टाश्मकाञ्चनः ॥ ८ ॥

किंच—

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥

सुहृदित्यादिश्लोकार्धमेकं पदम् । सुहृदिति प्रत्युपकारमनपेक्ष्योपकर्ता । मित्रं स्नेहवान् । अरिः शत्रुः । उदासीनो न कस्यचित्पक्षं भजते । मध्यस्थो यो विरुद्धयोरुभयोर्हितैषी । द्वेष्य आत्मनोऽप्रियः । बन्धुः संबन्धीत्येतेषु साधुषु शास्त्रानुवर्तिष्वपि च पापेषु प्रतिषिद्धकारिषु सर्वेष्वेतेषु समबुद्धिः 'कः किंकर्मे'त्यव्यापृतबुद्धिरित्यर्थः । विशिष्यते विमुच्यत इति वा पाठान्तरम् । योगारूढानां सर्वेषामयमुत्तम इत्यर्थः ॥ ९ ॥

अत एवमुत्तमफलप्राप्तये—

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥

योगी ध्यायी युञ्जीत समादध्यात्सततं सर्वदात्मानमन्तःकरणं रहस्येकान्ते गिरिगुहादौ स्थितः सन्नेकाक्यसहायः । रहसि स्थित एकाकी चेति विशेषणात्संन्यासं कृत्वेत्यर्थः । यतचित्तात्मा चित्तमन्तःकरणमात्मा देहश्च संयतौ यस्य स यतचित्तात्मा

* POA and VPP add समः स्यात्.

निराशीर्वीततृष्णोऽपरिग्रहश्च परिग्रहरहित इत्यर्थः । संन्यासित्वेऽपि त्यक्तसर्वपरिग्रहः सन्नित्यर्थः ॥ १० ॥

अथेदानीं योगं युञ्जत आसनाहारविहारादीनां योगसाधनत्वेन नियमो वक्तव्यः प्राप्तयोगलक्षणं तत्फलादि चेत्यत आरभ्यते । तत्रासनमेव तावत्प्रथममुच्यते—

**शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।**
**नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११ ॥**

शुचौ शुद्धे विविक्ते स्वभावतः संस्कारतो वा देशे स्थाने प्रतिष्ठाप्य स्थिरमचलमात्मन आसनं नात्युच्छ्रितं नातिनीचं नाप्यतिनीचं तच्च चैलाजिनकुशोत्तरं चैलमजिनं कुशाश्चोत्तरे यस्मिन्नासने तदासनं चैलाजिनकुशोत्तरं पाठक्रमाद्विपरीतोऽत्र क्रमश्चैलादीनाम् ॥ ११ ॥

प्रतिष्ठाप्य किम्—

**तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।**
**उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२ ॥**

तत्र तस्मिन्नासन उपविश्य योगं युञ्ज्यात् । कथम्, सर्वविषयेभ्य उपसंहृत्यैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः चित्तं चेन्द्रियाणि च चित्तेन्द्रियाणि तेषां क्रियाः संयता यस्य स यतचित्तेन्द्रियक्रियः । स किमर्थं योगं युञ्ज्यादित्याहात्मविशुद्धयेऽन्तःकरणस्य विशुद्ध्यर्थमित्येतत् ॥ १२ ॥

बाह्यमासनमुक्तमधुना शरीरधारणं कथमित्युच्यते—

**समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।**
**संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥**

समं कायशिरोग्रीवं कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं तत्समं धारयन्नचलं च समं धारयतश्चलनं संभवत्यतो विशिनष्टि अचलमिति । स्थिरः स्थिरो भूत्वेत्यर्थः । स्वं नासिकाग्रं संप्रेक्ष्य सम्यक्प्रेक्षणं दर्शनं कृत्वेवेतीवशब्दो लुप्तो द्रष्टव्यः । न हि स्वनासिकाग्रसंप्रेक्षणमिह विधित्सितं किं तर्हि चक्षुषोर्दृष्टिसंनिपातः । स चान्तःकरणसमाधानापेक्षो विवक्षितः । स्वनासिकाग्रसंप्रेक्षणमेव चेद्विवक्षितं मनस्तत्रैव समाधीयेत नात्मनि । आत्मनि हि मनसः समाधानं वक्ष्यत्यात्मसंस्थं मनः कृत्वेति । तस्मादिवशब्दलोपेनाक्ष्णोर्दृष्टिसंनिपात एव संप्रेक्ष्येत्युच्यते । दिशश्चानवलोकयन्दिशां चावलोकनमन्तराकुर्वन्नित्येतत् ॥ १३ ॥

किंच—

**प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।**
**मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥**

प्रशान्तात्मा प्रकर्षेण शान्त आत्मान्तःकरणं यस्य सोऽयं प्रशान्तात्मा विगतभीर्विगतभयो ब्रह्मचारिव्रते स्थितो ब्रह्मचारिणो व्रतं ब्रह्मचर्यं गुरुशुश्रूषाभिक्षाभुक्त्यादि तस्मिन्स्थितस्तदनुष्ठाता भवेदित्यर्थः । किञ्च मनः संयम्य मनसो वृत्तीरुपसंहृत्येत्येतन्मच्चित्तो मयि परमेश्वरे चित्तं यस्य सोऽयं मच्चित्तो युक्तः समाहितः सन्नासीतोपविशेन्मत्परोऽहं परो यस्य सोऽयं मत्परः । भवति कश्चिद्रागी स्त्रीचित्तो न तु स्त्रियमेव परत्वेन गृह्णाति, किं तर्हि राजानं महादेवं वाऽयं तु मच्चित्तो मत्परश्च ॥ १४ ॥

अथेदानीं योगफलमुच्यते—

युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥

युञ्जन्समाधानं कुर्वन्नेवं यथोक्तेन विधानेन सदात्मानं योगी नियतमानसो नियतं संयतं मानसं मनो यस्य सोऽयं नियतमानसः शान्तिमुपरतिं निर्वाणपरमां निर्वाणं मोक्षस्तत्परमा निष्ठा यस्याः शान्तेः सा निर्वाणपरमा तां निर्वाणपरमां मत्संस्थां मदधीनामधिगच्छति प्राप्नोति ॥ १५ ॥

इदानीं योगिन आहारादिनियम उच्यते—

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १६ ॥

नात्यश्नत आत्मसंमितमन्नपरिमाणमतीत्याश्नतोऽत्यश्नतो न योगोऽस्ति, न चैकान्तमनश्नतो योगोऽस्ति "यदु ह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति, यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति" (Śatapatha Brāhmana IX. 2. 1 2) इति श्रुतेः । तस्माद्योगी नात्मसंमितादन्नादधिकं न्यूनं वाश्नीयात् । अथवा योगिनो योगशास्त्रे परिपठितादन्नपरिमाणादतिमात्रमश्नतो योगो नास्ति ।

उक्तं हि—"अर्धमशनस्य सव्यञ्जनस्य तृतीयमुदकस्य तु ।
वायोः सञ्चरणार्थं तु चतुर्थमवशेषयेत्" ॥ इत्यादि परिमाणम् । तथा न चातिस्वप्नशीलस्य योगो भवति नैव चातिमात्रं जाग्रतो योगो भवति चार्जुन ॥ १६ ॥

कथं पुनर्योगो भवतीत्युच्यते—

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥

युक्ताहारविहारस्येत्यादिः आह्रियत इत्याहारोऽन्नं विहरणं विहारः पादक्रमस्तौ युक्तौ नियतपरिमाणौ यस्य तथा युक्तचेष्टस्य युक्ता नियता चेष्टा यस्य कर्मसु तथा युक्तस्वप्नावबोधस्य युक्तौ स्वप्नश्चावबोधश्च तौ नियतकालौ यस्य तस्य युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु युक्तस्वप्नावबोधस्य योगिनो योगो भवति दुःखहा दुःखानि सर्वाणि हन्तीति दुःखहा सर्वसंसारदुःखक्षयकृद्योगो भवतीत्यर्थः ॥ १७ ॥

अथाधुना कदा युक्तो भवतीत्युच्यते—

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥

यदा विनियतं चित्तं विशेषेण नियतं संयतमेकाग्रतामापन्नं चित्तं हित्वा बाह्यचिन्तामात्मन्येव केवलेऽवतिष्ठते स्वात्मनि स्थितिं लभत इत्यर्थः । निःस्पृहः सर्वकामेभ्यो निर्गता दृष्टादृष्टविषयेभ्यः स्पृहा तृष्णा यस्य योगिनः स युक्तः समाहित इत्युच्यते तदा तस्मिन्काले ॥ १८ ॥

तस्य योगिनः समाहितं यच्चित्तं तस्योपमोच्यते—

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९ ॥

यथा दीपः प्रदीपो निवातस्थो निवाते वातवर्जिते देशे स्थितो नेङ्गते न चलति सोपमोपमीयतेऽनयेत्युपमा योगज्ञैश्चित्तप्रचारदर्शिभिः स्मृता चिन्तिता । योगिनो यतचित्तस्य संयतान्तःकरणस्य युञ्जतो योगमनुतिष्ठत आत्मनः समाधिमनुतिष्ठत इत्यर्थः ॥ १९ ॥

एवं योगाभ्यासबलादेकाग्रीभूतं निवातप्रदीपकल्पं सत्—

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥

यत्र यस्मिन्काल उपरमते चित्तमुपरतिं गच्छति निरुद्धं सर्वतो निवारितप्रचारं योगसेवया योगानुष्ठानेन यत्र चैव यस्मिंश्च काल आत्मना समाधिपरिशुद्धेनान्तःकरणेनात्मानं परं चैतन्यज्योतिःस्वरूपं पश्यन्नुपलभमानः स्व एवात्मनि तुष्यति तुष्टिं भजते ॥ २० ॥

किञ्च—

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१ ॥

सुखमात्यन्तिकमत्यन्तमेव भवतीत्यात्यन्तिकमनन्तमित्यर्थः । यत्तद्बुद्धिग्राह्यं बुद्ध्यैवेन्द्रियनिरपेक्षया गृह्यत इति बुद्धिग्राह्यमतीन्द्रियमिन्द्रियगोचरातीतमविषयजनितमित्यर्थः । वेत्ति तदीदृशं सुखमनुभवति यत्र यस्मिन्काले न च, एव, अयं विद्वानात्मस्वरूपे स्थितस्तस्मान्नैव चलति तत्त्वतस्तत्त्वस्वरूपान्न प्रच्यवत इत्यर्थः ॥ २१ ॥

किञ्च—

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ २२ ॥

य लब्ध्वा यमात्मलाभ लब्ध्वा प्राप्य चापरमन्यल्लाभान्तर ततोऽधिकमस्तीति न मन्यते चिन्तयति । किञ्च यस्मिन्नात्मतत्त्वे स्थितो दु खेन शस्त्रनिपातादिलक्षणेन गुरुणा महतापि न विचाल्यते ॥ २२ ॥

यत्रोपरमत इत्याद्यारभ्य यावद्भिर्विशेषणैर्विशिष्ट आत्मावस्थाविशेषो योग उक्त—

तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३ ॥

त विद्याद्विजानीयाद्दु खसयोगवियोग दु खै सयोगो दु खसयोगस्तेन वियोगो दु खसयोगवियोगस्त दु खसयोगवियोग योग इत्येव संज्ञित विपरीतलक्षणेन विद्याद्विजानीयादित्यर्थ । योगफलमुपसंहृत्य पुनरन्वारम्भेण योगस्य कर्तव्यतोच्यते निश्चयानिर्वेदयोर्योगसाधनत्वविधानार्थम् । स यथोक्तफलो योगो निश्चयेनाध्यवसायेन योक्तव्योऽनिर्विण्णचेतसा न निर्विण्णमनिर्विण्ण किं तच्चेतस्तेन निर्वेदरहितेन चेतसा चित्तेनेत्यर्थ. ॥ २३ ॥

किञ्च—

संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४ ॥

सकल्पप्रभवान्सकल्प प्रभवो येषा कामाना ते सकल्पप्रभवा कामास्तांस्त्यक्त्वा परित्यज्य सर्वानशेषतो निर्लेपेन । किंच मनसैव विवेकयुक्तेनेन्द्रियग्राममिन्द्रियसमुदाय विनियम्य नियमन कृत्वा समन्तत समन्तात् ॥ २४ ॥

शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥ २५ ॥

शनैः शनैर्न सहसोपरमेदुपरतिं कुर्यात् । कया बुद्ध्या । किंविशिष्टया धृतिगृहीतया धृत्या धैर्येण गृहीतया धृतिगृहीतया धैर्येण युक्तयेत्यर्थ. । आत्मसस्थमात्मनि संस्थितमात्मैव सर्वं न ततोऽन्यत्किंचिदस्तीत्येवमात्मसस्थ मनः कृत्वा न किंचिदपि चिन्तयेत् । एष योगस्य परमो विधि ॥ २५ ॥

तत्रैवमात्मसस्थ मनः कर्तुं प्रवृत्तो योगी—

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥

यतो यतो यस्माद्यस्मान्निमित्ताच्छब्दादेर्निश्चरति निर्गच्छति स्वभावदोषान्मनश्चञ्चलमत्यर्थं चलमत एवास्थिर ततस्ततस्तस्मात्तस्माच्छब्दादेर्निमित्तान्नियम्य तत्तन्निमित्त याथात्म्यनिरूपणेनाभासीकृत्य वैराग्यभावनया चैतन्मन आत्मन्येव वशं नयेदात्मवश्यतामापादयेत् । एवं योगाभ्यासबलाद्योगिन आत्मन्येव प्रशाम्यति मनः ॥ २६ ॥

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥

प्रशान्तमनसं प्रशान्तं मनो यस्य स प्रशान्तमनास्तं प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमं निरतिशयमुपैत्युपगच्छति । शान्तरजसं प्रक्षीणमोहादिक्लेशरजसमित्यर्थः । ब्रह्मभूतं जीवन्मुक्तं ब्रह्मैव सर्वमित्येवंनिश्चयवन्तं ब्रह्मभूतमकल्मषं धर्माधर्मादिवर्जितम् ॥ २७ ॥

युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥

युञ्जन्निति । युञ्जन्नेवं यथोक्तेन क्रमेण योगी योगान्तरायवर्जितः सदात्मानं विगतकल्मषो विगतपापः सुखेनानायासेन ब्रह्मसंस्पर्शं ब्रह्मणा परेण संस्पर्शो यस्य तद्ब्रह्मसंस्पर्शं सुखमत्यन्तमन्तमतीत्य वर्तत इत्यत्यन्तमुत्कृष्टं निरतिशयमश्नुते व्याप्नोति ॥ २८ ॥

इदानीं योगस्य यत्फलं ब्रह्मैकत्वदर्शनं सर्वसंसारविच्छेदकारणं तत्प्रदर्श्यते—

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥

सर्वभूतस्थं सर्वेषु भूतेषु स्थितं स्वमात्मानं सर्वभूतानि चात्मनि ब्रह्मादीनि स्तम्बपर्यन्तानि च सर्वभूतान्यात्मन्येकतां गतानीक्षते पश्यति योगयुक्तात्मा समाहितान्तःकरणः सर्वत्र समदर्शनः सर्वेषु ब्रह्मादिस्थावरान्तेषु विषमेषु सर्वभूतेषु समं निर्विशेषं ब्रह्मात्मैकत्वविषयं दर्शनं ज्ञानं यस्य स सर्वत्र समदर्शनः ॥ २९ ॥

एतस्यात्मैकत्वदर्शनस्य फलमुच्यते—

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३० ॥

यो मां पश्यति वासुदेवं सर्वस्यात्मानं सर्वत्र सर्वेषु भूतेषु सर्वं च ब्रह्मादिभूतजातं मयि सर्वात्मनि पश्यति तस्यैवमात्मैकत्वदर्शिनोऽहमीश्वरो न प्रणश्यामि न परोक्षतां गमिष्यामि । स च मे न प्रणश्यति स च विद्वान्मम वासुदेवस्य न प्रणश्यति न परोक्षो भवति तस्य च मम चैकात्मकत्वात् । स्वात्मा हि नामात्मनः प्रिय एव भवति । ॥ ३० ॥

यस्माद्यथाहमेव सर्वात्मैकत्वदर्शी इत्येतत्पूर्वश्लोकार्थं सम्यग्दर्शनमनूद्य तत्फलं मोक्षोऽभिधीयते ।

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३१ ॥

सर्वथा सर्वप्रकारैर्वर्तमानोऽपि सम्यग्दर्शी योगी मयि वैष्णवे परमे पदे वर्तते नित्यमुक्त एव स न मोक्षं प्रति केनचित्प्रतिबध्यत इत्यर्थः ॥ ३१ ॥

किंचान्यत्—

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।

सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥

आत्मौपम्येनात्मा स्वयमेवोपमीयते [ अनया ] इत्युपमा तस्या उपमाया भाव औपम्यं तेनात्मौपम्येन सर्वत्र सर्वभूतेषु समं तुल्यं पश्यति योऽर्जुन। स च किं समं पश्यतीत्युच्यते यथा मम सुखमिष्टं तथा सर्वप्राणिनां सुखमनुकूलम्। वाशब्दश्चार्थे। यदि वा यच्च दुःखं मम प्रतिकूलमनिष्टं यथा तथा सर्वप्राणिनां दुःखमनिष्टं प्रतिकूलमित्येवमात्मौपम्येन सुखदुःखे अनुकूलप्रतिकूले तुल्यतया सर्वभूतेषु समं पश्यति न कस्यचित्प्रतिकूलमाचरत्यहिंसक इत्यर्थः। य एवमहिंसकः सम्यग्दर्शननिष्ठः स योगी परम उत्कृष्टो मतोऽभिप्रेतः सर्वयोगिनां मध्ये ॥ ३२ ॥

एतस्य यथोक्तस्य सम्यग्दर्शनलक्षणस्य योगस्य दुःखसंपाद्यतामालक्ष्य शुश्रूषुर्ध्रुवं तत्प्राप्त्युपायम्—

## अर्जुन उवाच—

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।

एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ॥ ३३ ॥

योऽयं योगस्त्वया प्रोक्तः साम्येन समत्वेन हे मधुसूदन, एतस्य योगस्याहं न पश्यामि नोपलभे चञ्चलत्वान्मनसः किं स्थिरामचलां स्थितिम् ॥ ३३ ॥

प्रसिद्धमेतत्—

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।

तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥

चञ्चलमिति। चञ्चलं हि मनः कृष्णेति कृषतेर्विलेखनार्थस्य रूपं भक्तजनपापादिदोषाकर्षणात्कृष्णः। न केवलमत्यर्थं चञ्चलं प्रमाथि च प्रमथनशीलं प्रमथ्नाति शरीरमिन्द्रियाणि च विक्षिपति परवशी करोति। किं च बलवन्न केनचिन्नियन्तुं शक्यम्। किंच दृढं तन्तुनागवदच्छेद्यं तस्यैवंभूतस्य मनसोऽहं निग्रहं निरोधं मन्ये वायोरिव। यथा वायोर्दुष्करो निग्रहस्ततोऽपि मनसो दुष्करं मन्य इत्यभिप्रायः ॥ ३४ ॥

## श्री भगवानुवाच—

एवमेतद्यथा ब्रवीषि—

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।

अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥

असंशयं नास्ति संशयो मनो दुर्निग्रहं चलमित्यत्र हे महाबाहो। किंत्वभ्यासेन त्वभ्यासो नाम चित्तभूमौ कस्यांचित्समानप्रत्ययावृत्तिश्चित्तस्य। वैराग्य नाम दृष्टादृष्टभोगेषु दोषदर्शनाभ्यासाद्वैतृष्ण्यं तेन च वैराग्येण गृह्यते। विक्षेपरूपः प्रचारश्चित्तस्यैव तन्मनो गृह्यते निगृह्यते निरुध्यत इत्यर्थः ॥ ३५ ॥

यः पुनरसंयतात्मा तेन—

असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६ ॥

असंयतात्मनाभ्यासवैराग्याभ्यामसंयत आत्माऽन्तःकरणं यस्य सोऽयमसंयतात्मा तेनासंयतात्मना योगो दुष्प्रापो दुःखेन प्राप्यत इति मे मतिः। यस्तु पुनर्वश्यात्माभ्यासवैराग्याभ्यां वश्यत्वमापादित आत्मा मनो यस्य सोऽयं वश्यात्मा तेन वश्यात्मना तु यतता भूयोऽपि प्रयत्नं कुर्वता शक्योऽवाप्तुं योग उपायतो यथोक्तादुपायात् ॥३६॥

तत्र योगाभ्यासाङ्गीकरणेन परलोकेहलोकप्राप्तिनिमित्तानि कर्माणि संन्यस्तानि योगसिद्धिफलं च मोक्षसाधनं सम्यग्दर्शनं न प्राप्तमिति योगी योगमार्गान्मरणकाले चलितचित्त इति तस्य नाशमाशङ्क्य—

## अर्जुन उवाच—

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७ ॥

अयतिरप्रयत्नवान्योगमार्गे श्रद्धयास्तिक्यबुद्ध्या चोपेतो योगादन्तकालेऽपि चलितमानसो मनो यस्य स चलितमानसो भ्रष्टस्मृतिः सोऽप्राप्य योगसंसिद्धिं योगफलं सम्यग्दर्शनं कां गतिं हे कृष्ण गच्छति ॥ ३७ ॥

कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३८ ॥

कच्चिदिति। कच्चित्किं नोभयविभ्रष्टः कर्ममार्गाद्योगमार्गाच्च विभ्रष्टः सञ्छिन्नाभ्रमिव नश्यति किं वा न नश्यत्यप्रतिष्ठो निराश्रयो हे महाबाहो विमूढः सन्ब्रह्मणः पथि ब्रह्मप्राप्तिमार्गे ॥ ३८ ॥

एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ३९ ॥

एतदिति। एतन्मे मम संशयं कृष्ण छेत्तुमपनेतुमर्हस्यशेषतस्त्वदन्यस्त्वत्तोऽन्य ऋषिर्देवो वा छेत्ता नाशयिता संशयस्यास्य न हि यस्मादुपपद्यते संभवत्यतस्त्वमेव छेत्तुमर्हसीत्यर्थः ॥ ३९ ॥

श्रीभगवानुवाच—

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥ ४० ॥

पार्थेति । हे पार्थ नैवेह लोके नामुत्र परस्मिन्वा लोके विनाशस्तस्य विद्यते नास्ति नाशो नाम पूर्वस्माद्धीनजन्मप्राप्तिः स योगभ्रष्टस्य नास्ति, न हि यस्मात्कल्याणकृच्छुभकृत्कश्चिद्दुर्गतिं कुत्सितां गतिं हे तात तनोत्यात्मानं पुत्ररूपेणेति पिता तात उच्यते पितैव पुत्र इति पुत्रोऽपि तात उच्यते शिष्योऽपि पुत्र उच्यते, गच्छति ॥ ४० ॥

किं त्वस्य भवति—

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥

योगमार्गे प्रवृत्तः संन्यासी सामर्थ्यात्प्राप्य गत्वा पुण्यकृतामश्वमेधादियाजिनां लोकांस्तत्र चोषित्वा वासमनुभूय शाश्वतीर्नित्याः समाः संवत्सरांस्तद्भोगक्षये शुचीनां यथोक्तकारिणां श्रीमतां विभूतिमतां गेहे गृहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥

अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥

अथेति । अथवा श्रीमतां कुलादन्यस्मिन्योगिनामेव दरिद्राणां कुले भवति जायते धीमतां बुद्धिमताम् । एतद्धि जन्म यद्दरिद्राणां योगिनां कुले दुर्लभतरं दुःखलभ्यतरं पूर्वमपेक्ष्य लोके जन्म यदीदृशं यथोक्तविशेषणे कुले ॥ ४२ ॥

यस्मात्—

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ ४३ ॥

तत्र योगिनां कुले तं बुद्ध्या संयोगं बुद्धिसंयोगं लभते पौर्वदेहिकं पूर्वस्मिन्देहे भवं पौर्वदेहिकं यतते च प्रयत्नं करोति ततस्तस्मात्पूर्वकृतात्संस्काराद्भूयो बहुतरं संसिद्धौ संसिद्धिनिमित्तं हे कुरुनन्दन ॥ ४३ ॥

कथं पूर्वदेहबुद्धिसंयोग इति तदुच्यते—

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥

यः पूर्वजन्मनि कृतोऽभ्यासः स पूर्वाभ्यासस्तेनैव बलवता ह्रियते हि यस्मादवशोऽपि स योगभ्रष्टो न कृतं चेद्योगाभ्याससंस्कारादुबलवत्तरमधर्मादिलक्षणं कर्म तदा योगाभ्यासजनितेन संस्कारेण ह्रियते । अधर्मश्चेद्बलवत्तरः कृतस्तेन योगजोऽपि संस्कारोऽभिभूयत एव । तत्क्षये तु योगजः संस्कारः स्वयमेव कार्यमारभते न दीर्घ

कालस्थस्यापि विनाशस्तस्यास्तीत्यर्थः। जिज्ञासुरपि योगस्य स्वरूपं ज्ञातुमिच्छन्योगमार्गे प्रवृत्तः संन्यासी योगभ्रष्टः सामर्थ्यात्सोऽपि शब्दब्रह्म वेदोक्तकर्मानुष्ठानफलमतिवर्ततेऽपाकरिष्यति किमुत बुद्ध्वा यो योगं तन्निष्ठोऽभ्यासं कुर्यात्॥४४॥

कुतश्च योगित्वं श्रेय इति—

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम्॥ ४५॥

प्रयत्नाद्यतमानोऽधिकं यतमान इत्यर्थः। तत्र योगी विद्वान्संशुद्धकिल्बिषो विशुद्धकिल्बिषः संशुद्धपापोऽनेकेषु जन्मसु किंचित्किंचित्संस्कारजातमुपचित्य तेनोपचितेनानेकजन्मकृतेन संसिद्धोऽनेकजन्मसंसिद्धस्ततो लब्धसम्यग्दर्शनः सन्याति परां प्रकृष्टां गतिम्॥ ४५॥

यस्मादेवं तस्मात्—

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन॥ ४६॥

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि, ज्ञानमत्र शास्त्रपाण्डित्यं तद्वद्भ्योऽपि मतो ज्ञातोऽधिकः श्रेष्ठ इति कर्मिभ्योऽग्निहोत्रादि कर्म तद्वद्भ्योऽधिको योगी विशिष्टो यस्मात्तस्माद्योगी भवार्जुन॥ ४६॥

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।
श्रद्धावान्भजते यो मां स मे युक्ततमो मतः॥ ४७॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्म-
पर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे ध्यानयोगो नाम षष्ठोऽध्यायः॥६॥

योगिनामपीति। योगिनामपि सर्वेषां रुद्रादित्यादिध्यानपराणां मध्ये मद्गतेन मयि वासुदेवे समाहितेनान्तरात्मनाऽन्तःकरणेन श्रद्धावाञ्छ्रद्दधानः सन्भजते सेवते यो मां स मे मम युक्ततमोऽतिशयेन युक्तो मतोऽभिप्रेत इति॥ ४७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकर-
भगवतः कृतौ श्रीभगवद्गीताभाष्येऽभ्यासयोगो नाम षष्ठोऽध्यायः॥६॥

# अथ सप्तमोऽध्यायः ।

" योगिनामपि सर्वेषां मद्गतेनान्तरात्मना । श्रद्धावान्भजते यो मां स मे युक्ततमो मत ॥ ' ( Bha. Gī. VI. 47 ) इति प्रश्नबीजमुपन्यस्य स्वयमेवेदृग्मदीयं तत्त्वमेव मद्गतान्तरात्मा स्यादित्येतद्विवक्षु—

श्रीभगवानुवाच—

मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।

असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥

मयि वक्ष्यमाणविशेषणे परमेश्वरे आसक्तं मनो यस्य स मय्यासक्तमना हे पार्थ योगं युञ्जन् मनःसमाधानं कुर्वन् मदाश्रयोऽहमेव परमेश्वर आश्रयो यस्य स मदाश्रयो यो हि कश्चित्पुरुषार्थेन केनचिदर्थी भवति स तत्साधनं कर्माग्निहोत्रादि तपो दानं वा किंचिदाश्रयं प्रतिपद्यतेऽयं तु योगी मामेवाश्रयं प्रतिपद्यते हित्वान्यत्साधनान्तरं मय्येवासक्तमना भवति । यस्त्वमेवंभूतः सन्नसंशयं समग्रं समस्तं विभूतिबलशक्त्यैश्वर्यादिगुणसंपन्नं मां यथा येन प्रकारेण ज्ञास्यसि संशयमन्तरेणैवमेव भगवानिति तच्छृणूच्यमानं मया ॥ १ ॥

तच्च मद्विषयम्—

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।

यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥

ज्ञानं ते तुभ्यमहं सविज्ञानं विज्ञानसहितं स्वानुभवसंयुक्तमिदं वक्ष्यामि कथयिष्याम्यशेषतः कार्त्स्न्येन । तज्ज्ञानं विवक्षितं स्तौति श्रोतुरभिमुखीकरणाय । यज्ज्ञात्वा यज्ज्ञानं ज्ञात्वा नेह भूयः पुनर्ज्ञातव्यं पुरुषार्थसाधनमवशिष्यते नावशेषो भवतीति मत्तत्त्वज्ञो यः स सर्वज्ञो भवतीत्यर्थः ॥ २ ॥

* अतो विशिष्टफलत्वाद्दुर्लभं ज्ञानम् कथमित्युच्यते—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।

यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥

* ASS, VPP and POA take अतो ... ज्ञानम् in शां भा on v 2

मनुष्याणां मध्ये सहस्रेष्वनेकेषु कश्चिद्यतति प्रयत्नं करोति सिद्धये सिद्ध्यर्थम् तेषां यततामपि सिद्धानां सिद्धा एव हि ते ये मोक्षाय यतन्ते तेषां कश्चिदेव मां वेत्ति तत्त्वतो यथावत् ॥ ३ ॥

श्रोतारं प्ररोचनेनाभिमुखीकृत्याह—

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥

भूमिरिति पृथिवीतन्मात्रमुच्यते न स्थूला 'भिन्ना प्रकृतिरष्टधा' इति वचनात् । तथावादयोऽपि तन्मात्राण्येवोच्यन्ते । आपोऽनलो वायुः खं मन इति मनसः कारणमहंकारो गृह्यते । बुद्धिरित्यहंकारकारणं महत्तत्त्वम् । अहंकार इत्यविद्यासंयुक्तमव्यक्तम् । यथा विषमयुक्तमन्नं विषमुच्यत एवमहंकारवासनावदव्यक्तं मूलकारणमहंकार इत्युच्यते प्रवर्तकत्वादहंकारस्य । अहंकार एव हि सर्वस्य प्रवृत्तिबीजं दृष्टं लोके । इतीयं यथोक्ता प्रकृतिर्मे ममैश्वरी मायाशक्तिरष्टधा भिन्ना भेदमागता ॥ ४ ॥

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥

अपरेति । अपरा न परा निकृष्टाशुद्धानर्थकरी संसारबन्धनात्मिकेयमितोऽस्या यथोक्तायास्त्वन्यां विशुद्धां प्रकृतिं ममात्मभूतां विद्धि मे परां प्रकृष्टां जीवभूतां क्षेत्रज्ञलक्षणां प्राणधारणनिमित्तभूतां हे महाबाहो यया प्रकृत्येदं धार्यते जगदन्तःप्रविष्टया ॥ ५ ॥

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥

एतदिति । एतद्योनीन्येते परापरे क्षेत्रक्षेत्रज्ञलक्षणे प्रकृती योनिर्येषां भूतानां तान्येतद्योनीनि भूतानि सर्वाणीत्येवमुपधारय जानीहि । यस्मान्मम प्रकृती योनिः कारणं सर्वभूतानामतोऽहं कृत्स्नस्य समस्तस्य जगतः प्रभव उत्पत्तिः प्रलयो विनाशस्तथा प्रकृतिद्वयद्वारेणाहं सर्वज्ञ ईश्वरो जगतः कारणमित्यर्थः ॥ ६ ॥

यतस्तस्मात्—

मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥

मत्तः परमेश्वरात्परतरमन्यत्कारणान्तरं किंचिन्नास्ति न विद्यतेऽहमेव जगत्कारणमित्यर्थः । हे धनंजय यस्मादेवं तस्मान्मयि परमेश्वरे सर्वाणि भूतानि सर्वमिदं

जगत्प्रोतमनुस्यूतमनुगतमनुविद्धं ग्रथितमित्यर्थः । दीर्घतन्तुषु पटवत्सूत्रे च मणिगणा इव ॥ ७ ॥

केन केन धर्मेण विशिष्टे त्वयि सर्वमिदं प्रोतमित्युच्यते—

रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः ।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥

रसोऽहमपां यः सारः स रसस्तस्मिन्रसभूते मय्यापः प्रोता इत्यर्थः । एवं सर्वत्र । यथाहमप्सु रस एवं प्रभास्मि शशिसूर्ययोः । प्रणव ओंकारः सर्ववेदेषु तस्मिन्प्रणवभूते मयि सर्वे वेदाः प्रोताः । तथा खे आकाशे शब्दः सारभूतस्तस्मिन्मयि खं प्रोतम् । तथा पौरुषं पुरुषस्य भावो यतः पुंबुद्धिर्नृषु तस्मिन्मयि पुरुषाः प्रोताः ॥ ८ ॥

पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥

पुण्य इति । पुण्यः सुरभिर्गन्धः पृथिव्यां चाहं तस्मिन्मयि गन्धभूते पृथिवी प्रोता । पुण्यत्वं गन्धस्य स्वभावत एव पृथिव्यां दर्शितमबादिषु रसादेः पुण्यत्वोपलक्षणार्थम् । अपुण्यत्वं तु गन्धादीनामविद्याधर्माद्यपेक्षं संसारिणां भूतविशेषसंसर्गनिमित्तं भवति । तेजो दीप्तिश्चास्मि विभावसावग्नौ । तथा जीवनं सर्वभूतेषु येन जीवन्ति सर्वाणि भूतानि तज्जीवनम् । तपश्चास्मि तपस्विषु तस्मिंस्तपसि मयि तपस्विनः प्रोताः ॥ ९ ॥

बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥

बीजमिति । बीजं प्ररोहकारणं मां विद्धि सर्वभूतानां हे पार्थ सनातनं चिरंतनम् । किंच बुद्धिर्विवेकशक्तिरन्तःकरणस्य बुद्धिमतां विवेकशक्तिमतामस्मि तेजः प्रागल्भ्यं तद्वतां तेजस्विनामहम् ॥ १० ॥

बलं बलवतां चाहं कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥

बलमिति । बलं सामर्थ्यमोजो बलवतामहम् । तच्च बलं कामरागविवर्जितं कामश्च रागश्च कामरागौ कामस्तृष्णासंनिकृष्टेषु विषयेषु रागो रञ्जना प्राप्तेषु विषयेषु ताभ्यां विवर्जितं देहादिधारणमात्रार्थं बलमहमस्मि न तु यत्संसारिणां तृष्णारागकारणम् । किं च धर्माविरुद्धो धर्मेण शास्त्रार्थेनाविरुद्धो यः प्राणिषु भूतेषु कामो यथा देहधारणमात्राद्यर्थोऽशनपानादिविषयः कामोऽस्मि हे भरतर्षभ ॥ ११ ॥

# त्रयोदशोऽध्यायः ।

सप्तमेऽध्याये सूचिते द्वे प्रकृती ईश्वरस्य त्रिगुणात्मिकाऽष्टधा भिन्नाऽपरा संसारहेतुत्वात्परा चान्या जीवभूता क्षेत्रज्ञलक्षणेश्वरात्मिका याभ्यां प्रकृतिभ्यामीश्वरो जगदुत्पत्तिस्थितिलयहेतुत्वं प्रतिपद्यते । तत्र क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयनिरूपणद्वारेण तद्वत ईश्वरस्य तत्त्वनिर्धारणार्थं क्षेत्राध्याय आरभ्यते । अतीतानन्तराध्याये चाद्वेष्टा सर्वभूतानामित्यादिना यावदध्यायपरिसमाप्तिस्तावत्तत्त्वज्ञानिनां संन्यासिनां निष्ठा यथा ते वर्तन्त इत्येतदुक्तम् । केन पुनस्ते तत्त्वज्ञानेन युक्ता यथोक्तधर्माचरणाद्भगवतः प्रिया भवन्तीत्येवमर्थश्चायमध्याय आरभ्यते । प्रकृतिश्च त्रिगुणात्मिका सर्वकार्यकरणविषयाकारेण परिणता पुरुषस्य भोगापवर्गार्थकर्तव्यतया देहेन्द्रियाद्याकारेण संहन्यते । सोऽयं संघात इदं शरीरं तदेतत्—

श्रीभगवानुवाच—

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १ ॥

इदमिति सर्वनाम्नोक्तं विशिनष्टि शरीरमिति । हे कौन्तेय क्षतत्राणात्क्षयात्क्षरणात्क्षेत्रवद्वाऽस्मिन्कर्मफलनिर्वृत्तेः क्षेत्रमिति । इतिशब्द एवंशब्दपदार्थकः क्षेत्रमित्येवमभिधीयते कथ्यते । एतच्छरीरं क्षेत्रं यो वेत्ति विजानात्यापादतलमस्तकं ज्ञानेन विषयीकरोति स्वाभाविकेनौपदेशिकेन वा वेदनेन विषयीकरोति विभागशस्तं वेदितारं प्राहुः कथयन्ति क्षेत्रज्ञ इति । इतिशब्द एवंशब्दपदार्थक एव पूर्ववत्क्षेत्रज्ञ इत्येवमाहुः । के, तद्विदस्तौ क्षेत्रक्षेत्रज्ञौ ये विदन्ति ते तद्विदः ॥ १ ॥

एवं क्षेत्रक्षेत्रज्ञावुक्तौ किमेतावन्मात्रेण ज्ञानेन ज्ञातव्याविति, नेत्युच्यते—

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥

क्षेत्रज्ञं यथोक्तलक्षणं चापि मां परमेश्वरमसंसारिणं विद्धि जानीहि । सर्वक्षेत्रेषु यः क्षेत्रज्ञो ब्रह्मादिस्तम्बपर्यन्तानेकक्षेत्रोपाधिप्रविभक्तस्तं निरस्तसर्वोपाधिभेदं सदसदादिशब्दप्रत्ययागोचरं विद्धीत्यभिप्रायः । हे भारत यस्मात्क्षेत्रक्षेत्रज्ञेश्वरयाथात्म्य-

व्यतिरेकेण न ज्ञानगोचरमन्यदवशिष्टमस्ति तस्मात्क्षेत्रक्षेत्रज्ञयोर्ज्ञेयभूतयोर्यज्ज्ञानं क्षेत्रक्षेत्रज्ञौ येन ज्ञानेन विषयीक्रियेते तज्ज्ञानं सम्यग्ज्ञानमिति मतमभिप्रायो ममेश्वरस्य विष्णोः ॥

ननु* सर्वक्षेत्रेष्वेक एवेश्वरो नान्यस्तद्व्यतिरिक्तो भोक्ता विद्यते चेत्तत ईश्वरस्य संसारित्वं प्राप्तमीश्वरव्यतिरेकेण वा संसारिणोऽन्यस्याभावात्संसाराभावप्रसङ्गस्तच्चोभयमनिष्टं बन्धमोक्षतद्धेतुशास्त्रानर्थक्यप्रसङ्गात्प्रत्यक्षादिप्रमाणविरोधाच्च । प्रत्यक्षेण तावत्सुखदुःखतद्धेतुलक्षणः संसार उपलभ्यते । जगद्वैचित्र्योपलब्धेश्च धर्माधर्मनिमित्तः संसारोऽनुमीयते । सर्वमेतदनुपपन्नमात्मेश्वरैकत्वे ।

न—

I (i) ज्ञानाज्ञानयोरन्यत्वेनोपपत्तेः । दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ( Katha Upa II 4 ) । तथा च तयोर्विद्याविद्याविषययोः फलभेदोऽपि विरुद्धो निर्दिष्टः श्रेयश्च प्रेयश्चेति । विद्याविषयः श्रेयः प्रेयस्त्वविद्याकार्यमिति । तथा च व्यासः—' द्वाविमावथ पन्थानौ ' ( Mbh XII. 240 6 ) इत्यादि इमौ द्वावेव पन्थानावित्यादि च । इह च द्वे निष्ठे उक्ते ।

(ii) अविद्या च सह कार्येण विद्यया हातव्येति श्रुतिस्मृतिन्यायेभ्योऽवगम्यते । (a) श्रुतयस्तावत्—' इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः ' ( Katha Upa II 5 ), तमेव विदित्वामृत इह भवति, नान्यः पन्था विद्यतेऽयनाय ( Sve Upa. III 8 ), विद्वान्न बिभेति कुतश्चन ( Tai. Upa. II. 4 ), अविदुषस्तु—अथ तस्य भयं भवति ( Tai Upa II. 7 ), अविद्याया-

---

*Sankara introduces a Pūrvapakṣa in order to explain his doctrine of the indentity of the Jīva and Brahman.

Opposition—' Indentity of Jīva and Brahman ' will lead to (1) God Himself being the Jīva or (2) there being no Jīva ( संसाराभाव ) and these will in their turn lead to (3) the *Uselessness* of the Scripture and (4) Inconsistency with *Perception*, *Inference*, etc.

Proposition—Our Doctrine can be proved, because

I (i) Knowledge is different from Ignorance; and

(ii) Ignorance and its Effect ( the idea of the soul in transmigration, etc ) *are to be abandoned*; [ and the Knowledge ( that whatever is is Braman alone ) is *to be* accepted ]

[ (i) Katha Upa. II. 4; MBh. XII. 214. 6; Gita

(ii) (a) Śrutis ( Katha ; Śve. etc. ]; (b) Smṛtis

मन्तरे वर्तमानाः ( Katha Upa. II. 5 ), ब्रह्म वेद ब्रह्मैव भवति. ( Mu. Upa. III. 2. 9 ), अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम् ( Bṛ. Upa. I. 4. 10 ), आत्मवित्तः स इदं सर्वं भवति ( Ibid ), यदा चर्मवत् ( Śve. Upa. VI. 20 ) इत्याद्याः सहस्रशः। (b) स्मृतयश्च— ' अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ' ( V. 15 ), ' इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ' ( V. 19 ), ' समं पश्यन्हि सर्वत्र ' ( XIII. 28 ) इत्याद्याः।

(c) न्यायतश्च—सर्पान्कुशाग्राणि तथोदपानं ज्ञात्वा मनुष्याः परिवर्जयन्ति ।
अज्ञानतस्तत्र पतन्ति केचिज्ज्ञाने फलं पश्य यथा विशिष्टम् ॥
( MBh. XII. 201. 16 )

तथा च देहादिष्वात्मबुद्धिरविद्यावान्रागद्वेषादिप्रयुक्तो धर्माधर्मानुष्ठानकृज्जायते म्रियते चेत्यवगम्यते देहादिव्यतिरिक्तात्मदर्शिनो रागद्वेषादिप्रहाणापेक्षधर्माधर्मप्रवृत्त्युपशमान्मुच्यन्त इति न केनचित्प्रत्याख्यातुं शक्यं न्यायतः । तत्रैवं सति क्षेत्रज्ञस्येश्वरस्यैव सतोऽविद्याकृतोपाधिभेदतः संसारित्वमिव भवति ।

II यथा देहाद्यात्मत्वमात्मनः । सर्वजन्तूनां हि प्रसिद्धो देहादिष्वनात्मस्वात्मभावो

---

(c) Illustration ( nyāya ). viz., MBh. XII. 201. 16 ]

Conclusion; Kṣetrajña remains as God and yet He becomes the Jīva ( samsārin ) as it were (iva) due to a particular limitation ( उपाधि ), caused to Him by Ignorance ( अविद्या ).

II God becoming Jīva is like the soul taking the body, etc. to be he himself. This error of the soul is known as a fact to all and is due to Ignorance. The soul identifying himself with the body, etc., is like a man taking a pillar to be a human being.

Opposition—The two are cases unlike each other. In the Illustration the Pillar and the Puruṣa ( human being for which the Pillar is mistaken ) are both objects of perception ( ज्ञेय ); but in the Illustrated, the body alone is an object of perception ( ज्ञेय ) while the soul ( for which the body is mistaken) is the subject preceiving ( ज्ञातृ ); in the former a third person who is the perceiver identifies the Pillar and the Puruṣa, but in the latter the perceiver and the perceived are identified with each other. Hence, in the latter, we may conclude that the characte-

हि दृष्टान्तदार्ष्टान्तिकयोः साधर्म्यं विवक्षितम् । तत्र व्यभिचरति । (b) यत्तु ज्ञातरि व्यभिचरतीति मन्यसे तस्याप्यनैकान्तिकत्वं दर्शितं जरादिभिः ।

III पूर्वपक्षः–अविद्यावत्त्वात्क्षेत्रज्ञस्य संसारित्वमिति चेत् ।

सिद्धान्तः—न, (i) अविद्यायास्तामसत्वात् । तामसो हि प्रत्यय आवरणात्म-

---

but is through error (avidyā) attributed to the soul, the preceiver (jñātr); and that, for that reason, the soul is not at all stained by old age, etc. If we, then, apply the Illustration to the Illustrated, the Lord though present in all bodies will not in the least be samsārin.

(ii) The Pūrvapaksa's argument that the two cases are not like each other is also wrong (असत्). (a) The error of mistaking one (the Pillar, the body) for the other (the Purusa, the soul)—technically known as *adhyāsa* is the invariable point of similarity (sādharmya) between the two cases and that *sādharmya* only is meant by us when we say that the case of the Pillar and the Purusa illustrates the case of the body and the soul. (b) The opponent has also argued that in the Illustrated (दार्ष्टान्तिक), some attributes of the body, *viz.*, सुख, दुःख, मोह, इच्छा, do come to belong to the soul by some unknown way. But we have shown that this is not a fact (अनैकान्तिक = not an absolute truth), since old age, death, etc., belong to the body but never happen to belong to the soul; if some attributes of the body belong to the soul, why should other attributes of the same also not belong to him?

III. Opposition—God, in so far as He possesses Ignorance (as His limitation, उपाधि), (gets old age, death, etc. and thus) experiences a mundane existence (samsāra).

Proposition—What is the nature of Ignorance?

(i) Firstly, Ignorance is of the nature of Darkness (*tamas*) Just as Darkness disappears at the arrival of Light (प्रकाश), so Ignorance (avidyā) disappears at the approach of (light in the form of) discrimination

कत्वादविद्या ( a ) विपरीतग्राहकः ( b ) संशयोपस्थापको ( c ) वाग्रहणात्मको वा । विवेकप्रकाशभावे तदभावात् । तामसे चावरणात्मके तिमिरादिदोषे सत्य-ग्रहणादेरविद्यात्रयस्योपलब्धेः । ( ii ) पू०-अत्राहैव तर्हि ज्ञातृधर्मोऽविद्या । मि०-न, करणे चक्षुषि तैमिरिकत्वादिदोषोपलब्धेः । पू०-यत्तु मन्यसे " ज्ञातृधर्मोऽविद्या तदेव चाविद्याधर्मवत्त्वं क्षेत्रज्ञस्य संसारित्वम् । तत्र यदुक्तमीश्वर एव क्षेत्रज्ञो न संसारीत्येतदयुक्तमिति, " मि०-तन्न, यथा करणे चक्षुषि विपरीतग्राहकादिदोषस्य दर्शनात्र विपरीतादिग्रहणं तन्निमित्तो वा तैमिरिकत्वादिदोषो ग्रहीतुः । चक्षुषः संस्कारेण तिमिरेऽपनीते ग्रहीतुरदर्शनान्न ग्रहीतुर्धर्मो यथा तथा सर्वत्रैवाग्रहणविपरीतसंशयप्रत्ययास्तन्निमित्ताः करणस्यैव कस्यचिद्भवितुमर्हन्ति न ज्ञातुः क्षेत्रज्ञस्य । ( iii ) संवेद्यत्वाच्च तेषां प्रदीपप्रकाशवन्न ज्ञातृधर्मत्वम् । संवेद्यत्वादेव स्वात्मव्यतिरिक्तसंवेद्यत्वम् ।

---

(*viveka*). And Ignorance is three-fold, *viz*., (a) non-perception ( अग्रहण ), ( b ) a doubt ( संशय )=a perception cognizing a doubt, and (c) a wrong perception ( विपरीत ग्रहण ). Any of these three cognitions becomes possible only when the defect in the form of a cataract (*timira*) etc. exists; and *timira* is of the nature of āvarana 'covering or concealing (the fact)' which, in its turn, is *tāmasa* 'of the nature of Darkness.' (ii) Though Ignorance is a non-perception, a doubt and a wrong perception, the opponent may argue that in so far as It is a kind of perception, It is a characteristic of the Perceiver ( ज्ञातृधर्म ). The Siddhāntin would retort that the defect or disease of 'being possessed of a cataract' (*taimirikatva*) is found to be in the eye which is a sense or an instrument (karana) with which a perceiver perceives.........If by the application of a medicine to the eye (or by an operation of the eye) the cataract be removed, the perceiver will no longer exist and hence the Ignorance is not an attribute of the Perceiver. In the same way the cognitions of non-perception, wrong perception and doubt in all things due to the Ignorance should belong to the instrument only whatever that instrument may be, but not to the Perceiver the Ksetrajña. (iii) Thirdly, as these cognitions are themselves cognizable (*samvedya*) like the light of a lamp, they are (only ज्ञेय and ) no attributes

( iv ) सर्वकरणवियोगे च कैवल्ये सर्ववादिभिरविद्यादिदोषवत्त्वानभ्युपगमात् । आत्मनो यदि क्षेत्रज्ञस्यान्युष्णवत्त्वो धर्मस्ततो न कदाचिदपि तेन वियोगः स्यात् । ( v ) अविक्रियस्य च व्योमवत्सर्वगतस्यामूर्तस्यात्मनः केनचित्संयोगवियोगानुपपत्तेः सिद्धं क्षेत्रज्ञस्य नित्यमेवेश्वरत्वम् । ( vi ) अनादित्वान्निर्गुणत्वादित्यादीश्वरवचनाच्च ।

IV.—पूर्वपक्षः— नन्वेवं सति संसारसंसारित्वाभावे शास्त्रानर्थक्यादिदोषः स्यादिति ।

सिद्धान्तः—न, ( i ) सर्वैरभ्युपगतत्वात् । सर्वैरात्मवादिभिरभ्युपगतो दोषो नैकेन परिहर्तव्यो भवति । कथमभ्युपगत इति, मुक्तात्मनां संसारसंसारित्वव्यवहाराभावः सर्वैरेवात्मवादिभिरिष्यते । न च तेषां शास्त्रानर्थक्यादिदोषप्राप्तिरभ्युपगता । तथा नः क्षेत्रज्ञानामीश्वरैकत्वे सति शास्त्रानर्थक्यं भवतु, अविद्याविषये चार्थवत्त्वम् । यथा द्वैतिनां सर्वेषां बन्धावस्थायामेव शास्त्राद्यर्थवत्त्वं न मुक्तावस्थायामेवम्। नन्वात्मनो बन्धमुक्तावस्थे परमार्थत एव वस्तुभूते द्वैतिनां नः सर्वेषामतो हेयोपादेयतत्साधनसद्भावे शास्त्राद्यर्थवत्त्वं स्यादद्वैतिनां पुनर्द्वैतस्यापरमार्थत्वादविद्याकृतत्वाद्बन्धावस्थायाश्चाऽऽत्मनोऽपरमार्थत्वे निर्विषयत्वाच्छास्त्राद्यानर्थक्यमिति चेत् । न,

---

of the cognizer ( ज्ञातृ ). (iv) Fourthly, the followers of all Schools of Philosophy assume that when the soul is in isolation (i. e, free from all instruments or senses), he is free from all defects in the form of the Ignorance. (v) Fifthly, as the soul is by nature omnipresent, and bodiless like the Ether, he cannot really come into contact with, or be separated from, anything including even the Avidyā. (vi) Also because of the Lord's words that the soul is beginningless and attributeless (nirguna), avidyā cannot be his attribute.

Hence the eternal Lordship of the Ksetrajña ( meaning that He is never the soul in the bondage ) is proved.

IV Opposition—If so, the Scripture, dealing with transmigration and the soul undergoing it, will be meaningless (and useless)

Proposition—The fault (dosa) does not arise because,

(i) All Schools believing in the existence of the soul have to answer or to admit that fault. The dualists believe that the Scripture is useless to the liberated souls

आत्मनोऽवस्थाभेदानुपपत्तेः । यदि तावदात्मनो बन्धमुक्तावस्थे युगपत्स्यातां क्रमेण वा । युगपत्तावद्विरोधान्न सम्भवतः स्थितिगती इवैकस्मिन् । क्रमभावित्वे च निर्निमित्तत्वेऽनिर्मोक्षप्रसङ्गोऽन्यनिमित्तत्वे च **स्वतोऽभावादपरमार्थत्वप्रसङ्गः** । तथा च सत्यभ्युपगमहानिः । किञ्च बन्धमुक्तावस्थयोः पौर्वापर्यनिरूपणायां बन्धावस्था पूर्वं प्रकल्प्यानादिमत्यन्तवती च तच्च प्रमाणविरुद्धं तथा मोक्षावस्थादिमत्यनन्ता च प्रमाणविरुद्धैवाभ्युपगम्यते । न चावस्थावतोऽवस्थान्तरं गच्छतो नित्यत्वमुपपादयितुं शक्यम् । अथानित्यत्वदोषपरिहाराय बन्धमुक्तावस्थाभेदो न कल्प्यतेऽतो द्वैतिनामपि **शास्त्रानर्थक्यादिदोषोऽपरिहार्य एवेति समानत्वान्नाद्वैतवादिना परिहर्तव्यो दोषः ।**

( ii ) **न च शास्त्रानर्थक्यं ( a ) यथाप्रसिद्धाविद्वत्पुरुषविषयत्वाच्छास्त्रस्य** । अविदुषा हि फलहेत्वोरनात्मनोरात्मदर्शनम्, न विदुषः । विदुषां हि फलहेतुभ्यामात्मनोऽन्यत्वदर्शने सति तयोरहमित्यात्मदर्शनानुपपत्तेः । न अत्यन्तमूढ उन्मत्तादिरपि जलाग्न्योश्छायाप्रकाशयोर्वैकात्म्यं पश्यति किमुत विवेकी । अत्यन्तमूढ उन्मत्तादिरपि जलाग्न्योश्छायाप्रकाशयोर्वैकात्म्यं पश्यति किमुत विवेकी । न हि तस्मान्न विधिप्रतिषेधशास्त्रं तावत्फलहेतुभ्यामात्मनोऽन्यत्वदर्शिनो भवति । न हि देवदत्त त्वमिदं कुर्विति कस्मिंश्चित्कर्मणि नियुक्ते विष्णुमित्रोऽहं नियुक्त इति तत्रस्थो

---

and useful to the bound ones We, non-dualists, hold that the souls identifying themselves with God do not need the Scripture, but those in Ignorance require it. The belief of the dualists that the soul really passes through the stages of ( real ) bondage and liberation, is a wrong belief and therefore that belief cannot support the dualists. [If the soul be eternal ( nitya ), he cannot be subject to real states of liberation and bondage If the dualist admits that these states are not real, he will have to admit that the Scripture is not really useful to anybody So, he has the same dosa as we ]

(ii) Nor is the Scripture really useless, because (a) it is meant for an ignorant man, as is very well known The Scripture meant here lays down certain injunctions and prohibitions for certain rewards and their means. It is the ignorant who look upon these rewards and means as their own self. The wise do not. So, the Scripture applies to the ignorant [The wise sage also as long as he was in ignorance looks upon the rewards and means as his own self and so in that stage of ignorance the

नियोगं शृण्वन्नपि प्रतिपद्यते । नियोगविषयविवेकाग्रहणात्तूपपद्यते प्रतिपत्तिस्तथा फलहेत्वोरपि । ननु प्राकृतसम्बन्धापेक्षया युक्तैव प्रतिपत्ति शास्त्रार्थविषया फलहेतु द्वयामन्यात्मत्वदर्शनेऽपि सताष्टफलहेतौ प्रवर्तितोऽस्म्यनिष्टफलहेतोश्च निवर्तितोऽस्मीति । यथा पितृपुत्रादीनामितरेतरात्मान्यत्वदर्शने सत्यप्यन्योन्यनियोगप्रतिषेधार्थप्रतिपत्ति । न व्यतिरिक्तात्मदर्शनप्रतिपत्तेः प्रागेव फलहेत्वोरात्माभिमानस्य सिद्धत्वात् । प्रतिपन्ननियोगप्रतिषेधार्थो हि फलहेतुभ्यामात्मनोऽन्यत्वं प्रतिपद्यते न पूर्वं तस्मा द्विधिप्रतिषेधशास्त्रमविद्वद्विषयमिति सिद्धम् । (b) ननु स्वर्गकामो यजेत कलञ्ज न भक्षयेदित्यादावात्मव्यतिरेकदर्शिनामप्रवृत्तौ केवलदेहाद्यात्मदृष्टीनां च । अत कर्तुरभावाच्छास्त्रानर्थक्यमिति चेत् । न, यथाप्रसिद्धित एव प्रवृत्तिनिवृत्त्युपपत्ते । ईश्वरक्षेत्रज्ञैकत्वदर्शी ब्रह्मवित्तावन्न प्रवर्तते । तथा नैरात्म्यवाद्यपि नास्ति परलोक इति न प्रवर्तते । यथाप्रसिद्धितस्तु विधिप्रतिषेधशास्त्रश्रवणान्यथानुपपत्त्याऽनुमिता त्मास्तित्व आत्मविशेषानभिज्ञ कर्मफलसञ्जाततृष्ण श्रद्दधानतया च प्रवर्तत इति सर्वेषां न प्रत्यक्षमतो न शास्त्रानर्थक्यम् । (c)-पू०-विवेकिनामप्रवृत्तिदर्शनात्तदनु गामिनामप्रवृत्तौ शास्त्रानर्थक्यमिति चेत् । सि०-न, कस्यचिदेव विवेकोपपत्ते । अनेकेषु हि प्राणिषु कश्चिदेव विवेकी स्याद्यथेदानीम् । न च विवेकिनमनुवर्तन्ते मूढा रागादिदोषतन्त्रत्वात्प्रवृत्ते, अभिचरणादौ च प्रवृत्तिदर्शनात्, स्वाभाव्याच्च प्रवृत्ते स्वभावस्तु प्रवर्तत इति ह्युक्तम् । तस्मादविद्यामात्र संसारो यथादृष्टविषय एव । न क्षेत्रज्ञस्य केवलस्याविद्या तत्कार्यं च । न च मिथ्याज्ञान परमार्थवस्तु दूषयितुं समर्थम् । न ह्यूषरदेशं स्नेहेन पङ्कीकर्तुं शक्नोति

Scripture is useful to him also ] (b) By the " ignorant " is not meant a *nairatmyavadin* who believes that there is no Atman except the body, but it means one who believes in the existence of the Atman without knowing his real nature (c) Though the sage ' who knows the real nature of Atman ( *vivekin* ) will not be prompted to act by the Scripture such sages are rare and people at large being foolish ( = ignorant ) do not follow the example of a sage for several reasons, *e g*, attachment and hatred cause activity, people practise Black Magic, activity is but natural [ So, we may conclude that mundane life is the Ignorance itself and the Ksetrajña has nothing to do with the Ignorance and its effect ( the world ) We may here add that Ignorance or False Knowledge on the part of the soul who is really identical with God cannot stain the real nature of the soul. ]

मरीच्युदकं तथाविद्या क्षेत्रज्ञस्य न किंचित्कर्तुं शक्नोति । अतश्चेदमुक्तं 'क्षेत्रज्ञं
चापि मां विद्धि' (XIII 2) 'अज्ञानेनावृतं ज्ञानम्' (V. 15) इति च । (d) पू०-
अथ किमिदं संसारिणामिवाहमेव ममैवेदमिति पण्डितानामपि । सि०- शृणु इदं
तत्पाण्डित्यं यत्क्षेत्र एवात्मदर्शनम् । यदि पुनः क्षेत्रज्ञमविक्रियं पश्येयुस्ततो न भोग
कर्म वाकाङ्क्षेयुर्मम स्यादिति । विक्रियैव भोगकर्मणी । अथैवं सति फलार्थित्वाद-
विद्वान्प्रवर्तते । विदुषः पुनरविक्रियात्मदर्शिनः फलार्थित्वाभावात्प्रवृत्त्यनुपपत्तौ कार्य-
करणसंघातव्यापारोपरमे निवृत्तिरुपचर्यते । इदं चान्यत्पाण्डित्यं कस्यचिदस्तु
क्षेत्रज्ञ ईश्वर एव क्षेत्रं चान्यत्क्षेत्रज्ञस्य विषयः । अहं तु संसारी सुखी
दुःखी च । संसारोपरमश्च मम कर्तव्यः क्षेत्रक्षेत्रज्ञविज्ञानेन ध्यानेन चेश्वरं क्षेत्रज्ञं
साक्षात्कृत्वा तत्स्वरूपावस्थानेनेति । यश्चैवं बुध्यते यश्च बोधयति नासौ क्षेत्रज्ञ इति ।
एवं मन्वानो यः स पण्डितापसदः संसारमोक्षयोः शास्त्रस्य चार्थवत्त्वं करोमीति ।
आत्महा स्वयं मूढोऽन्यांश्च व्यामोहयति शास्त्रार्थसंप्रदायरहितत्वाच्छ्रुतहानिमश्रुत
कल्पनां च कुर्वन् । तस्मादसंप्रदायवित्सर्वशास्त्रविदपि मूर्खवदेवोपेक्षणीयः ।

V. पूर्वपक्षः–यत्तूक्तमीश्वरस्य क्षेत्रज्ञैकत्वे संसारित्वं प्राप्नोति क्षेत्रज्ञानां
चेश्वरैकत्वे संसारिणोऽभावात्संसाराभावप्रसङ्ग इति ।

सिद्धान्तः–(i) एतौ दोषौ प्रत्युक्तौ विद्याविद्ययोर्वैलक्षण्याभ्युपगमादिति । कथम् ।

---

(d) The opponent may say that the notions of 'I am thus (अहमेवम्)' and 'This is mine (मम इदम्)' are common to both the Ignorant (संसारिन्) and to the wise (पण्डित) The reply of the Siddhāntin is that the really wise sage must be distinguished from the pseudo-wise. The latter may know (verbally) all Scriptures but he must be neglected; because he does not know their traditional interpretation (संप्रदाय) The really wise sage has no notions of मम इदम् and अहमेवम्.

V. Now we shall consider the two arguments of the Opponent, viz, (1) God being identical with the Kṣetrajña will become the soul in bondage, and (2) souls in bondage being one with God, there will be no really bound soul (संसारिन्), and hence no mundane existence

(i) Our reply to (1) is that God will not be stained by any defect imagined or assumed through the Ignorance. Our reply to (2) is that the mundane life and one living that life can be explained to be imagined by Ignorance

अविद्यापरिकल्पितदोषेण तद्विषयं वस्तु पारमार्थिकं न दुष्यतीति। तथा च दृष्टान्तो दर्शितो मरीच्यम्भसोषरदेशो न पङ्का क्रियत इति। संसारिणोऽभावात्संसारा. भावप्रसङ्गदोषोऽपि संसारसंसारिणोरविद्याकल्पितत्वोपपत्त्या प्रत्युक्त।

(ii) पू०—नन्वविद्यावत्त्वमेव क्षेत्रज्ञस्य संसारित्वदोषस्तत्कृत च दु खित्वादि प्रत्यक्षमुपलभ्यते।

सि०—न, ज्ञेयस्य क्षेत्रज्ञधर्मत्वाज्ज्ञातु· क्षेत्रज्ञस्य तत्कृतदोषानुपपत्ते। यावत्किंचित्क्षेत्रज्ञस्य दोषजातमविद्यमानमासञ्जयसि तस्य ज्ञेयत्वोपपत्ते क्षेत्रधर्मत्वमेव, न क्षेत्रज्ञधर्मत्वम्। न च तेन क्षेत्रज्ञो दुष्यति ज्ञेयेन ज्ञातु संसर्गानुपपत्ते.। यदि हि संसर्ग स्याज्ज्ञेयत्वमेव नोपपद्येत। यद्यात्मनो धर्मोऽविद्यावत्त्व दु खित्वादि च कथं भो प्रत्यक्षमुपलभ्यते। कथं वा क्षेत्रज्ञधर्म। ज्ञेयं च सर्वं क्षेत्र ज्ञातैव क्षेत्रज्ञ इत्यवधारितेऽविद्यादु खित्वादे क्षेत्रज्ञविशेषणत्व क्षेत्रज्ञधर्मत्व तस्य च प्रत्यक्षोपलभ्यत्वमिति विरुद्धमुच्यतेऽविद्यामात्रावष्टम्भात्केवलम्।

(iii) पू०-अत्राह साविद्या कस्येति। सि०-(a) यस्य दृश्यते तस्यैव। कस्य दृश्यत इति अत्रोच्यतेऽविद्या कस्य दृश्यत इति प्रश्नो निरर्थक। कथं, दृश्यते चेदविद्या तद्वन्तमपि पश्यसि। न च तद्वत्युपलभ्यमाने सा कस्येति प्रश्नो

---

(ii) Purvapaksa—To possess Avidyā is itself the stain, on the Ksetrajña, of being bound to the world (samsaritva) and we actually see that the soul experiences misery, etc, due to Avidya

Siddhāntin—Whatever is experienced is object of perception (jñeya) and the one who experiences is the subject of perception ( jñātr ) The two can never be identified with each other and can never come into real contact with each other So Avidyā or misery, the effect of Avidyā, cannot be an attribute of the Ksetrajña, the perceiver (jñātr)

(iii) Purvapaksa—To whom that Avidyā really belongs?

Siddhantin—The question is improper (a) When a man with cows is seen, you should not ask, ' To whom the cows belong ?,' So, when you see a man with Avidyā and you cannot see Avidyā without seeing at the same time the man with Avidyā, you should not ask "To whom Avidyā belongs ?"

Purvapaksa—The relation of cows and the man with cows is known by perception, the relation of अविद्या and the man with Avidyā is not known by perception.

युक्तः। न हि गोमत्युपलभ्यमाने गावः कस्येति प्रश्नोऽर्थवान्भवेत्। ननु विषमो दृष्टान्तो गवां तद्वतश्च प्रत्यक्षत्वात्सम्बन्धोऽपि प्रत्यक्ष इति प्रश्नो निरर्थको न तथाविद्या तद्वांश्च प्रत्यक्षौ यतः प्रश्नो निरर्थकः स्यात्। अप्रत्यक्षेणाविद्यावताविद्यासम्बन्धे ज्ञाते किं तव स्यात्। अविद्याया अनर्थहेतुत्वात्परिहर्तव्या स्यात्। यस्याविद्या स तां परिहरिष्यति। ननु ममैवाविद्या। जानासि तर्ह्यविद्यां तद्वन्तं चात्मानम्। जानामि न तु प्रत्यक्षेण। (b) अनुमानेन चेज्जानासि कथं सम्बन्धग्रहणम्। न हि तव ज्ञातुर्ज्ञेयभूतयाविद्यया तत्काले सम्बन्धो ग्रहीतुं शक्यते। अविद्याया विषयत्वेनैव ज्ञातुरुपयुक्तत्वात्। न च ज्ञातुरविद्यायाश्च सम्बन्धस्य यो ग्रहीता ज्ञानं चान्यत्तद्विषयं सम्भवत्यनवस्थाप्राप्तेः। यदि ज्ञात्रापि ज्ञेयसम्बन्धो ज्ञायेतान्यो ज्ञाता कल्प्यः स्यात्तस्याप्यन्यस्तस्याप्यन्य इत्यनवस्थापरिहार्या। यदि पुनरविद्या ज्ञेयान्यद्वा ज्ञेयं ज्ञेयमेव तथा ज्ञातापि ज्ञातैव न ज्ञेयं भवति। यदा चैवमविद्यादुःखित्वाद्यैर्न ज्ञातुः क्षेत्रज्ञस्य किंचिद्दुष्यति।

---

( b ) Avidyā cannot be known by Anumāna or Inference, because Anumāna requires सम्बन्धग्रहण i e the knowledge that Avidyā and its possessor are related with each other just as the knowledge that अग्नि and the mountain are related with each other through the smoke But in the case of knowing Avidyā, we have at that very time to take the knower of Avidyā as the object of Avidyā ( अविद्यायाः विषयत्वेन ) i e as one with Avidyā In Anumāna we can distinguish between the mountain ( अग्निविषय-possessor of fire ) and the man who knows अग्नि there by Anumana, but in the knowledge of Avidyā, such a distinction between the possessor of अविद्या and the knower of अविद्या is not possible since during the very act of knowing अविद्या the possessor of अविद्या remains himself as the knower of अविद्या

Nor, again, it is possible to distinguish between the man who knows (ग्रहीता) the relation between अविद्या and the knower of अविद्या and that knowledge itself ( ज्ञान ) Such a distinction if made would lead to *regressus ad infinitum* (*anavasthā*). If the knower of अविद्या in relation with अविद्या be an object of another person's ( here the inferer's ) knowledge ( just as the mountain in relation with अग्नि to be

( iv ) पू०–नन्वयमेव दोषो यद्दोषवत्क्षेत्रविज्ञातृत्वम् । सि०–न, विज्ञानस्वरूपस्यैवाविक्रियस्य विज्ञातृत्वोपचारात् । यथोष्णतामात्रेणाग्नेस्तप्तिक्रियोपचारस्तद्वत् । यथात्र भगवता क्रियाकारकफलात्मत्वाभाव आत्मनि स्वत एव दर्शितोऽविद्याध्यारोपितैरेव क्रियाकारकाद्यात्मन्युपचर्यते तथा तत्र तत्र 'य एनं वेत्ति हन्तारम्' (II. 19) 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः' (III 27.) 'नादत्ते कस्यचित्पापम्' (V. 15) इत्यादिप्रकरणेषु दर्शितस्तथैव च व्याख्यातमस्माभिः। उत्तरेषु च प्रकरणेषु दर्शयिष्यामः । (v) पू०–हन्त तर्ह्यात्मनि क्रियाकारकफलात्मतायाः स्वतोऽभावेऽविद्यया चाध्यारोपितत्वे कर्माण्यविद्वत्कर्तव्यान्येव न विदुषामिति प्राप्तम् । सि०–सत्यमेवं प्राप्तम् । एतदेव च न हि देहभृता शक्यमित्यत्र (XVIII. 11) दर्शयिष्यामः । सर्वशास्त्रार्थोपसंहारप्रकरणे च 'समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा' (XVIII. 50) इत्यत्र विशेषतो दर्शयिष्यामः । अलमिह बहुप्रपञ्चेनेत्युपसंह्रियते ॥ २ ॥

---

inferred is known to the inferer and hence is an object of the inferer's knowledge), you will have to assume that this *another* person (= inferer) is different from the knower who prossess अविद्या (= is the पक्ष of अविद्या); and so on *ad infinitum*.

(iv) Pūrvapaksa–The दोष in the Ksetrajña will be the fact itself that he is the knower of the Ksetra which is full of dosas or defects.

Siddhānta—The word "knower" is only in a secondary sense applied to the soul who is *of the nature of pure knowledge* and always *changeless*. अग्नि, is only *heat* but we say 'अग्नि heats'.–The Lord has Himself shown that Atman has nothing to do with action, agent, and reward of action. He has shown this in the present verse (अत्र = XIII. 2); and in the same way he has shown the same in other verses of the Gitā (II. 19, III. 27, V. 15). Śankara has explained this (XIII. 2) and other verses similarly *i. e.* according to the Lord's intention, and will do so in the case of verses to follow.

(v) Pūrvapaksa—All actions being *falsely* superimposed on Atman are prescribed by the Śāstra only for the Ignorant.

Siddhānta—Yes. That is the sense of XIII. 11 and XVIII. 50, as Śankara is going to explain in his comments on these verses.

इद शरीरमित्यादिश्लोकोपदिष्टस्य क्षेत्राध्यायार्थस्य समहश्लोकोऽयमुपन्यस्यते तत्क्षेत्र यच्चेत्यादि व्याचिख्यासितस्य ह्यर्थस्य सम्रहोपन्यासो न्याय्य इति—

**तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।**

**स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥**

यन्निर्दिष्टमिद शरीरमिति तत्तच्छब्देन परामृशति । यच्चेद निर्दिष्ट क्षेत्र तथा दृग्यादृश स्वकीयैर्धर्मैं । चशब्द समुच्चयार्थ । यद्विकारि यो विकारोऽस्य तद्वि कारि यतो यस्माच्च यत्कार्यमुत्पद्यत इति वाक्यशेष । स च य क्षेत्रज्ञो निर्दिष्ट स यत्प्रभावो ये प्रभावा उपाधिकृता शक्तयो यस्य स यत्प्रभावश्च तत्क्षेत्रक्षेत्रज्ञयोर्याथात्म्य यथाविशेषित समासेन सक्षेपेण मे मम वाक्यत शृणु श्रुत्वावधारयेत्यर्थ ॥ ३ ॥

तत्क्षेत्रक्षेत्रज्ञयोर्याथात्म्य विवक्षित स्तौति श्रोतृबुद्धिप्ररोचनार्थम्—

**ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।**

**ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥**

ऋषिभिर्वसिष्ठादिभिर्बहुधा बहुप्रकार गीत कथित छन्दोभिश्छन्दांसि ऋगादीनि तैश्छन्दोभिर्विविधैर्नानाप्रकारै पृथग्विवेकतो गीतम् । किंच ब्रह्मसूत्रपदैश्चैव ब्रह्मण सूचकानि वाक्यानि ब्रह्मसूत्राणि तै पद्यते गम्यते ज्ञायते ब्रह्मेति तानि पदान्युच्यन्ते । तैरेव च क्षेत्रक्षेत्रज्ञयोर्याथात्म्य गीतमित्यनुवर्तते । "आत्मेत्येवोपासीत (Br Upa I 4 7) इत्यादिभिर्हि ब्रह्मसूत्रपदैरात्मा ज्ञायते । हेतुमद्भिर्युक्ति मुक्तैर्विनिश्चितैर्निः सशयरूपैर्निश्चितप्रत्ययोत्पादकैरित्यर्थ ॥ ४ ॥

स्तुत्याभिमुखीभूतायार्जुनायाह—

**महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।**

**इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५ ॥**

महाभूतानि महान्ति च तानि सर्वविकारव्यापकत्वाद्भूतानि च सूक्ष्माणि । स्थूलानि त्विन्द्रियगोचरशब्देनाभिधायिष्यन्ते । अहंकारो महाभूतकारणमहंप्रत्यय लक्षण । अहंकारकारण बुद्धिरध्यवसायलक्षणा । तत्कारणमव्यक्तमेव च न व्यक्त मव्यक्तमव्याकृतमीश्वरशक्तिर्मम माया दुरत्ययेत्युक्तम् ( VII 14 ) एव शब्द प्रकृत्यवधारणार्थ । एतावत्येवाष्टधा भिन्ना प्रकृति । चशब्दो भेदसमुच्चयार्थ । इन्द्रियाणि दश श्रोत्रादीनि पञ्च बुद्ध्युत्पादकत्वाद्बुद्धीन्द्रियाणि वाक्पाण्यादीनि पञ्च कर्मनिर्वर्तकत्वात्कर्मेन्द्रियाणि तानि दश । एक च किं तन्मन एकादश सकल्पाद्यात्मकम् । पञ्च चेन्द्रियगोचरा शब्दादयो विषया । तान्येतानि सांख्याश्चतुर्विंशतितत्त्वान्याचक्षते ॥ ५ ॥

अथेदानीमात्मगुणा इति यानाचक्षते वैशेषिकास्तेऽपि क्षेत्रधर्मा एव न तु क्षेत्रज्ञस्येत्याह भगवान्—

इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥

इच्छा यज्जातीयं सुखहेतुमर्थमुपलब्धवान्पूर्वं पुनस्तज्जातीयमुपलभमानस्तमादातुमिच्छति सुखहेतुरिति सेयमिच्छान्तःकरणधर्मो ज्ञेयत्वात्क्षेत्रम् । तथा द्वेषो यज्जातीयमर्थं दुःखहेतुत्वेनानुभूतवान्पुनस्तज्जातीयमुपलभमानस्तं द्वेष्टि सोऽयं द्वेषो ज्ञेयत्वात्क्षेत्रमेव । तथा सुखमनुकूलं प्रसन्नसत्त्वात्मकं ज्ञेयत्वात्क्षेत्रमेव । दुःखं प्रतिकूलात्मकं ज्ञेयत्वात्तदपि क्षेत्रम् । संघातो देहेन्द्रियाणां संहतिः । तस्यामभिव्यक्तान्तःकरणवृत्तिस्तप्त इव लोहपिण्डेऽग्निरात्मचैतन्याभासरसविद्धा चेतना सा च क्षेत्रं ज्ञेयत्वात् । धृतिर्ययावसादप्राप्तानि देहेन्द्रियाणि ध्रियन्ते सा च ज्ञेयत्वात्क्षेत्रम् । सर्वान्तःकरणधर्मोपलक्षणार्थमिच्छादिग्रहणं यद् उक्तं तदुपसंहरति-एतत्क्षेत्रं समासेन सविकारं सह विकारेण महदादिनोदाहृतमुक्तम् । यस्य क्षेत्रभेदजातस्य संहतिरिदं शरीरं क्षेत्रमित्युक्तं तत्क्षेत्रं व्याख्यातं महाभूतादिभेदभिन्नं धृत्यन्तम् ॥ ६ ॥

क्षेत्रज्ञो वक्ष्यमाणविशेषणो यस्य सप्रभावस्य क्षेत्रज्ञस्य परिज्ञानादमृतत्वं भवति तं ज्ञेयं यत्तत्प्रवक्ष्यामीत्यादिना सविशेषणं स्वयमेव वक्ष्यति भगवानधुना तु तज्ज्ञानसाधनगणममानित्वादिलक्षणं यस्मिन्सति तज्ज्ञेयविज्ञाने योग्योऽधिकृतो भवति यत्परः संन्यासी ज्ञाननिष्ठ उच्यते, तममानित्वादिगणं ज्ञानसाधनत्वाज्ज्ञानशब्दवाच्यं विदधाति भगवान्—

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥

अमानित्वं मानिनो भावो मानित्वमात्मनः श्लाघनं तदभावोऽमानित्वम् । अदम्भित्वं स्वधर्मप्रकटीकरणं दम्भित्वं तदभावोऽदम्भित्वम् । अहिंसाहिंसनं प्राणिनामपीडनम् । क्षान्तिः परापराधप्राप्तावविक्रिया । आर्जवमृजुभावोऽवक्रत्वम् । आचार्योपासनं मोक्षसाधनोपदेष्टुराचार्यस्य शुश्रूषादिप्रयोगेण सेवनम् । शौचं कायमलानां मृज्जलाभ्यां प्रक्षालनमन्तश्च मनसः प्रतिपक्षभावनया रागादिमलानामपनयनं शौचम् । स्थैर्यं स्थिरभावो मोक्षमार्ग एव कृताध्यवसायत्वम् । आत्मविनिग्रह आत्मनोऽपकारकस्यात्मशब्दवाच्यस्य कार्यकरणसंघातस्य विनिग्रहः स्वभावेन सर्वत्र प्रवृत्तस्य सन्मार्ग एव निरोध आत्मविनिग्रहः ॥ ७ ॥

किंच—

इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥

इन्द्रियार्थेषु शब्दादिषु दृष्टादृष्टेषु भोगेषु विरागभावो वैराग्यम् । अनहंकारोऽ-

हङ्काराभाव एव च । जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं जन्म च मृत्युश्च जरा च व्याधयश्च दुःखानि च तेषु जन्मादिदुःखान्तेषु प्रत्येकं दोषानुदर्शनं, जन्मनि गर्भवासयोनिद्वारनिःसरणं दोषस्तस्यानुदर्शनमालोचनं तथा मृत्यौ दोषानुदर्शनं, तथा जरायां प्रज्ञाशक्तितेजोनिरोधदोषानुदर्शनं परिभूतता चेति । तथा व्याधिषु शिरोरोगादिषु दोषानुदर्शनं, तथा दुःखेष्वध्यात्माधिभूताधिदैवनिमित्तेषु । अथवा दुःखान्येव दोषो दुःखदोषस्तस्य जन्मादिषु पूर्ववदनुदर्शनम् । दुःखं जन्म दुःखं मृत्युर्दुःखं जरा दुःखं व्याधयः । दुःखनिमित्तत्वाज्जन्मादयो दुःखानि न पुनः स्वरूपेणैव दुःखमिति । एवं जन्मादिषु दुःखदोषानुदर्शनाद्देहेन्द्रियविषयभोगेषु वैराग्यमुपजायते । ततः प्रत्यगात्मनि प्रवृत्तिः करणानामात्मदर्शनाय । एवं ज्ञानहेतुत्वाज्ज्ञानमुच्यते जन्मादिदुःखदोषानुदर्शनम् ॥ ८ ॥

किंच—

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥

असक्तिः सक्तिः सङ्गनिमित्तेषु विषयेषु प्रीतिमात्रं तदभावोऽसक्तिः । अनभिष्वङ्गोऽभिष्वङ्गाभावोऽभिष्वङ्गो नाम सक्तिविशेष एवानन्यात्मभावनालक्षणः । यथाऽन्यस्मिन्सुखिनि दुःखिनि वाऽहमेव सुखी दुःखी च जीवति मृते वाऽहमेव जीवामि मरिष्यामि चेति । क्वेत्याह पुत्रदारगृहादिषु । पुत्रेषु दारेषु गृहेष्वादिग्रहणादन्येष्वप्यत्यन्तेष्टेषु दासवर्गादिषु । तच्चोभयं ज्ञानार्थत्वाज्ज्ञानमुच्यते । नित्यं च समचित्तत्वं तुल्यचित्तता, क्व इष्टानिष्टोपपत्तिषु, इष्टानामनिष्टानां चोपपत्तयः संप्राप्तयस्तास्विष्टानिष्टोपपत्तिषु नित्यमेव तुल्यचित्तता इष्टोपपत्तिषु न हृष्यति न कुप्यति चानिष्टोपपत्तिषु । तच्चैतन्नित्यं समचित्तत्वं ज्ञानम् ॥ ९ ॥

किंच—

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥

मयि चेश्वरेऽनन्ययोगेनापृथक्समाधिना नान्यो भगवतो वासुदेवात्परोऽस्त्यतः स एव नो गतिरित्येवं निश्चिताऽव्यभिचारिणी बुद्धिरनन्ययोगस्तेन भजनं भक्तिर्न व्यभिचरणशीलाऽव्यभिचारिणी । सा च ज्ञानम् । विविक्तदेशसेवित्वं विविक्तः स्वभावतः संस्कारेण वाऽशुच्यादिभिः सर्पव्याघ्रादिभिश्च रहितोऽरण्यनदीपुलिनदेवगृहादिर्विविक्तो देशस्तं सेवितुं शीलमस्येति विविक्तदेशसेवी तद्भावो विविक्तदेशसेवित्वम् । विविक्तेषु हि देशेषु चित्तं प्रसीदति यतस्तत आत्मादिभावना विविक्त उपजायतेऽतो विविक्तदेशसेवित्वं ज्ञानमुच्यते अरतिररमणं जनसंसदि जनानां प्राकृतानां संस्कारशून्यानामविनीतानां संसत्समवायो जनसंसत् न संस्कारवतां विनीतानां संसत्तस्या ज्ञानोपकारकत्वादतः प्राकृतजनसंसदरतिर्ज्ञानार्थत्वाज्ज्ञानम् ॥ १० ॥

किंच—

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११ ॥

अध्यात्मज्ञाननित्यत्वमात्मादिविषयं ज्ञानमध्यात्मज्ञानं तस्मिन्नित्यभावो नित्यत्वममानित्वादीनां ज्ञानसाधनानां भावनापरिपाकनिमित्तं तत्त्वज्ञानं तस्यार्थो मोक्षः संसारोपरमस्तस्यालोचनं तत्त्वज्ञानार्थदर्शनम्। तत्त्वज्ञानफलालोचने हि तत्साधनानुष्ठाने प्रवृत्तिः स्यादिति । एतदमानित्वादितत्त्वज्ञानार्थदर्शनान्तमुक्तं ज्ञानमिति प्रोक्तं ज्ञानार्थत्वात्। अज्ञानं यदतोऽस्माद्यथोक्तादन्यथा विपर्ययेण मानित्वं दम्भित्वं हिंसाक्षान्तिरनार्जवमित्याद्यज्ञानं विज्ञेयं परिहरणाय संसारप्रवृत्तिकारणत्वादिति ॥ ११ ॥

यथोक्तेन ज्ञानेन ज्ञातव्यं किमित्याकाङ्क्षायामाह ज्ञेयं यत्तदित्यादि । ननु यमा नियमाश्चामानित्वादयो न तैर्ज्ञेयं ज्ञायते । न ह्यमानित्वादि कस्यचिद्वस्तुनः परिच्छेदकं दृष्टम्। सर्वत्रैव च यद्विषयं ज्ञानं तदेव तस्य ज्ञेयस्य परिच्छेदकं दृश्यते। न ह्यन्यविषयेण ज्ञानेनान्यदुपलभ्यते। यथा घटविषयेण ज्ञानेनाग्निः। नैष दोषो ज्ञाननिमित्तत्वाज्ज्ञानमुच्यत इति ह्यवोचाम। ज्ञानसहकारिकारणत्वाच्च।

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥

ज्ञेयं ज्ञातव्यं यत्तत्प्रवक्ष्यामि प्रकर्षेण यथावद्वक्ष्यामि। किंफलं तदिति प्ररोचनेन श्रोतुरभिमुखीकरणायाह यज्ज्ञेयं ज्ञात्वामृतममृतत्वमश्नुते न पुनर्म्रियत इत्यर्थः। अनादिमदादिरस्यास्तीत्यादिमन्नादिमदनादिमत्। किं तत्परं निरतिशयं ब्रह्म ज्ञेयमिति प्रकृतम्।

पू०-*अत्र केचिदनादिमत्परमिति पदं छिन्दन्ति बहुव्रीहिणोक्तेऽर्थे मतुप आनर्थक्यमनिष्टं स्यादिति । अर्थविशेषं च दर्शयन्ति अहं वासुदेवाख्या परा

*A Pūrvapakṣa of a Vaiṣnava Vedanta School—(1) The compound अनादिमत्परम् should be solved as अनादि + मत्परम् and (2) it would mean 'The eternal Brahman with Me (Vāsudeva) as its supreme Power (परा शक्ति)'.

Śankara's Reply—(1) The sense you propose is not possible and hence we solve the compound as अनादिमत् + परम्. The sense is not possible because ब्रह्मन् is explained by the negation of every attribute and your explanation of मत्परम् would mean that ब्रह्मन् has an attribute (शक्ति = power in the form of वासुदेव)

शक्तिर्यस्य तन्मत्परमिति । सि०—सत्यमेवमपुनरुक्त स्यादर्थश्चेत्सभवति न त्वयं समवति ब्रह्मण सर्वविशेषप्रतिषेधेनैव विजिज्ञापयिषितत्वान्न सत्तन्नासदुच्यत इति । विशिष्टशक्तिमत्त्वप्रदर्शन विशेषप्रतिषेधश्चेति विप्रतिषिद्धम् । तस्मान्मतुपो बहुव्रीहिणा समानार्थत्वेऽपि प्रयोग श्लोकपूरणार्थ ।

अमृतत्वफल ज्ञेय मयोच्यत इति प्ररोचनेनाभिमुखीकृत्याह न सत्तज्ज्ञयमुच्यत इति नाप्यसत्तदुच्यते । (1) ननु महता परिकरबन्धन कण्ठरवेणोद्घुष्य ज्ञेय प्रवक्ष्यामीति ननुरूपमुक्त न सत्तन्नासदुच्यत इति । न अनुरूपमेवोक्तम् । कथ, सर्वासु ह्युपनिषत्सु ज्ञेय ब्रह्म " नेति नेति ( Br Upa II 3 6) त्यस्थूलमनणु ( Br Upa III 8 8)" इत्यादिविशेषप्रतिषेधेनैव निर्दिश्यते नेद तदिति,वाचाऽगोचरत्वात् । (2) ननु ( a ) न तदस्ति यद्वस्त्वस्तिशब्देन नोच्यते । (b) अथास्तिशब्देन नोच्यते नास्ति तज्ज्ञेयम् । ( c ) विप्रतिषिद्ध च ज्ञेय तदस्तिशब्देन नोच्यत इति च । ( d ) न तावन्नास्ति नास्तिबुद्ध्यविषयत्वात् । (e) ननु सर्वा बुद्धयोऽस्तिनास्तिबुद्ध्यनुगता एव । तत्रैव सति ज्ञेयमप्यस्तिबुद्ध्यनुगतप्रत्ययविषय वा स्यान्नास्तिबुद्ध्यनुगतप्रत्ययविषय वा स्यात् ।

---

(1) A Purvapaksa objects to Sankara s explanation of 12d ( न सत्तन्नासदुच्यते )

Sankara s Reply —We follow the Upanisads in which ब्रह्मन् is always described negatively

(2) Purvapaksa—( a ) We know nothing which cannot be described as ' it is ' i e everything we know can only be described positively and as Brahman is to be known, it must be described positively ( b ) If you cannot describe a thing as ' it is ', the thing itself will be a non-entity (lit that object does not exist ) ( c ) And it is self-contradictory to say, ' Brahman is ज्ञेय (an object of knowledge ) and that it cannot be positively described' (d) As a matter of fact, Brahman cannot be said to be non-existent (असत् cannot be interpreted as non-existent), because it is not cognized as ' It is not' (e) If Sankara argues that all cognitions are both positive and negative ( e g , one can think of a pot once as ' it is ' and at another time as ' it is not ) then Brahman also should be by turn only cognized as सत् and असत्.

सि०—न (a) अतीन्द्रियत्वेनोभयबुद्ध्यनुगतप्रत्ययाविषयत्वात्। यदीन्द्रियगम्यं वस्तु घटादिकं तदस्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यान्नास्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात्। इदं तु ज्ञेयमतीन्द्रियत्वेन शब्दैकप्रमाणगम्यत्वान्न घटादिवदुभयबुद्ध्यनुगतप्रत्ययविषयमित्यतो न सत्तन्नासदित्युच्यते। (b) यत्तूक्तं विरुद्धमुच्यते ज्ञेयं तन्न सत्तन्नासदुच्यत इति। न विरुद्धम् "अन्यदेव तद्विदितादथो अविदितादधि" (Ken Upa I. 3) इति श्रुतेः। पू०—श्रुतिरपि विरुद्धार्थानि चेद्यथा यज्ञाय शालामारभ्य को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वेत्येवमिति (Tai. Sam. VI. 1.1) चेत्। सि०—न, विदिताविदिताभ्यामन्यत्वश्रुते (Ken Upa. II. 3) रवश्यविज्ञेयार्थप्रतिपादनपरत्वात्। यद्यमुष्मिन्नित्यादि तु विधिशेषोऽर्थवादः। (c) उपपत्तेश्च सदसदादिशब्दैर्ब्रह्म नोच्यत इति। सर्वो हि शब्दोऽर्थप्रकाशनाय प्रयुक्तः श्रूयमाणश्च श्रोतृभिर्जातिक्रियागुणसंबन्धद्वारेण संकेतग्रहणसव्यपेक्षोऽर्थं प्रत्याययति, नान्यथाऽदृष्टत्वात्। तद्यथा गौरश्व इति वा जातितः, पचति पठतीति वा क्रियातः, शुक्लः कृष्ण इति वा गुणतः, धनी गोमानिति वा संबन्धतः, न तु ब्रह्म जातिमदतो न सदादिशब्दवाच्यं नापि गुणवद्येन गुणशब्देनोच्येत निर्गुणत्वान्नापि क्रियाशब्दवाच्यं निष्क्रियत्वात् "निष्कलं निष्क्रियं शान्तम्" इति श्रुतेः (Sve. Upa VI. 19)। न च संबन्धि एकत्वादद्वयत्वादविषयत्वादात्मत्वाच्च, न केनचिच्छब्देनोच्यत इति युक्तं "यतो वाचो निवर्तन्ते" (Tai Upa. II. 9 9) इत्यादिश्रुतिभ्यश्च ॥ १२ ॥

सच्छब्दप्रत्ययाविषयत्वादसत्त्वाशङ्कायां ज्ञेयस्य सर्वप्राणिकरणोपाधिद्वारेण तदस्तित्वं प्रतिपादयंस्तदाशङ्कानिवृत्त्यर्थमाह—

सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥

---

Sankara's Reply :—No Because (a) Brahman is imperceptible and therefore it is unlike घट. Brahman is cognized through Sabda only. (b) There is no self-contradiction, because Sruti itself adopts that description about Brahman And you cannot object to the Sruti (e. g Ken. Upa. I 3) because that Sruti should necessarily be taken as explaining what it undertakes to explain (i. e. Brahman), otherwise the Sruti will be meaningless (c) It is also reasonable that 'Brahman cannot be described either as सद् or as असद्'. The well-known rule is that a शब्द can describe a thing as qualified by जाति, क्रिया, गुण or सम्बन्ध But Brahman has neither of these four. Hence it cannot be described by any word (शब्द)

सर्वतः पाणिपादं सर्वतः पाणयः पादाश्चास्येति सर्वत पाणिपाद तज्ज्ञेयम् । सर्वप्राणिकरणोपाधिभिः क्षेत्रज्ञास्तित्वं विभाव्यते । क्षेत्रज्ञश्च क्षेत्रोपाधित उच्यते । क्षेत्र च पाणिपादादिभिरनेकधा भिन्नम् । क्षेत्रोपाधिभेदकृत विशेषजातं मिथ्यैव क्षेत्रज्ञस्येति तदपनयेन ज्ञेयत्वमुक्त न सत्तन्नासदुच्यत इति । उपाधिकृतं मिथ्यारूपमप्यस्तित्वाधिगमाय ज्ञेयधर्मवत्परिकल्प्योच्यते सर्वत.पाणिपाद-मित्यादि । तथाहि संप्रदायविदां वचनम् 'अध्यारोपापवादाभ्यां निष्प्रपञ्च प्रपञ्च्यते ।'— इति सर्वत्र सर्वदेहावयवत्वेन गम्यमाना पाणिपादादयो ज्ञेयशक्तिसद्भावनिमित्तस्वकार्या इति ज्ञेयसद्भावे लिङ्गानि ज्ञेयस्येत्युपचारत उच्यन्ते । तथा व्याख्येयमन्यत्सर्वत पाणिपाद तज्ज्ञेयम् । सर्वतोक्षिशिरोमुख सर्वत्र अक्षीणि शिरांसि मुखानि च यस्य तत्सर्वतोक्षिशिरोमुखम् । सर्वतः श्रुतिमच्छ्रुति श्रवणेन्द्रिय तद्यस्य तच्छ्रुतिमल्लोके प्राणिनिकाये सर्वमावृत्य संव्याप्य तिष्ठति स्थितिं लभते ॥ १३ ॥

उपाधिभूतपाणिपादादीन्द्रियाध्यारोपणाज्ज्ञेयस्य तद्वत्ताशङ्का मा भूदित्ये-वमर्थः श्लोकारम्भ —

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥

सर्वेन्द्रियगुणाभास सर्वाणि च तानीन्द्रियाणि श्रोत्रादीनि बुद्धीन्द्रियकर्मेन्द्रिया ख्यान्यन्त करणे च बुद्धिमनसी ज्ञेयोपाधित्वस्य तुल्यत्वात्सर्वेन्द्रियग्रहणेन गृह्यन्ते । अपि चान्त करणोपाधिद्वारेणैव श्रोत्रादीनामप्युपाधित्वमित्यतोऽन्त करणबहि ष्करणोपाधिभूतै सर्वेन्द्रियगुणैरध्यवसायसंकल्पश्रवणवचनादिभिरवभासत इति सर्वेन्द्रियगुणाभासं सर्वेन्द्रियव्यापारैर्व्यापृतमिव तज्ज्ञेयमित्यर्थ "ध्यायतीव लेलायतीव" इति श्रुते (Br Upa IV 3 7)। कस्मात्पुन कारणान्न व्यापृतमेवेति गृह्यत इत्यत आह सर्वेन्द्रियविवर्जित सर्वकरणरहितमित्यर्थ । अतो न करणव्यापारै-र्व्यापृत तज्ज्ञेयम् । यस्त्वय मन्त्र —"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षु स शृणोत्यकर्ण " (Sve. Upa III 19) इत्यादिः स सर्वेन्द्रियोपाधिगुणानु गुण्यभजनशक्तिमत्तज्ज्ञेयमित्येवप्रदर्शनार्थो न तु साक्षादेव जवनादिक्रिया-वत्त्वप्रदर्शनार्थः। "अन्धो मणिमविन्दत्"(Tai Ara I 11) इत्यादिमन्त्रार्थ वत्तस्य मन्त्रस्यार्थ । यस्मात्सर्वकरणवर्जित तज्ज्ञेय तस्मादसक्त सर्वसंश्लेषवर्जितम्। यद्यप्येव तथापि सर्वभृच्चैव । सदास्पदं हि सर्वं सर्वत्र सद्बुद्ध्यनुगमात् । न हि मृगतृष्णिकादयोऽपि निरास्पदा भवन्ति । अत सर्वभृत्सर्व बिभर्तीति । स्यादिद चान्यज्ज्ञेयस्य सत्त्वाधिगमद्वार—निर्गुण सत्त्वरजस्तमांसि गुणास्तैर्वर्जित तज्ज्ञेय तथापि

गुणभोक्तृ च गुणानां सत्त्वरजस्तमसां शब्दादिद्वारेण सुखदुःखमोहाकारपरिणतानां भोक्तृ चोपलब्धृ तज्ज्ञेयमित्यर्थः ॥ १४ ॥

किंच—

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १५ ॥

बहिस्त्वक्पर्यन्तं देहमात्मत्वेनाविद्याकल्पितमपेक्ष्य तमेवावधिं कृत्वा बहिरुच्यते। तथा प्रत्यगात्मानमपेक्ष्य देहमेवावधिं कृत्वान्तरुच्यते । बहिरन्तश्चेत्युक्ते मध्येऽभावे प्राप्त इदमुच्यतेऽचरं चरमेव च यच्चराचरं देहाभासमपि तदेव ज्ञेयं यथा रज्जुसर्पाभासम् । पू०—यद्यचरं चरमेव च व्यवहारविषयं सर्वं ज्ञेयं किमर्थमिदमिति सर्वैर्न विज्ञेयमिति । सि०—उच्यते, सत्यं सर्वाभासं तत्तथापि व्योमवत्सूक्ष्ममतः सूक्ष्मत्वात्स्वेन रूपेण तज्ज्ञेयमप्यविज्ञेयमविदुषाम् । विदुषां त्वात्मैवेदं सर्वं ( Br. Upa. II. 4 6 ) ब्रह्मैवेदं सर्वं ( Br. Upa. II. 5. 1 ) मित्यादिप्रमाणतो नित्यं विज्ञातमविज्ञाततया दूरस्थं वर्षसहस्रकोट्याप्यविदुषामप्राप्यत्वादन्तिके च तदात्मत्वाद्विदुषाम् ॥ १५ ॥

किंच—

अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥

अविभक्तं च प्रतिदेहं व्योमवत्तदेकं भूतेषु सर्वप्राणिषु विभक्तमिव च स्थितं देहेष्वेव विभाव्यमानत्वाद्भूतभर्तृ च भूतानि बिभर्तीति तज्ज्ञेयं भूतभर्तृ च स्थितिकाले । प्रलयकाले ग्रसिष्णु ग्रसनशीलम् । उत्पत्तिकाले प्रभविष्णु च प्रभवनशीलं यथा रज्ज्वादिः सर्पादेर्मिथ्याकल्पितस्य ॥ १६ ॥

किंच सर्वत्र विद्यमानं सन्नोपलभ्यते चेज्ज्ञेयं तमस्तर्हि । न, किं तर्हि—

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १७ ॥

ज्योतिषामादित्यादीनामपि तज्ज्ञेयं ज्योतिः । आत्मचैतन्यज्योतिषेद्धानि ह्यादित्यादीनि ज्योतींषि दीप्यन्ते "येन सूर्यस्तपति तेजसेद्धः" (Tai. Brā III 12. 9) "तस्य भासा सर्वमिदं विभाति" (Sve Upa. VI. 14) इत्यादिश्रुतिभ्यः । स्मृतेश्चेहैव 'यदादित्यगतं तेजः' (XV. 12) इत्यादेः । तमसोऽज्ञानात्परमस्पृष्टमुच्यते । ज्ञानादेर्दुःसम्पादनबुद्ध्या प्राप्तावसादस्योत्तम्भनार्थमाह ज्ञानममानित्वादि (XIII 7-11) । ज्ञेयं ज्ञेयं यत्तत्प्रवक्ष्यामीत्यादिनोक्तम् (XIII 12-17) ज्ञानगम्यं ज्ञेयमेव ज्ञानं तज्ज्ञानफलमिति ज्ञानगम्यमुच्यते । ज्ञायमानं तु ज्ञेयम् । तदेतत्त्रयमपि हृदि बुद्धौ सर्वस्य प्राणिजातस्य विष्ठितं विशेषेण स्थितम् । तत्रैव हि त्रयं विभाव्यते ॥ १७ ॥

यथोक्तार्थोपसंहारार्थोऽयं श्लोक आरभ्यते—

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥

इत्येवं क्षेत्रं महाभूतादि धृत्यन्तं तथा ज्ञानममानित्वादि तत्त्वज्ञानार्थदर्शनपर्यन्तं ज्ञेयं च 'ज्ञेयं यत्तत्' इत्यादि 'तमसः परमुच्यते' इत्येवमन्तमुक्तं समासतः संक्षेपतः । एतावान्सर्वो हि वेदार्थो गीतार्थश्चोपसंहृत्योक्तः । अस्मिन्सम्यग्दर्शने कोऽधिक्रियत इत्युच्यते मद्भक्तो मयीश्वरे सर्वज्ञे परमगुरौ वासुदेवे समर्पितसर्वात्मभावो यत्पश्यति शृणोति स्पृशति वा सर्वमेव भगवान्वासुदेव इत्येवंग्रहाविष्टबुद्धिर्मद्भक्तः स एतद्यथोक्तं सम्यग्दर्शनं विज्ञाय मद्भावाय मम भावो मद्भावः परमात्मभावस्तस्मै मद्भावायोपपद्यते मोक्षं गच्छति ॥ १८ ॥

तत्र सप्तमे ( Gita VII ) ईश्वरस्य द्वे प्रकृती उपन्यस्ते परापरे क्षेत्रक्षेत्रज्ञलक्षणे । एतद्योनीनि भूतानीति ( VII 6 ) चोक्तम् । क्षेत्रक्षेत्रज्ञप्रकृतिद्वययोनित्वं कथं भूतानामित्ययमर्थोऽधुनोच्यते—

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १९ ॥

प्रकृतिं पुरुषं चैवेश्वरस्य प्रकृती तौ प्रकृतिपुरुषावुभावप्यनादी विद्धि । न विद्यत आदिर्ययोस्तावनादी । नित्येश्वरत्वादीश्वरस्य तत्प्रकृत्योरपि युक्तं नित्यत्वेन भवितुम् । प्रकृतिद्वयवत्त्वमेव हीश्वरस्येश्वरत्वम् । याभ्यां प्रकृतिभ्यामीश्वरो जगदुत्पत्तिस्थितिप्रलयहेतुस्ते द्वे अनादी सत्यौ संसारस्य कारणम् ।

पू०*–नादी अनादी इति तत्पुरुषसमासं केचिद्वर्णयन्ति तेन हि किलेश्वरस्य कारणत्वं सिध्यति । यदि पुनः प्रकृतिपुरुषावेव नित्यौ स्यातां तत्कृतमेव जगन्नेश्वरस्य जगतः कर्तृत्वम् इति ।

सि०—तदसत्,

( i ) प्राक्प्रकृतिपुरुषयोरुत्पत्तेरीशितव्याभावादीश्वरस्यानीश्वरत्वप्रसङ्गात् । ( ii )

---

*Sankara introduces a Purvapaksa according to which the individual soul (पुरुष) and the Matter (प्रकृति) are two created principles, and hence not eternal This may be a Vedanta School This Purvapaksa claimed that in its School the Lord (ईश्वर) alone would be the Creator

Sankara replies that (i) if the soul and the Matter were non-existent in the beginning, the Lord would be

– v l नेश्वरस्य for किलेश्वरस्य

ससारस्य निर्निमित्तत्वेऽनिर्मोक्षत्वप्रसङ्गाच्छास्त्रानर्थक्यप्रसङ्गाद् (iii) बन्धमोक्षाभावप्रसङ्गाच्च (iv) नित्यत्वे पुनरीश्वरस्य प्रकृत्योः सर्वमेतदुपपन्नं भवेत्।

कथं, विकारांश्च गुणांश्चैव वक्ष्यमाणान्विकारान्बुद्ध्यादिदेहेन्द्रियान्तान्गुणांश्च सुखदुःखमोहप्रत्ययाकारपरिणतान्विद्धि जानीहि प्रकृतिसंभवान्प्रकृतिरीश्वरस्य विकारकारणशक्तिस्त्रिगुणात्मिका माया सा संभवो येषां विकाराणां गुणानां च तान्विकारान्गुणांश्च विद्धि प्रकृतिसंभवान्प्रकृतिपरिणामान् ॥ १९ ॥

के पुनस्ते विकारा गुणाश्च प्रकृतिसंभवा:—

> कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
> पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥

कार्यकरणकर्तृत्वे कार्यं शरीरं करणानि तत्स्थानि त्रयोदश। देहस्यारम्भकाणि भूतानि विषयाश्च प्रकृतिसंभवा विकाराः पूर्वोक्ता इह कार्यग्रहणेन गृह्यन्ते गुणाश्च प्रकृतिसंभवाः सुखदुःखमोहात्मकाः करणाश्रयत्वात्करणग्रहणेन गृह्यन्ते। तेषां कार्यकरणानां कर्तृत्वमुत्पादकत्वं यत्तत्कार्यकरणकर्तृत्वं तस्मिन्कार्यकरणकर्तृत्वे हेतुः कारणमारम्भकत्वेन प्रकृतिरुच्यते। एवं कार्यकरणकर्तृत्वेन संसारस्य कारणं प्रकृतिः। कार्यकारणकर्तृत्वे इत्यस्मिन्नपि पाठे कार्यं यद्यस्य विपरिणामस्तत्तस्य कार्यं विकारो, विकारि कारणं तयोर्विकारविकारिणोः कार्यकारणयोः कर्तृत्व इति*। अथवा षोडश विकाराः कार्यं सप्त प्रकृतिविकृतयः कारणं तान्येव कार्यकारणान्युच्यन्ते। तेषां कर्तृत्वे हेतुः प्रकृतिरुच्यत आरम्भकत्वेनैव। पुरुषश्च

---

at that time no Lord because there was nothing then to be governed, (ii) if the world was created at all, the Purva paksa holding the soul and the world to be newly created will have to say that they were created without any reason ( निर्निमित्तत्व ) and in that case, the soul will never be released and hence the Scripture ( which starts to explain the Path to Moksa ) will be futile, and ( iii ) as there were in the beginning no soul and no matter, there ought to have been no bondage and no liberation (iv) But if the two प्रकृतिs of the Lord, i.e., the soul and the matter, be eternal with the Lord, all these faults will not arise

---

* POA reads इति तानि एव कार्यकरणानि उच्यन्ते, and drops तानि एव . उच्यन्ते from the next sentence

संसारस्य कारणं यथा स्यात्तदुच्यते पुरुषो जीवः क्षेत्रज्ञो भोक्तेति पर्यायः सुखदुःखाना भोग्यानां भोक्तृत्वे उपलब्धृत्वे हेतुरुच्यते।

* कथ पुनरनेन कार्यकरणकर्तृत्वेन सुखदु खभोक्तृत्वेन च प्रकृतिपुरुषयोः संसारकारणत्वमुच्यत इति। अत्रोच्यते कार्यकरणसुखदु खरूपेण हेतुफलात्मना प्रकृतेः परिणामाभावे पुरुषस्य चेतनस्यासति तदुपलब्धृत्वे कुत ससारः स्यात्। यदा पुन. कार्यकरणसुखदुःखस्वरूपेण हेतुफलात्मना परिणतया प्रकृत्या भोग्यया पुरुषस्य तद्विपरीतस्य भोक्तृत्वेनाविद्यारूप संयोगः स्यात्तदा ससार. स्यादिति। अतो यत्प्रकृतिपुरुषयोः कार्यकरणकर्तृत्वेन सुखदु खभोक्तृत्वेन च ससारकारणत्वमुक्त तद्युक्तम्। कः पुनरयं ससारो नाम, सुखदुःखसंभोग ससार पुरुषस्य च सुखदु खानां संभोक्तृत्व ससारित्वमिति ॥ २० ॥

यत्पुरुषस्य सुखदुःखाना भोक्तृत्व ससारित्वमित्युक्त तस्य तत्किंनिमित्तमित्युच्यते—

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान्।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥

पुरुषो भोक्ता प्रकृतिस्थ प्रकृतावविद्यालक्षणायां कार्यकरणरूपेण परिणतायां स्थित प्रकृतिस्थ प्रकृतिमात्मत्वेन गत इत्येतद्धि यस्मात्तस्माद्भुङ्क्त उपलभत इत्यर्थ। प्रकृतिजान्प्रकृतितो जातान्सुखदु खमोहाकाराभिव्यक्तान्गुणान्सुखी दु खी मूढ पण्डितोऽहमित्येवम्। सत्यामप्यविद्यायां सुखदुःखमोहेषु गुणेषु भुज्यमानेषु यः सङ्ग आत्मभाव संसारस्य (1) स प्रधान कारण जन्मन. " स यथाकामो भवति तत्क्रतुर्भवति " (Br Upa IV 4 5) इत्यादिश्रुते। तदेतदाह कारण हेतुर्गुणसङ्गो गुणेषु सङ्गोऽस्य पुरुषस्य भोक्तु सदसद्योनिजन्मसु (2) सत्यश्चासत्यश्च योनय सदसद्योनयस्तासु सदसद्योनिषु जन्मानि सदसद्योनिजन्मानि तेषु सदसद्योनिजन्मसु विषयभूतेषु कारण गुणसङ्ग। अथवा सदसद्योनिजन्मस्वस्य संसारस्य कारण गुणसङ्ग इति समारपदमध्याहार्यम्। सद्योनयो देवादियोनयोऽसद्योनय पश्वादियोनय। सामर्थ्यात्सदसद्योनयो मनुष्ययोनयोऽप्यविरुद्धा द्रष्टव्या। एतदुक्तं भवति प्रकृतिस्थत्वाख्याविद्या गुणेषु च सङ्ग काम संसारस्य कारणमिति। तच्च परिवर्जनायोच्यते। अस्य च निवृत्तिकारण ज्ञानवैराग्ये ससन्यासे गीताशास्त्रे प्रसिद्धम्। तच्च ज्ञान पुरस्तादुपन्यस्त क्षेत्रक्षेत्रज्ञविषयम्। (3) यज्ज्ञात्वामृत-

* Sankara explains his theory of अविद्या.

(1) POA drops संसारस्य
(2) POA reads सच्च असच्च सदसती, तयोः योनयः for सत्यश्चा-सत्यश्च योनयः.
(3) POA connects यज्ज्ञात्वा इति with विषयम्

द्वौ भूतेति । द्वौ द्विसङ्ख्याकौ भूतसर्गौ भूतानां मनुष्याणां सर्गौ सृष्टी भूतसर्गौ सृज्येते इति सर्गौ भूतान्येव सृज्यमानानि देवासुरसंपद्युक्तानि द्वौ भूतसर्गावित्युच्येते "द्वया ह वै प्राजापत्या देवाश्चासुराश्च" इति श्रुतेः (Br Upa. I 3 1)। लोकेऽस्मिन्संसारे इत्यर्थः । सर्वेषां द्वैविध्योपपत्तेः । कौ तौ भूतसर्गावित्युच्येते प्रकृतावेव दैव आसुर एव च । उक्तयोरेव पुनरनुवादे प्रयोजनमाह दैवो भूतसर्गो ऽभयं सत्त्वसंशुद्धिरित्यादिना विस्तरशो विस्तरप्रकारैः प्रोक्तः कथितो न त्वासुरो विस्तरशोऽनस्तत्परिवर्जनार्थमासुरं पार्थ मे मम वचनादुच्यमानं विस्तरशः शृण्ववधारय ॥ ६ ॥

आध्यायपरिसमाप्तेरासुरा संपत्प्राणिविशेषणत्वेन प्रदर्श्यते प्रत्यक्षीकरणेन च शक्यतऽस्याः परिवर्जनं कर्तुमिति—

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥

प्रवृत्तिं च प्रवर्तनं यस्मिन्पुरुषार्थसाधने कर्तव्ये प्रवृत्तिस्तां निवृत्तिं च तद्विपरीतां यस्मादनर्थहेतोर्निवर्तितव्यं सा निवृत्तिस्तां च जना आसुरा न विदुर्न जानन्ति । न केवलं प्रवृत्तिनिवृत्ती एव न विदुर्न शौचं नापि चाचारो न सत्यं तेषु विद्यते । अशौचा अनाचारा मायाविनोऽनृतवादिनो ह्यासुराः ॥ ७ ॥

किं च—

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ८ ॥

असत्यं यथा वयमनृतप्रायास्तथेदं जगत्सर्वमसत्यमप्रतिष्ठं च नास्य धर्माधर्मौ प्रतिष्ठातोऽप्रतिष्ठं चेति न आसुरा जना जगदाहुरनीश्वरं न च धर्माधर्मसव्यपेक्षकोऽस्य शासितेश्वरो विद्यत इत्यतोऽनीश्वरं जगदाहुः । किं चापरस्परसंभूतं कामप्रयुक्तयोः स्त्रीपुरुषयोरन्योन्यसंयोगाज्जगत्सर्वं संभूतम् । किमन्यत्कामहैतुकं कामहेतुकमेव कामहैतुकं किमन्यज्जगतः कारणं न किंचिददृष्टं धर्माधर्मादि कारणान्तरं विद्यते जगतः काम एव प्राणिनां कारणमिति लोकायतिकदृष्टिरियम् ॥८॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥

एतामिति । एतां दृष्टिमवष्टभ्याश्रित्य नष्टात्मानो नष्टस्वभावा विभ्रष्टपरलोकसाधना अल्पबुद्धयो विषयविषयैव बुद्धिर्येषां तेऽल्पबुद्धयः प्रभवन्त्युग्रकर्माणः क्रूरकर्माणो हिंसात्मकाः क्षयाय जगतः प्रभवन्तीति संबन्धः । जगतोऽहिताः शत्रव इत्यर्थः ॥ ९ ॥

ते च—

कामभाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वासद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ॥ १० ॥

काममिच्छाविशेषमाश्रित्यावष्टभ्य दुष्पूरमशक्यपूरणं दम्भमानमदान्विता दम्भश्च मानश्च मदश्च दम्भमानमदास्तैरन्विता दम्भमानमदान्विता मोहादविवेकतो गृहीत्वोपादायासद्ग्राहानशुभनिश्चयान्प्रवर्तन्ते लोकेऽशुचिव्रता अशुचीनि व्रतानि येषां तेऽशुचिव्रता ॥ १० ॥

किं च—

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥

चिन्तामपरिमेयां च न परिमातुं शक्यते यस्याश्चिन्ताया इयत्ता सापरिमेया तामपरिमेयां प्रलयान्तां मरणान्तामुपाश्रिताः सदा चिन्तापरा इत्यर्थः । कामोपभोगपरमाः काम्यन्त इति कामाः शब्दादयस्तदुपभोगपरमाः, अयमेव परमः पुरुषार्थो यः कामोपभोग इत्येवंनिश्चितात्मान एतावदिति निश्चिताः ॥ ११ ॥

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥ १२ ॥

आशापाशेति । आशापाशशतैराशा एव पाशास्तच्छतैराशापाशशतैर्बद्धा नियन्त्रिताः सन्तः सर्वत आकृष्यमाणाः, कामक्रोधपरायणाः कामक्रोधौ परमयनं पर आश्रयो येषां ते कामक्रोधपरायणाः, ईहन्ते चेष्टन्ते कामभोगार्थं कामभोगप्रयोजनाय न धर्मार्थमन्यायेनार्थसंचयानर्थप्रचयान्परस्वापहरणादिनेत्यर्थः ॥ १२ ॥

ईदृशश्च तेषामभिप्रायः—

इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥

इदं द्रव्यमद्येदानीं मया लब्धमिदमन्यत्प्राप्स्ये मनोरथं मनस्तुष्टिकरमिदं चास्तीदमपि मे भविष्यत्यागामिनि संवत्सरे पुनर्धनं तेनाहं धनी विख्यातो भविष्यामि ॥ १३ ॥

असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ १४ ॥

असौ मयेति । असौ देवदत्तनामा मया हतो दुर्जयः शत्रुः, हनिष्ये चान्यान्वराकानपरानपि किमेते करिष्यन्ति तपस्विनः सर्वथापि नास्ति मत्तुल्य ईश्वरोऽहमहं भोगी सर्वप्रकारेण च सिद्धोऽहं सम्पन्नः पुत्रैः पौत्रैर्नप्तृभिर्न केवलं मानुषोऽहं बलवान्सुखी चाहमेवान्ये तु भूमिभारायावतीर्णाः * ॥ १४ ॥

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥

आढ्य इति । आढ्यो धनेनाभिजनेनाभिजनवान्सप्तपुरुषं श्रोत्रियत्वादिसंपन्न-स्तेनापि न मम तुल्योऽस्ति कश्चित्कोऽन्योऽस्ति सदृशस्तुल्यो मया, किंच यक्ष्ये यागेनाप्यन्यानभिभविष्यामि दास्यामि नटादिभ्यो मोदिष्ये हर्षं चातिशयं प्राप्स्यामीत्येवमज्ञानेन विमोहिता अज्ञानविमोहिता विविधमविवेकभावमापन्नाः ॥ १५ ॥

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥

अनेकेति । अनेकचित्तविभ्रान्ता उक्तप्रकारैरनेकैश्चित्तैर्विविधं भ्रान्ता अनेकचित्त-विभ्रान्ता मोहजालसमावृता मोहोऽविवेकोऽज्ञानं तदेव जालमिवावरणात्मकत्वात्तेन समावृताः प्रसक्ताः कामभोगेषु तत्रैव निषण्णाः सन्तस्तेनोपचितकल्मषाः पतन्ति नरकेऽशुचौ वैतरण्यादौ ॥ १६ ॥

आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥

आत्मेति । आत्मसंभाविता सर्वगुणविशिष्टतयात्मनैव संभाविता आत्मसंभाविता न साधुभिः, स्तब्धा अप्रणतात्मनो धनमानमदान्विता धननिमित्तो मानो मदश्च ताभ्यां धनमानमदाभ्यामन्विता यजन्ते नामयज्ञैर्नाममात्रैर्यज्ञैस्ते दम्भेन धर्मध्वजितया-विधिपूर्वकं विहिताङ्गेतिकर्तव्यतारहितम् ॥ १७ ॥

अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥

अहमिति । अहंकारमहंकरणमहंकारो विद्यमानैरविद्यमानैश्च गुणैरात्मन्यध्यारो-पितैर्विशिष्टमात्मानमहमिति मन्यते सोऽहंकारोऽविद्याख्यः कष्टतमः सर्वदोषाणां मूलं सर्वानर्थप्रवृत्तीनां च तम्। तथा बलं पराभिभवनिमित्तं कामरागान्वितं दर्पं दर्पो नाम यस्योद्भवे धर्ममतिक्रामति सोऽयमन्तःकरणाश्रयो दोषविशेषः कामं स्त्र्यादिविषयं क्रोधमनिष्टविषयमेतानन्यांश्च महतो दोषान्संश्रिताः किंच ते मामीश्वरमात्मपर-देहेषु स्वदेहे परदेहेषु च तद्बुद्धिकर्मसाक्षिभूतं मां प्रद्विषन्तो मच्छासनाति-वर्तित्वं प्रद्वेषस्तं कुर्वन्तोऽभ्यसूयकाः सन्मार्गस्थानां गुणेष्वसहमानाः ॥ १८ ॥

तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥

---

* POA drops अन्ये तु भूमिभारायावतीर्णाः.

तानहमिति । तानहं सर्वान्सन्मार्गप्रतिपक्षभूतान्साधुद्वेषिणो द्विषतश्च मां क्रूरान्संसारेष्वेव नरकसंसरणमार्गेषु नराधमानधर्मदोषवत्त्वात्क्षिपामि प्रक्षिपाम्यजस्रं सततमशुभानशुभकर्मकारिण आसुरीष्वेव क्रूरकर्मप्रायासु व्याघ्रसिंहादियोनिषु क्षिपामीत्यनेन संबन्धः ॥ १९ ॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥

आसुरीमिति । आसुरीं योनिमापन्नाः प्रतिपन्ना मूढा अविवेकिनो जन्मनि जन्मनि प्रतिजन्म तमोबहुलास्वेव योनिषु जायमाना अधो गच्छन्तो मूढा मामीश्वरमप्राप्यानासाद्य हे कौन्तेय ततस्तस्मादपि यान्त्यधमां निकृष्टतमां गतिम् । मामप्राप्यैवेति न मत्प्राप्तौ काचिदप्याशङ्काऽस्त्यतो मच्छिष्टसाधुमार्गमप्राप्येत्यर्थः ॥ २० ॥

सर्वस्या आसुर्याः संपदः संक्षेपोऽयमुच्यते, यस्मिंस्त्रिविधे सर्व आसुरसंपद्भेदोऽनन्तोऽप्यन्तर्भवति, यत्परिहारेण परिहृतश्च भवति, यन्मूलं सर्वस्यानर्थस्य तदेतदुच्यते—

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥

त्रिविधं त्रिप्रकारं नरकस्य प्राप्तावेदं द्वारं नाशनमात्मनो यद्द्वारं प्रविशन्नेव नश्यत्यात्मा कस्मैचित्पुरुषार्थाय योग्यो न भवतीत्येतदत उच्यते द्वारं नाशनमात्मन इति । किं तत्कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् । यत एतद्द्वारं नाशनमात्मनस्तस्मात्कामादित्रयमेतत्त्यजेत् ॥ २१ ॥

(*) त्यागस्तुतिरियम्—

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥

एतैरिति । एतैर्विमुक्तः कौन्तेय तमोद्वारैस्तमसो नरकस्य दुःखमोहात्मकस्य द्वाराणि कामादयस्तैरेतैस्त्रिभिर्विमुक्तो नर आचरत्यनुतिष्ठति । किमात्मनः श्रेयो यत्प्रतिबद्धः पूर्वं नाचरति— तदपगमादाचरति ततस्तदाचरणाद्याति परां गतिं मोक्षमपीति ॥ २२ ॥

सर्वस्यैतस्यासुरसंपत्परिवर्जनस्य श्रेयआचरणस्य च शास्त्रं कारणं शास्त्रप्रमाणादुभयं शक्यं कर्तुं नान्यथात —

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥

---

* ASS reads this as part of Bhasya on v 21

— POA and VPP read नाचचार for नाचरति

यः शास्त्रविधिं* कर्तव्याकर्तव्यज्ञानकारणं विधिप्रतिषेधाख्यमुत्सृज्य त्यक्त्वा वर्तते कामकारतः कामप्रयुक्तः सन्न स सिद्धिं पुरुषार्थयोग्यतामवाप्नोति । नाप्यस्मिँल्लोके सुखं नापि परां प्रकृष्टां गतिं स्वर्गं मोक्षं वा ॥ २३ ॥

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्म-
पर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे दैवासुरसंपद्विभागयोगो
नाम षोडशोऽध्यायः ॥ १६ ॥

तस्मादिति । तस्माच्छास्त्रं प्रमाणं ज्ञानसाधनं ते तव कार्याकार्यव्यवस्थितौ कर्तव्याकर्तव्यव्यवस्थायामतो ज्ञात्वा बुद्ध्वा शास्त्रविधानोक्तं विधिर्विधानं शास्त्रेण विधानं शास्त्रविधानं कुर्यान्न कुर्यादित्येवंलक्षणं तेनोक्तं स्वकर्म यत्तत्कर्तुमिहार्हसि । इहेति कर्माधिकारभूमिप्रदर्शनार्थमिति ॥ २४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीम-
च्छंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये दैवासुरसंपद्विभागयोगो
नाम षोडशोऽध्यायः ॥ १६ ॥

---

* VPP and POA add शास्त्रं वेदस्तस्य विधिम् after शास्त्रविधिम्, a reading noticed by ASS also.



## सप्तदशोऽध्यायः ।

तस्माच्छास्त्रं प्रमाणं त इति भगवद्वाक्याल्लब्धप्रश्नबीजः—

**अर्जुन उवाच—**

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥

ये केचिदविशेषिताः शास्त्रविधिं शास्त्रविधानं श्रुतिस्मृतिशास्त्रचोदनामुत्सृज्य परित्यज्य यजन्ते देवादीन्पूजयन्ति श्रद्धयास्तिक्यबुद्ध्यान्विताः संयुक्ताः सन्तः श्रुतिलक्षणं स्मृतिलक्षणं वा कंचिच्छास्त्रविधिमपश्यन्तो वृद्धव्यवहारदर्शनादेव श्रद्दधानतया ये देवादीन्पूजयन्ति त इह ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विता इत्येव गृह्यन्ते । ये पुनः कंचिच्छास्त्रविधिमुपलभमाना एव तमुत्सृज्यायथाविधि देवादीन्पूजयन्ति त इह 'ये शास्त्रविधिमुत्सृज्य यजन्ते' इति न परिगृह्यन्ते । कस्माच्छ्रद्धयान्वितत्वविशेषणात् । देवादिपूजाविधिपरं किंचिच्छास्त्रं पश्यन्त एव तदुत्सृज्याश्रद्दधानतया तद्विहितायां देवादिपूजायां श्रद्धयान्विताः प्रवर्तन्त इति न शक्यं कल्पयितुं यस्मात्तस्मात्पूर्वोक्ता एव 'ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः' इत्यत्र गृह्यन्ते । तेषामेवंभूतानां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः किं सत्त्वं निष्ठावस्थानमाहोस्विद्रजोऽथ वा तम इति । एतदुक्तं भवति या तेषां देवादिविषया पूजा सा किं सात्त्विक्याहोस्विद्राजस्युत तामसीति ॥ १ ॥

सामान्यविषयोऽयं प्रश्नो नाप्रविभज्य प्रतिवचनमर्हतीति—

**श्रीभगवानुवाच—**

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥

त्रिविधा त्रिप्रकारा भवति श्रद्धा । यस्यां निष्ठायां त्वं पृच्छसि देहिनां सा

स्वभावजा । जन्मान्तरकृतो धर्मादिसंस्कारो मरणकालेऽभिव्यक्तः स्वभाव उच्यते ततो जाता स्वभावजा । सात्त्विकी सत्त्वनिर्वृत्ता देवपूजादिविषया, राजसी रजोनिर्वृत्ता यक्षरक्षःपूजादिविषया, तामसी तमोनिर्वृत्ता प्रेतपिशाचादिपूजाविषयैव त्रिविधा तामुच्यमानां श्रद्धां शृणु ॥ २ ॥

सैव त्रिविधा भवति—

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।

श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥

सत्त्वानुरूपा विशिष्टसंस्कारोपेतान्तःकरणानुरूपा सर्वस्य प्राणिजातस्य श्रद्धा भवति भारत । यद्येवं ततः किं स्यादित्युच्यते श्रद्धामयः श्रद्धाप्रायोऽयं पुरुषः संसारी जीवः । कथं यो यच्छ्रद्धो या श्रद्धा यस्य जीवस्य स यच्छ्रद्धः स एव तच्छ्रद्धानुरूप एव स जीवः ॥ ३ ॥

ततश्च कार्येण लिङ्गेन देवादिपूजया सत्त्वादिनिष्ठानुमेयेत्याह—

यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ।

प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥

यजन्ते पूजयन्ति सात्त्विकाः सत्त्वनिष्ठा देवान्, यक्षरक्षांसि राजसाः, प्रेतान्भूतगणांश्च सप्तमातृकादींश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥

एवं कार्यतो निर्णीता सत्त्वादिनिष्ठा शास्त्रविध्युत्सर्गे तत्र कश्चिदेव सहस्रेषु देवपूजादितत्परः सत्त्वनिष्ठो भवति बाहुल्येन तु रजोनिष्ठास्तमोनिष्ठाश्चैव प्राणिनो भवन्ति, कथम्—

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।

दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥

अशास्त्रविहितं न शास्त्रविहितमशास्त्रविहितं घोरं पीडाकरं प्राणिनामात्मनश्च तपस्तप्यन्ते निर्वर्तयन्ति ये तपो जनास्ते च दम्भाहंकारसंयुक्ता दम्भश्चाहंकारश्च दम्भाहंकारौ ताभ्यां संयुक्ता दम्भाहंकारसंयुक्ताः कामरागबलान्विताः कामश्च रागश्च कामरागौ तत्कृतं बलं कामरागबलं तेनान्विताः कामरागबलेनान्विताः ॥ ५ ॥

कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ।

मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥

कर्शयन्त इति । कर्शयन्तः कृशीकुर्वन्तः शरीरस्थं भूतग्रामं करणसमुदायम् चेतसोऽविवेकिनो मां चैव तत्कर्मबुद्धिसाक्षिभूतमन्तःशरीरस्थं कर्शयन्तो मद-

अफलाकाङ्क्षिभिरफलार्थिभिर्यज्ञो विधिदृष्टः शास्त्रचोदनादृष्टो यो यज्ञ इज्यते निर्वर्त्यते यष्टव्यमेवेति यज्ञस्वरूपनिर्वर्तनमेव कार्यमिति मनः समाधाय नानेन पुरुषार्थो मम कर्तव्य इत्येवं निश्चित्य स सात्त्विको यज्ञ उच्यते ॥ ११ ॥

<u>अभिसंधाय तु फलं</u> दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥

अभिसंधायेति । अभिसंधायोद्दिश्य फलं दम्भार्थमपि चैव यदिज्यते भरतश्रेष्ठ यज्ञं विद्धि राजसम् ॥ १२ ॥

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥

विधिहीनमिति । विधिहीनं यथाचोदितविपरीतम्, असृष्टान्नं ब्राह्मणेभ्यो न सृष्टं न दत्तमन्नं यस्मिन्यज्ञे सोऽसृष्टान्नस्तमसृष्टान्नम्, मन्त्रहीनं मन्त्रतः स्वरतो वर्णतश्च वियुक्तं मन्त्रहीनम्, अदक्षिणमुक्तदक्षिणारहितं, श्रद्धाविरहितं यज्ञं तामसं परिचक्षते तमोनिर्वृत्तं कथयन्ति ॥ १३ ॥

अथेदानीं तपस्त्रिविधमुच्यते—

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च <u>शारीरं</u> तप उच्यते ॥ १४ ॥

देवाश्च द्विजाश्च गुरवश्च प्राज्ञाश्च देवद्विजगुरुप्राज्ञास्तेषां पूजनं देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवमृजुत्वं ब्रह्मचर्यमहिंसा च शरीरनिर्वर्त्यं शारीरं शरीरप्रधानैः सर्वैरेव कार्यकरणैः कर्त्रादिभिः साध्यं शारीरं तप उच्यते । पञ्चैते तस्य हेतव इति हि वक्ष्यति ( XVIII. 15 ) ॥ १४ ॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥

अनुद्वेगेति । अनुद्वेगकरं प्राणिनामदुःखकरं वाक्यं सत्यं प्रियहितं च यत्प्रियहिते दृष्टादृष्टार्थे । अनुद्वेगकरत्वादिभिर्धर्मैर्वाक्यं विशिष्यते । विशेषणधर्मसमुच्चयार्थश्चशब्दः । परप्रत्ययनार्थं प्रयुक्तस्य वाक्यस्य सत्यप्रियहितानुद्वेगकरत्वानामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनता स्याद्यदि, न तद्वाङ्मयं तपः । तथा सत्यवाक्यस्येतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनतायां न वाङ्मयतपस्त्वम् । तथा प्रियवाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनस्य न वाङ्मयतपस्त्वम् । तथा हितवाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा वियुक्तस्य न वाङ्मयतपस्त्वम् । किं पुनस्तत्तपो यत्सत्यं वाक्यमनुद्वेगकरं प्रियहितं च यत्तत्परमं तपो वाङ्मयम् । यथा शान्तो भव वत्स स्वाध्यायं योगं चानुतिष्ठ तथा ते श्रेयो भविष्यतीति । स्वाध्यायाभ्यसनं चैव यथाविधि वाङ्मयं तप उच्यते ॥ १५ ॥

मन प्रसाद सौम्यत्व मौनमात्मविनिग्रह ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥

मन इति । मन प्रसादो मनस प्रशान्ति स्वच्छतापादन मनस प्रसाद । सौम्यत्व यत्सौमनस्यमाहुर्मुखादिप्रसादकार्योऽन्त करणस्य* वृत्ति मौन वाक्संयमोऽपि मन संयमपूर्वको भवतीति कार्येण कारणमुच्यते मन संयमो मौनमिति । आत्मविनिग्रहो मनोनिरोध सर्वत सामान्यरूप आत्मविनिग्रहो वाग्विषयस्यैव मनस संयमो मौनमिति विशेष । भावसंशुद्धि परैर्व्यवहारकालेऽमायावित्व भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥

यथोक्त कायिक वाचिक मानस च तपस्तप्त नरै सत्त्वादिभेदेन कथ त्रिविध भवतीत्युच्यते—

श्रद्धया परया तप्त तपस्तत् त्रिविध नरै ।
अफलाकाङ्क्षिभिर्युक्तै सात्त्विक परिचक्षते ॥ १७ ॥

श्रद्धयास्तिक्यबुद्ध्या परया प्रकृष्टया तप्तमनुष्ठित तपस्तत्प्रकृत त्रिविध त्रिप्रकार त्र्यधिष्ठान नरैरनुष्ठातृभिरफलाकाङ्क्षिभि फलाकाङ्क्षारहितैर्युक्तै समाहितैर्यदीदृश तपस्तत्सात्त्विक सत्त्वनिर्वृत्त परिचक्षते कथयन्ति शिष्टा ॥ १७ ॥

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्त राजस चलमध्रुवम् ॥ १८ ॥

सत्कारेति । सत्कारमानपूजार्थं सत्कार साधुकार साधुरय तपस्वी ब्राह्मण इत्येवमर्थं मानो मानन प्रत्युत्थानाभिवादनादिस्तदर्थं पूजा पादप्रक्षालनार्चनाशयितृत्वादिस्तदर्थं च तप सत्कारमानपूजार्थं दम्भेन चैव यत्क्रियते तपस्तदिह प्रोक्त कथित राजस चल कादाचित्कफलत्वेनाध्रुवम् ॥ १८ ॥

मूढग्राहेणात्मनो यत्पीडया क्रियते तप ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥

मूढेति । मूढग्राहेणाविवेकनिश्चयेनात्मन पीडया क्रियते यत्तप परस्योत्सादनार्थं विनाशार्थं वा तत्तामस तप उदाहृतम् ॥ १९ ॥

इदानीं दानभेद उच्यते—

---

* ASS reads मुखादिप्रसादकार्यान्त करणस्य ।

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

दातव्यमित्येव मनः कृत्वा यद्दानं दीयतेऽनुपकारिणे प्रत्युपकारासमर्थाय समर्थायापि निरपेक्षं दीयते देशे पुण्ये कुरुक्षेत्रादौ काले मकरान्त्यादौ पात्रे च षडङ्गविद्वेदपारग इत्यादौ तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१ ॥

यत्त्विति । यत्तु दानं प्रत्युपकारार्थं काले स्वयं मां प्रत्युपकरिष्यतीत्येवमर्थं फलं वास्य दानस्य मे भविष्यत्यदृष्टमिति तदुद्दिश्य पुनर्दीयते च परिक्लिष्टं खेदसंयुक्तं तद्राजसं स्मृतम् ॥ २१ ॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥

अदेशेति । अदेशकालेऽपुण्ये देशे म्लेच्छाशुच्यादिसंकीर्णेऽकाले पुण्यहेतुत्वेनाप्रख्याते संक्रान्त्यादिविशेषरहितेऽपात्रेभ्यश्च मूर्खतस्करादिभ्यो देशादिसंपत्तौ चासत्कृतं प्रियवचनपादप्रक्षालनपूजादिरहितमवज्ञातं पात्रपरिभवयुक्तं यद्दानं तत्तामसमुदाहृतम् ॥ २२ ॥

यज्ञदानतपःप्रभृतीनां साद्गुण्यकरणायायमुपदेश उच्यते—

ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥

ओं तत्सदित्येष निर्देशो निर्दिश्यतेऽनेनेति निर्देशस्त्रिविधो नामनिर्देशो ब्रह्मणः स्मृतश्चिन्तितो वेदान्तेषु ब्रह्मविद्भिः । ब्राह्मणास्तेन निर्देशेन त्रिविधेन वेदाश्च यज्ञाश्च विहिता निर्मिताः पुरा पूर्वमिति निर्देशस्तुत्यर्थमुच्यते ॥ २३ ॥

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥

तस्मादोमित्युदाहृत्योच्चार्य यज्ञदानतपःक्रिया यज्ञादिस्वरूपाः क्रियाः प्रवर्तन्ते विधानोक्ताः शास्त्रचोदिताः सततं सर्वदा ब्रह्मवादिनां ब्रह्मवदनशीलानाम् ॥ २४ ॥

तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥

तदिति । तदित्यनभिसंधाय तदिति ब्रह्माभिधानमुच्चार्यानभिसंधाय च कर्मणः फलं यज्ञतपःक्रिया यज्ञक्रियाश्च तपःक्रियाश्च यज्ञतपःक्रिया दानक्रियाश्च विविधाः क्षेत्रहिरण्यप्रदानादिलक्षणाः क्रियन्ते निर्वर्त्यन्ते मोक्षकाङ्क्षिभिर्मोक्षार्थिभिर्मुमुक्षुभिः ॥ २५ ॥

ओंतच्छब्दयोर्विनियोग उक्तोऽधेदानीं सच्छब्दस्य विनियोगः कथ्यते—

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६ ॥

सद्भावेऽसतः सद्भावे तथाविद्यमानस्य पुत्रस्य जन्मनि तथा साधुभावेऽसद्वृत्तस्यासाधोः सद्वृत्तता साधुभावस्तस्मिन्साधुभावे च सदित्येतदभिधानं ब्रह्मणः प्रयुज्यते तत्रोच्यतेऽभिधीयते । प्रशस्ते कर्मणि विवाहादौ च तथा सच्छब्दः पार्थ युज्यते प्रयुज्यत इत्येतत् ॥ २६ ॥

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥

यज्ञे यज्ञकर्मणि या स्थितिस्तपसि च या स्थितिर्दाने च या स्थितिः सा सदित्युच्यते विद्वद्भिः, कर्म चैव तदर्थीयं यज्ञदानतपोऽर्थीयमथवा यस्याभिधानत्रयं प्रकृतं तदर्थीयमीश्वरार्थीयमित्येतत् । सदित्येवाभिधीयते । तदेतद्यज्ञतपआदिकर्मासात्विकं त्रिगुणमपि श्रद्धापूर्वकं ब्रह्मणोऽभिधानत्रयप्रयोगेण सगुणं सात्विकं संपादितं भवति ॥ २७ ॥

तत्र च सर्वत्र श्रद्धाप्रधानतया सर्वं संपाद्यते यस्मात्तस्मात्—

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥ १७ ॥

अश्रद्धया हुतं हवनं कृतं दत्तं च ब्राह्मणेभ्योऽश्रद्धया, तपस्तप्तमनुष्ठितमश्रद्धया, अश्रद्धयैव कृतं यत्स्तुतिनमस्कारादि तत्सर्वमसदित्युच्यते ...

बाह्यत्वात्पार्थ। न च तद्बहायासमपि प्रेत्य फलाय नो अपोहार्यं साधुभिर्निन्दितत्वादिति ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥ १७ ॥



# Adhyāya V

1. ( 1 ) Śankara has written a long introduction to this Adhyāya in which he tries to show that the sannyāsa with which the Yoga is compared in v. 1-6 is the sannyāsa without the knowledge ( ज्ञानरहित. संन्यास: ) Some of his arguments and our replies to the same are as follows:—.

( a ) Sankara-Several verses of Adhyāya IV, viz, 18, 19, 21, 22, 24, 33, 34, 37 teach sannyāsa accompanied by knowledge We have however shown that these verses and also IV. 42 deal with the Yoga or the Karmayoga which is in our opinion accompanied by the highest knowledge (IV. 35).

( b ) According to Śankara Bha Gi IV. 42 teaches the Karmayoga 'which is not accompanied by knowledge' In the opinion of Sankara

'We have shown that Bha Gi IV 42 mentions योग which is preceded by the knowledge of Atman.

( c ) These Sannyāsa and Yoga are mutually contradictory because the former is accompanied by knowledge and the latter is not

We hold that both are accompanied by knowledge and since the Yoga is preceeded by the renunciation of all desire for the rewards of actions, it is on a par with the sannyāsa which involves the renunciation of both the actions and the desires

(2) ननु चात्मविदो ज्ञानयोगेन निष्ठा .... ..नानुपपन्न'r

In Note (1) above we have noticed that in the opinion of Śankara a great number of the verses of Adhyāya IV deal with ज्ञानपूर्व संन्यास ( and Bha. Gi IV. 42 deals with योग

which is "ज्ञानरहितकर्मानुष्ठान" ) and in Bha. Gī. V. 1 a question as to which of the above two is better than the other is asked. So, an opponent asks Śankara that this question is not consistent with the teaching of Adh. IV as interpreted by Śankara himself. ( In our opinion all these verses of Adhyāya IV deal with the Karmayoga which means the Path of Disinterested Action ) Moreover, there can be no question of the better one out of two paths one of which is preceded by knowledge and the other is not.

In our opinion this पूर्वपक्ष itself is an important refutation of Śankara's view about these verses of the Gitā Śankara replies that though the sannyāsa of Adh. IV is ज्ञानसहितसंन्यास, the संन्यास in the question of Bha. Gī. V. 1 is ज्ञानरहितसंन्यास and therefore a question about the better one out of ज्ञानरहितसंन्यास and ज्ञानरहितकर्मानुष्ठान is quite possible. This reply is only a lame defence of his mistake by Śankara. The fact is that between ज्ञानसहितसन्यास and ज्ञानसहितकर्मानुष्ठान, a preference can be and is pointed out here. " अनात्मविदपि कर्ता पक्षे प्राप्तोऽनूद्यत एव " is a false assumption of Śankara.

( 3 ) प्रतिवचनवाक्यार्थं ... . . Sankara:—

We shall later on see that the reply of the Lord also does not favour Śankara.

For the other points raised by Sankara in his introduction *vide* our summary of the same in the foot-notes of his bhāsya

1. ( 1 ) According to Śankara the संन्यास in these verses (1-6) is Renunciation devoid of the knowledge (ज्ञानरहितसंन्यास).

But according to the context both Sannyāsa and Yoga mentioned here are those preceded by the knowledge, because they are said to lead ( directly ) to the final beattitude (निःश्रेयसकर) in v. 2. In v. 6 Śankara himself takes the word sannyāsa as the Renunciation in the proper sense.

( 2 ) मे कतरच्छ्रेयः and श्रेयोवाहिमेन स्यात्—Śā. bhāsya.

Sankara tries to show that the question of Arjuna is about his own fitness for the Path he should follow to get his own good, because later on he will say that the answer of the Lord is also about Arjuna's own good Sankara does not recognise the fact that even for the ज्ञानिन the Path of Yoga is regarded by the Gita as better than the Path of Sannyāsa

(3) To what verses in Adh III and IV, does पुनः in v 1A refer? ' पुनः " does not mean that once (e g in Adh II or III) the Lord had told A. about both the Sannyasa and the Yoga and that he again (e g in Adh IV) told him about the same two

Sankara does not seem to be particular in explaining पुनः, he has referred to पुनः twice ( सांख्यानां संन्यासिनां ज्ञानयोगेन निष्ठा पुनः कर्मयोगेन योगिनां निष्ठा प्रोक्ता and संन्यासं शंससि कथयसीत्येतत् । पुनर्योगं च शंससि ) without mentioning what two passages are referred to by पुनः but he seems to hold that ज्ञानसहितसांख्य or संन्यास and कर्मयोग were first mentioned in Adhyāya II and they are again mentioned in Adhyāyas III and IV and the Lord does not mention his preference for either but says that सांख्य and योग are for two different classes of men.

We hold that Arjuna's question (Bha. Gī III. 1) is already answered in Bha. III Gī 8 (कर्म ज्यायो ह्यकर्मणः)

According to Sankara Arjuna's doubt in Bha Gī V 1 is based upon the statement in Bha Gī III. 4 and the कर्मयोग laid down in Adh. III and IV Thus, Sankara having explained संन्यास or सांख्य in Bha. Gī V 1-4 as ज्ञानरहितसंन्यास tries to trace it to Bha Gī III. 4

We hold that सांख्य does not mean संन्यास ( *Vide* our interpretation of Bha Gī II )

So, we suggest the following explanation of पुनः 'पुनः' does not mean that both संन्यास and योग are stated by the Lord at two places in Adh II-IV We suggest that Arjuna objects to two points having been mentioned by the Lord

at two places, he wants to know and to hear about only one path which he should follow without any further discussion. So, he complains not about सन्यास and योग being once mentioned Adh II and again in Adh III–IV, but he complains against **two** standpoints being mentioned twice He had complained against the mention of बुद्धि and कर्म in Bha Gi III 1 and wanted to know only one of the two now he again finds that the Lord has mentioned **two** paths in Bha Gi IV (*Vide* IV 20 22 28 where सन्यास as well as योग are referred to) and so he does not like this method of Kṛṣṇa, he wants Kṛṣṇa to let him know only **one** path which he should follow

So, the Lord has not mentioned सन्यास and कर्मयोग in Adh. II, but he has mentioned them both in Adhyaya IV (See अपि in Bha. Gi. IV 20 22, some of the Yajnas e g in v 26–27 refer to सन्यासिन्s, also v 28 while Bha Gi IV 32–42 deal with कर्मयोग only)

(4) यच्छ्रेय–Sankara explains this as 'यदनुष्ठानाच्छ्रेयो व्याप्तिर्मम स्यात्' Thus he tries to bring in मम though it is not given in the verse By introducing मम in the verse he makes the question raised by Arjuna here a question meant for Arjuna (or a मध्यम अधिकारिन्) only But this is not supported by the word of the verse His question is a question for the entire humanity

(5) एकम्–अन्यतरस्यैकपुरुषानुष्ठेयत्वासंभवात्–Sa bha Perhaps Sankara emphasizes सदैकपुरुषानुष्ठेयत्वासंभव (impossibility of being practised by the same man at the same time) because he believes the ज्ञान leads to सन्यास and कर्म is devoid of ज्ञान, so one and the same man cannot be ज्ञानिन् and at the same time follow the path of कर्मयोग But it should be remembered that ज्ञान is not in conflict with कर्मयोग rather the Gitā emphasizes that after the attainment of ज्ञान the कर्मयोग should be practised (Bha Gi 42) in preference to सन्यासयोग the Path of Renunciation which may be pursued instead of कर्मयोग after ज्ञान is attained. सन्यास is in conflict of कर्म and ज्ञान precedes both. (कर्म has two aspects साधन and साध्य, for which see above Note (4) on v IV 38)

**2** ( 1 ) According to Sankara the सन्यास in this verse is the सन्यास *taken by an ignorant man* ( अनात्मविद् ) such a man shall not be benefited by सन्यास at all So his सन्यास is *inferior to the* कर्मयोग which is in the opinion of Sankara practised only by the ignorant ( अनात्मविद् )

In our opinion both सन्यास and कर्मयोग are to be followed after the attainment of ज्ञान and are equally good for the attainment of *Moksa* and yet the *Gita* prefers the Karmayoga The reason for this preference is the fact that the Path of Renunciation is more difficult than that of Karmayoga (Bha Gi V 6A) and that a sage possessed of Karmayoga reaches *Brahman without delay* ( *Bha Gi. V 6B* )

( 2 ) निःश्रेयसकरौ उभौ-" Both the Path of Renunciation and *the Path of Disinterested Action lead to Moksa* " निःश्रेयस is मोक्ष the final Beatitude Sankara also explains निःश्रेयस as मोक्ष

As the सन्यास and कर्मयोग are here declared to be निःश्रेयसकरौ they are Paths to be followed *after the attainment* of ज्ञान, because without ज्ञान it is impossible to get Moksa *There are also many verses in the Gita where* सन्यास and कर्मयोग are stated to be preceded by ज्ञान ( Bha Gi IV 20, 22, 35, 41, 42)

Sankara takes the सन्यास as the renunciation of the ignorant ( अनात्मविद् ) so he *says that the renunciation* and the disinterested action first lead to ज्ञान and then they *lead to Moksa* This *addition of Sankara* is not at all justified by any word in the verse, and, it is against the clear statement in the Gita as to the priority of the attainment of ज्ञान to the pursuit of सन्यास or कर्मयोग

( 3 ) कर्मसन्यासात्केवलात् and स्तौति-Sankara has taken सन्यास as सन्यास followed by the ignorant *so he adds* केवलात् (pure, i e without the knowledge of Atman) By saying that the verse contains a स्तुति *of* कर्मयोग, Sankara means that the verse is not to be understood literally But this again

is wrong The Gita really favours कर्मयोग in preference to सन्यास of the ज्ञानिन् It is because he takes सन्यास in the verse as the सन्यास of the ignorant that he has to add केवलात् and स्तौति

**3** The कर्मयोग is superior to कर्मसन्यास because really सन्यास means giving up love and hatred ', not merely the abandonment of actions as such मोक्ष is attained by one who is free from द्वेष and आकाङ्क्षा (or राग)

Sankara does not notice the importance of the verse at all The Gita prefers the spirit of सन्यास ( absence of द्वन्द्वs) to the actual garb of सन्यास सुखम् is to be contrasted with दुःखम् in v 6 The Gita does not deny the Path of Renunciation of Action but prefers the Path of Disinterest ed Action to that of Renunciation because the former is easier than the latter

" बन्धात्प्रमुच्यते " means the s me as ब्रह्म अधिगच्छति "

**4-5** ( **1** ) Sankara seems to take सांख्य as सन्यास We hold that सांख्य here refers to the Sāmkhya mentioned in Bha. GI II. 39 and therefore it does not mean सन्यास Hence in our opinion these two verses ( 4-5 ) deal with the सांख्ययोग and कर्मयोग ( योग in v 4a is explained as कर्मयोग by Sankara also )

We have already stated why in our opinion the सांख्य in Bha. GI II ( and elsewhere in the Gitā ) cannot mean सन्यास In verses 4 5 there is also no reference to सांख्य as सन्यास moreover the force of तु in v 6 seems to us to be that of distinguishing सन्यास ( of the ज्ञानिन् ) from both the सांख्य and योग ( i. e कर्मयोग )

It may be asked why a reference to सांख्य is made when as a matter of fact, a comparison of सन्यास and योग was being considered. We find an explanation in the force of तु in v 6 The author of the Gita puts सांख्य on a par with योग ( in v 4-5 ) and so he mentions सांख्य along with योग and contrasts सन्यास with both सांख्य and

योग As the verses (4 and 5) occur in a very natural way and as the author does not try to introduce the सांख्य though it is a new factor in the discussion we suggest that in the days of the Gita the सांख्य was a very well-known Path and some people considered it to be different from the Yoga, but the author of the Gita denied this difference and held that there was no difference between सांख्य and योग, but that the real distinction was between सांख्य and योग on the one side and संन्यास on the other

As regards the difference between सांख्य and योग (=कर्मयोग) *in the pre-Gitā period* we beg to *suggest* that the Gita explained the ancient कर्मयोग, which was believed to be a *सकामयोग, as a निष्कामयोग In the आपस्तम्बधर्मसूत्र which must be* placed prior to the Gita we read

विद्या प्रत्यनध्याय श्रूयत न कर्मयोगे मन्त्राणाम् ॥

'The holidays stated *in the* Sruti *are with regard to the* study, and not in the case of the Path of the rites described *in the Mantras* ' (Āpastamba Dharmasutra I. 4 12 9) The same work knows the word योग in the sense of a Path e g in एतेन ह्यहं योगेन भूय पूर्वस्मात्कालाच्छ्रुतमकुर्वीत (By this Path I made a further study than at an earlier time Āpa Dha Su I. 4 13 22) *and also in आध्यात्मिकान्योगाननुतिष्ठेन्न्यायसंहितानैश्चारिकान्* (He should perform the spiritual *Paths together with nyāya, which prevent the* wandering of the mind from its object and fix it on the contemplation of the Atman Āpastamba Dha. Su I. 8 22 1) The Manusmrti perhaps depends upon such passages as these *in the* Āpastamba Dharmasutra when it says

*कामात्मता न प्रशस्ता न चैवेहास्त्यकामता ।*
काम्यो हि वेदाधिगम कर्मयोगश्च वैदिक ॥
(Manu II. 2)

*Cf* also *अकामस्य क्रिया काचिद्दृश्यते नेह कर्हिचित् ।*
यद्यद्धि कुरुते किंचित्तत्तत्कामस्य चेष्टितम् ॥
(Manu II 4)

If these verses of Manu belong to a pre-Gitā period or are based upon pre-Gitā works like the Āpastamba Dharmasūtra, we can easily understand the new interpretation which the Gitā gave to the old कर्मयोग ( Bha. Gī. IV. 23-33; III. 14-16 ) and also the fact that the Gitā rejects in toto the old interpretation of the Vedic Karmakānda ( e. g. in Bha. Gī. IX. 20-21, II. 42-48 ).

On the strength of the Gītā itself we hold that सांख्य was not a Path of संन्यास even in the days of the Gitā. सांख्य seems to have been originally a philosophy of the immortality of the soul ( Bha. Gī. II and Katha Upa. II. 18-19 ) and then it was applied to the science of warfare ; and as a warrior fought with no particular anxiety about success in the war because he was equal-minded in both success ( which meant the conquest of the kingdom of the earth ) and failure ( which also meant the conquest of enjoyment in the Heaven ), the सांख्य philosophy lead to सांख्ययोग the Path of Sāmkhya ( or the philosophy of the immortality of the soul ) which was on a par with the कर्मयोग. But the Gitā made a change in the old sāmkhya when it made a सांख्ययोग out of सांख्य, just as it made a change in the sense of कर्मयोग. ( Śve Upa. VI. 18 seems to be later than the Gitā. )

This change in the sense of सांख्य we notice for the first time in the fifth Adhyāya of the Gitā. In the second Adhyāya ( Bha. Gitā. II. 37-39 ) we find the word सांख्य associated not only with the philosophy of the immortality of the soul but also with the heaven and the equal-mindedness in the case of success and failure of the war-effort. But in the fifth Adhyāya the सांख्य means a Path of equal-mindedness in success and failure ( of a war-effort or any undertaking whatsoever ) with the same reward as that of the Karmayoga, viz., the attainment of Brahman ( the स्थान of the Lord ). The Gitā particularly emphasizes this fact and therefore it seems to alter an older view about the same, which is already stated in Bha. Gī. II. 37-38.

( 2 ) भिन्नपुरुषानुष्ठेययोः—Śā. bhāsya. This is true about

सन्यास and कर्मयोग but not true about सारय and कर्मयोग Ac cording to the context of the Gita the same man may and can follow one out of the two because in either case he has to live as a gehastha doing his duties disinterestedly, the difference between सारय and योग (=कर्मयोग) being theoretical ( or philosophical ) and not practical Even when the reward of the सारय was the heaven or the conquest of the earth, the practical part of the सारय Path was a disinterested effort of war and in that much it did not differ from the Karmayoga

( 3 ) साख्ययोगौ पृथग्बाला प्रवदन्ति न पण्डिता —*and* यत्सारये प्राप्यते स्थान तद्योगैरपि गम्यते—

Though we have suggested some points which both the सारय and योग *seem to* have held for the exact information about the diffrence between these two Paths we have probably no source available to us And our suggestion that verse 5 seems *to criticise and modify* an ancient belief that the सारय and the योग lead to different *goals is a conjecture* and requires further evidence in the form of some text and so far no such text is available

( 4 ) यद्यप्यर्जुनेन सन्यास कर्मयोग च केवलमभिप्रेत्य प्रश्न कृतो भगवास्तु तदपरित्यागेनैव स्वाभिप्रेत च विशेष सयोज्य शब्दान्तरवाच्यतया प्रतिवचन ददौ सारव्ययोगाविति ।

Here Sankara is at great difficulty in explaining the inconsistency between Arjuna s question and the Lord s reply The fact is that Arjuna's question is not rightly interpreted by Sankara. According to Sankara verses 1-2 deal with सन्यास without ज्ञान and कर्मयोग without ज्ञान, but *on* the strength of the context we have shown that both सन्यास and कर्मयोग are *Paths preceded by ज्ञान Sankara's* remarks that the Lord has not given up the implication *of Arjuna's question* but to it he has added what he intended to add ( स्वाभिप्रेत विशेष सयोज्य ), *do not* seem to us to be convincing "शब्दान्तरवाच्यतया "-We do not hold that सारय is a synonym ( शब्दान्तर ) of सन्यास, nor does

( a ) In the Gita it mean that the साख्य and योग are two different Path of equal status with the same goal and in that sence only they are one

( b ) Mahabharata ( *MBh XII 305 19, 316 4, 305 31; 310 8, 26, 318 71, 100-101* )-The साख्य and योग are one because the योग has *adopted* the साख्य *doctrine* of प्रकृति and because both have rejected the doctrine of 2 प्रकृतिs of the Vedanta of the Gitā The साख्य and योग of the Mahābharata differed about the conception of the individual soul The योग distinguished between the जीव and परमात्मन् while the साख्य did not.

( c ) Classical Schools of साख्य and योग-The two are one, because both have the same philosophical doctrines, the doctrine of God in the योग being immaterial, ( He being only a पुरुषविशेष, and not a जगत्कर्तृ ), though they differ in the means of getting Moksa. विवेक is the means according to साख्य and चित्तवृत्तिनिरोध through अष्टाङ्ग, आसन, etc, is the means in the Yoga School *

6 ( i ) Sankara's introduction to v 6 *is noteworthy* If साख्य is a higher step than कर्मयोग, as Sankara has said *in his commentary on* v 5, *then the natural conclusion* will follow that साख्य is superior to कर्मयोग But this conclusion *is inconsistent with* v 2 *of this very Adhyāya*, which clearly says that कर्मयोग is better than सन्यास Sankara finds it necessary to solve this contradiction between his interpretation of v 5 and v 2 केवल in केवल कर्मसन्यासम् is Sankara's own addition *Again* he has to say that सन्यास with ज्ञान is the topic tn v 6 and is called साख्य in v 6 But the fact is that all the three *viz*, सन्यास and कर्मयोग in v. 1-2 and in v 5-6-7 and साख्य in v 5-6 are Paths accompanied by ज्ञान and there is no statement here in the Gitā that साख्य is सन्यास with ज्ञान or that साख्य is superior to कर्मयोग Sankara's अवतरणिका *to* v 6 *is* necessary for him because otherwise

* For a detailed explanation of Bha Gi V 5B see the Author s Akṣara A *forgotten* chapter in the history of Indian Philosophy, PP 57-58

he could not defend his interpretation of सन्यास in v 1-2 ( and 6 ) as सन्यास without ज्ञान

( 2 ) यस्तु कर्मयोगो वैदिक स तादर्थ्यायोग सन्यास इति चोपचर्यते—Sa bhasya.–Here we should note that कर्मयोग is in Sankara s system a step to सांख्य i. e सन्यास In order to make out this sense from this verse Sankara interprets the word ब्रह्म in v 6B as सन्यास This is absurd.

But the कर्मयोग has two aspects, as we have noticed al ready in our interpretation of Bha GI IV

The साधन aspect of कर्मयोग is a means to both सन्यास and the साध्य or फल aspect of कर्मयोग Therefore we are told in v 6A that it is difficult to reach सन्यास without the help of कर्मयोग

Sankara could have depended upon v 6A for his theory that कर्मयोग is a means to सन्यास and ought to have admitted the साध्य aspect of कर्मयोग stated in v 6B and interpreted ब्रह्म in the sense of the highest Reality

( 3 ) सन्यासस्तु—The text does not seem to us to refer to सांख्य in v 4-5 by सन्यास in v 6 सन्यास is here discussed in contrast to both सांख्य and योग stated in v 4-5 तु shows that the verse is a continuation of the topic of verses 2 and 3

( 4 ) पारमार्थिक —Sa. bhā Sankara's addition of the word पारमार्थिक shows that also in v 1-2 सन्यास with ज्ञान is meant. In the verses ( v 1-2 and 6 ) neither the word केवल nor the word पारमार्थिक occurs.

( 5 ) मुनिर्मननादीश्वरस्वरूपस्य मुनि —Sā bhāsya Sankara implies that the योगी is not already a ज्ञानिन् ( he simply meditates on the ईश्वरस्वरूप and will realize it in future ) But this is a wrong meaning of " मुनि ". The word means one who is a sage already, who has already realized Brahman in this life

( 6 ) ब्रह्म is according to Sankara ' सन्यास ' This kind of explanation of a word like ब्रह्मन् in the Gitā seems to us

to be absurd and serves in the hands of the commentators as a so-called support to there respective views. The context shows that *ब्रह्म अधिगच्छति in v 6 is equal to बन्धनात्प्रमुच्यते in v 3*

( *7* ) कर्मयोगो विशिष्यते Sa bhasya Śankara also takes v 6 as a continuation of v 2 (and v 3) This shows that instead of interpreting सांख्य in v 4-5 as *संन्यास*, we should take v 4 and 5 as a further explanation of सांख्य stated in Bha Gi II 39 The author of the Gita distinguishes not *only योग from संन्यास* but also सांख्य *from संन्यास*

( 8 ) योगयुक्त–After ज्ञान one can follow either संन्यास or कर्मयोग It is better to follow कर्मयोग than to follow संन्यास संन्यास is *not an easy path, moreover संन्यास may* be reached through कर्मयोग or without the help of कर्मयोग The latter is very difficult The sense seems to be that if संन्यास generally cannot be reached without कर्मयोग, why should we not continue कर्मयोग upto the attainment of ब्रह्मन् *which is not* very late even through कर्मयोग

( 9 ) न चिरेण—It is not that संन्यास can bring मोक्ष or ब्रह्मन् earlier than *कर्मयोग, because संन्यास is more troublesome* and will take greater time in being achieved if it be pursued without the help of कर्मयोग

( *10* ) *In v 6 it is stated that कर्मयोग is* better than संन्यास because the latter is *difficult to be reached* without the help of कर्मयोग In Bha Gi III 4A the argument for the preference of *कर्मयोग to संन्यास is stated to be that नैष्कर्म्य* which must precede संन्यास cannot be achieved without the साधन aspect of कर्मयोग ( Verse III 8 says that absolute *abandonment of actions* is not possible since even a संन्यासिन् must do some actions for the *maintenance of his body* )

Verse 6 only admits the possibility of संन्यास without कर्मयोग as a first step in a *few cases* It is not inconsistent with v 4A of Adhyaya III.

( *11* ) *According to v 6* there are three possible Paths of getting Brahman —

(a) ज्ञान immediately followed by सन्यास–a very difficult way

(b) ज्ञान followed by कर्मयोग (i e the साधन aspect of कर्मयोग) which will in its course be followed by सन्यास–an easier way, a usual way for ordinary men

(c) ज्ञान followed by the कर्मयोग in its साधन aspect which will be followed by the कर्मयोग in its फल aspect

Out of these three the first is expressed in v 6A, the second is implied in v 6A and the third is expressed in v 6B

We have added ज्ञान as the first requisite because in Adhyāya IV we have been told that ज्ञान precedes both सन्यास and कर्मयोग as we have already explained. See 'सर्वभूतात्मभूतात्मा' in v 7

7 (1) In the case of this verse Sankara admits that योग or practice of Disinterested Action leads to 'no bondage'

But Sankara does not take this verse as explaining the meaning of v 6B, as we think it does In our opinion विशुद्धात्मा, विजितात्मा and सर्वभूतात्मभूतात्मा are characteristics of the योगयुक्त, they are necessarily possessed by योगयुक्त Sankara takes them as additional qualities acquired by a योगयुक्तमुनि later in his life (see यदा and तत्र वर्तमान in his bhāṣya)

(2) कुर्वन्नपि–Sankara is right in explaining this as लोकसंग्रहाय कर्म कुर्वन्नपि "Though doing his duties for the guidance of the people"

कुर्वन्नपि in this verse has the same sense as कृत्वापि in समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते (Bha. Gi IV 22), though Sankara explains that verse as dealing with यति and कृत्वापि as भिक्षाटनादिक कर्म कृत्वापि (*Vide* Sā bhā. on Bha. Gi IV 22)

(3) For the explanation of the force of अपि in कुर्वन्नपि, we have many parallel passages with अपि, e. g कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः (Bha. Gi. IV 20, see also XVIII. 56)

(4) This verse also is an argument why the Gita prefers कर्मयोग to सन्यास As there is no harm, no bondage from the performance of all duties the योगयुक्त should conti

nue योग the practice of all his duties ( कुर्वन्नपि योगमाचरन् )

*In other words the* verse means that freedom from bondage is possible even if one continues doing his duties just as it is possible if one takes to Renunciation of his duties Renunciation *is not the only* Path *for freedom* from bondage

*This is also the argument given in favour of* कर्मयोग in Bha Gi III 4 ( न च संन्यसनादेव सिद्धिं समधिगच्छति—Renunciation is not the only way to get Perfection or Moksa )

8 9 ( 1 ) मन्येत While the follower of कर्मयोग really does all his duties he believes firmly that he does nothing because ( a ) all activities are the result of the functioning *of senses with reference to their objects* ( इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ) and because ( b ) he can attribute or dedicate all actions to Brahman ( v 10 ) also because ( c ) he can do his duties with body mind intellect and senses alone ( केवल–Bha *Gi V 11 12* )

( 2 ) तत्त्ववित् shows that the follower of योग is a ज्ञानिन्

( 3 ) इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्–Cf यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ( Bha. Gi III. 7 )

( *4* ) Sankara *does not seem to us to* be correct in separating नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित् from पश्यन् etc By the separation of the parts of the verse Sankara seems to try to prove that the first part (नैव किञ्चित् तत्त्ववित् ) *is* a philosophical truth ( teaching कर्मण अभावदर्शनम् ) and the second part ( पश्यन् etc ) is only a standpoint ( *Vide* कथं वा तत्त्वमवधारयन्मन्येत in Sankara's introduction to v 9 ) leading to the तत्त्वावधारण the realization that there *is no real action*

( 5 ) Having interpreted the verse as *stated in the* above note, Sankara remarks that this तत्त्ववित् must take to Renunciation of all actions This is his conclusion from *the verse*

But in our opinion the verse does not *teach* that there is really or philosophically no action or activity at all

or that all activity is like the sense of water in a mirage (*Vide* Sa Bhā on the verse) It rather teaches that the action which is a real fact does not originate from the योगयुक्त himself (but it originates from the senses) and therefore he is not responsible for them

**10** (1) The purpose of this verse is to give one more argument for the belief which the तत्त्वविद् is asked to hold in the preceding verse The तत्त्वविद् should do his duties attributing them or dedicating them to Brahman and thus he will be free from the sins or bondage caused by the practice of actions

We take ब्रह्मन् as the Supreme Reality and the dedication of all duties to Brahman is taught also in Bha. Gī. III. 9 ( यज्ञार्थं कर्मन् ), III. 15 (तस्मात् सर्वगत ब्रह्म नित्य यज्ञे प्रतिष्ठितम्), IV 23-24 ( ब्रह्मार्पण ब्रह्म हवि etc), III. 30 ( मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा । निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वर ॥ ), etc etc

(2) Sankara takes अतत्त्वविद् as the topic of this verse The reason for this absurd change of context proposed by Sankara is to be found in his remarks at the end of his commentary on v 9 (सर्वकर्मसंन्यास एवाधिकार ), he found that these remarks were not consistent with " करोति य " in v 10, so, he supplied " अतत्त्वविद् " from his own imagination

But, as the context shows v. 9 (इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्) points one way of being unstained by actions actually done by the योगयुक्त and " ब्रह्मण्याधाय कर्माणि ' another way for the same aim of the same man ( तत्त्वविद् ). The word 'योगिन ' in v 11 also shows that अतत्त्वविद् is not the topic of v 10-11 ( *Vide* also our remarks on सर्वकर्मसंन्यास ज्ञाननिष्ठा in Sā bha on v. 12 below )

**11-12** (1) Sankara makes much of " आत्मशुद्धये " in this verse. He seems to support his view that the topic of v 10 is अतत्त्वविद् by referring to "आत्मशुद्धये" in this verse

But the aim of कर्मयोग is both आत्मशुद्धि and the attainment of मोक्ष ( शान्तिमाप्नोति नैष्ठिकीम् in v 12 ) कर्मयोग in the

फल्गुनया रूपमदर्शन गच्छतीति फलमिति फलनिर्वचनं तदेतदेवलक्षणं फलं भव-त्यत्यागिनामज्ञानां कर्मिणामपरमार्थसन्यासिनां प्रेत्य शरीरपातादूर्ध्वम् । न तु परमार्थसन्यासिनां परमहंसपरिव्राजकानां केवलज्ञाननिष्ठानां क्वचित् । न हि केवलसम्यग्दर्शननिष्ठा अविद्यादिसंसारबीजं नोन्मूलयन्ति कदाचिदित्यर्थः ॥ १२ ॥

अतः परमार्थदर्शिन एवाशेषकर्मसन्यासित्वं संभवत्यविद्याध्यारोपितत्वादात्मनि क्रियाकारकफलानां, न त्वज्ञस्याधिष्ठानादीनि क्रियाकर्तॄणि कारकाण्यात्मत्वेन पश्यतोऽशेषकर्मसन्यासः संभवति*। तदेतदुत्तरैः श्लोकैर्दर्शयति—

पञ्चेमानि महाबाहो कारणानि निबोध मे ।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥

पञ्चेमानि वक्ष्यमाणानि हे महाबाहो कारणानि निर्वर्तकानि निबोध मे ममेति, उत्तरत्र चेतःसमाधानार्थं वस्तुवैषम्यप्रदर्शनार्थं च तानि कारणानि ज्ञातव्यतया स्तौति । सांख्ये ज्ञातव्याः पदार्थाः संख्यायन्ते यस्मिञ्शास्त्रे तत्सांख्यं वेदान्तः । कृतान्त इति तस्यैव विशेषणं कृतमिति कर्मोच्यते तस्यान्तः कृतस्य परिसमाप्तिर्यत्र स कृतान्तः कर्मान्त इत्येतत् । 'यावानर्थ उदपाने' (II 46) 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' (IV. 33) इत्यात्मज्ञाने संजाते सर्वकर्मणां निवृत्तिं दर्शयति । अतस्तस्मिन्नात्मज्ञानार्थे सांख्ये कृतान्ते वेदान्ते प्रोक्तानि कथितानि सिद्धये निष्पत्त्यर्थं सर्वकर्मणाम् ॥ १३ ॥

कानि तानीत्युच्यते—

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥ १४ ॥

अधिष्ठानमिच्छाद्वेषसुखदुःखज्ञानादीनामभिव्यक्तेराश्रयोऽधिष्ठानं शरीरं तथा कर्तोपाधिलक्षणो भोक्ता करणं च श्रोत्रादिकं शब्दाद्युपलब्धये पृथग्विधं नानाप्रकारं द्वादशसंख्यं विविधाश्च पृथक्चेष्टा वायवीयाः प्राणापानाद्या दैवं चैव दैवमेव चात्रैतेषु चतुर्षु पञ्चमं पञ्चानां पूरणमादित्यादि चक्षुराद्यनुग्राहकम् ॥ १४ ॥

शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥

शरीरेति । शरीरवाङ्मनोभिर्यत्कर्म त्रिभिरेतैः प्रारभते निर्वर्तयति नरो न्याय्यं

---

* VPP and POA read अतः ... संभवति as part of the भाष्य on v 12 They read क्रियाकर्तृकारकाणि.

वा धर्म्यं शास्त्रीयं विपरीतं वाशास्त्रीयमधर्म्यम् । यच्चापि निमिषितचेष्टादि जीवनहेतुस्तदपि पूर्वकृतधर्माधर्मयोरेव कार्यमिति न्याय्यविपरीतयोरेव ग्रहणेन गृहीतम्। पञ्चैते यथोक्तास्तस्य सर्वस्यैव कर्मणो हेतव. कारणानि । नन्वधिष्ठानादीनि सर्वकर्मणां कारणानि, कथमुच्यते शरीरवाङ्मनोभिः कर्म प्रारभत इति । नैष दोषः, विधिप्रतिषेधलक्षणं सर्वं कर्म शरीरादित्रयप्रधानं तदङ्गतया दर्शनश्रवणादि च जीवनलक्षणं त्रिधैव राशीकृतमुच्यते शरीरादिभिरारभत इति फलकालेऽपि तत्प्रधानैर्भुज्यत इति पञ्चानामेव हेतुत्वं न विरुध्यते ॥ १५ ॥

तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥

तत्रेति । तत्रेति प्रकृतेन संबध्यते, एवं सति, एवं यथोक्तैः पञ्चभिर्हेतुभिर्निर्वर्त्ये सति कर्मणि । तत्रैव सतीति दुर्मतित्वस्य हेतुत्वेन संबध्यते । तत्र तेष्वात्मानमनन्यत्वेनाविद्यया परिकल्प्य तैः क्रियमाणस्य कर्मणोऽहमेव कर्तेति कर्तारमात्मानं केवलं शुद्धं तु यः पश्यत्यविद्वान्कस्माद्वेदान्ताचार्योपदेशन्यायैरकृतबुद्धित्वादसंस्कृतबुद्धित्वाद्योऽपि देहादिव्यतिरिक्तात्मवाद्यन्यमात्मानमेव केवलं कर्तारं पश्यत्यसावप्यकृतबुद्धिरेवातोऽकृतबुद्धित्वान्न पश्यत्यात्मनस्तत्त्वं कर्मणो वेत्यर्थोऽतो दुर्मतिः कुत्सिता विपरीता दुष्टाजस्रं जननमरणप्रतिपत्तिहेतुभूता मतिरस्येति दुर्मतिः स पश्यन्नपि न पश्यति, यथा तैमिरिकोऽनेकं चन्द्रं, यथा वाभ्रेषु धावत्सु चन्द्रं धावन्तं, यथा वा वाहनं उपविष्टोऽन्येषु धावत्स्वात्मानं धावन्तम् ॥ १६ ॥

कः पुनः सुमतिर्यः सम्यक्पश्यतीत्युच्यते—

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ १७ ॥

यस्य शास्त्राचार्योपदेशन्यायसंस्कृतात्मनो न भवत्यहंकृतोऽहं कर्तेत्येवंलक्षणो भावो भावना प्रत्यय एत एव पञ्चाधिष्ठानादयोऽविद्ययात्मनि कल्पिताः सर्वकर्मणां कर्तारो नाहमहं तु तद्व्यापाराणां साक्षिभूतोऽप्राणो ह्यमनाः शुभ्रोऽक्षरात्परतः परः केवलोऽविक्रिय इत्येवं (Mu Upa II 1.2) पश्यतीत्येतत् । बुद्धिरन्तःकरणं यस्यात्मन उपाधिभूता न लिप्यते नानुशयिनी भवतीदमहमकार्षं तेनाहं नरकं गमिष्यामीत्येवं यस्य बुद्धिर्न लिप्यते स सुमतिः स पश्यति । हत्वापि स इमाँल्लोकान्सर्वान्प्राणिन इत्यर्थः । न हन्ति हननक्रियां न करोति न निबध्यते नापि तत्कार्येणाधर्मफलेन संबध्यते ।

I. ननु हत्वापि न हन्तीति विप्रतिषिद्धमुच्यते यद्यपि स्तुतिः। नैष दोषः, लौकिकपारमार्थिकदृष्ट्यपेक्षया तदुपपत्तेः। देहाद्यात्मबुद्ध्या हन्ताहमिति लौकिकीं दृष्टिमाश्रित्य हत्वापीत्याह यथादर्शिता पारमार्थिकीं दृष्टिमाश्रित्य न हन्ति न निबध्यत इति तदुभयमुपपद्यत एव।

II (a) नन्वधिष्ठानादिभिः संभूय करोत्येवात्मा कर्तारमात्मानं केवल त्विति ( XVIII. 16 ) केवलशब्दप्रयोगात्। नैष दोषः आत्मनोऽविक्रियस्वभावत्वेऽधिष्ठानादिभिः संहतत्वानुपपत्तेः। विक्रियावतो ह्यन्यैः संहननं संभवति संहत्य वा कर्तृत्वं स्यात्। न त्वविक्रियस्यात्मनः केनचित्संहननमस्तीति संभूय कर्तृत्वमुपपद्यते। अतः केवलत्वमात्मनः स्वाभाविकमिति केवलशब्दोऽनुवादमात्रम्। अविक्रियत्वं चात्मनः श्रुतिस्मृतिन्यायप्रसिद्धम्। 'अविकार्योऽयमुच्यते' (II 15) 'गुणैरेव कर्माणि क्रियन्ते' (III 27) शरीरस्थोऽपि न करोतीत्याद्यसकृदुपपादितं (XIII. 31) गीतास्वेव तावत्। श्रुतिषु च "ध्यायतीव लेलायतीव" (Br. Upa. IV 3 7) इत्येवमाद्यासु। न्यायतश्च निरवयवमपरतन्त्रमविक्रियमात्मतत्त्वमिति राजमार्गः। (b) विक्रियावत्त्वाभ्युपगमेऽप्यात्मनः स्वकीयैव विक्रिया स्वस्य भवितुमर्हति। नाधिष्ठानादीनां कर्माण्यात्मकर्तृकाणि स्युः। नहि परस्य कर्म परेणाकृतमागन्तुमर्हति। यत्त्वविद्यया गमितं न तत्तस्य यथा रजतत्वं न शुक्तिकायाः यथा वा तलमलवत्त्वं बालैर्गमितमविद्यया नाकाशस्य तथाधिष्ठानादिविक्रियापि तेषामेवेति नाऽऽत्मनः। तस्माद्युक्तमुक्तमहंकृतत्वबुद्धिलेपाभावाद्विद्वान्न हन्ति न निबध्यत इति।

III नायं हन्ति न हन्यत इति प्रतिज्ञाय न जायत इत्यादिहेतुवचनेनाविक्रियत्वमात्मन उक्त्वा वेदाविनाशिनमिति (II 19–21) विदुषः कर्माधिकारनिवृत्तिं शास्त्रादौ संक्षेपत उक्त्वा मध्ये प्रसारिता च तत्र तत्र प्रसङ्गं कृत्वेहोपसंहरति शास्त्रार्थपिण्डीकरणाय विद्वान्न हन्ति न निबध्यत इति। एवं च सति देहभृत्त्वाभिमानानुपपत्तावविद्याकृताशेषकर्मसंन्यासोपपत्तेः संन्यासिनामनिष्टादि त्रिविध

---

Sankara mentions three points —

I —आत्मन् is really अकर्तृ, 'हत्वापि' is spoken of the आत्मन् from the standpoint of लौकिकदृष्टि. II. (a) He cannot be a कर्तृ even in company of अधिष्ठान, etc, because he cannot come into contact with अधिष्ठान etc as he is अविक्रिय (b) Even if आत्मन् is विक्रियावत्, the कर्तृत्व which really belongs to अधिष्ठानादि can never belong to आत्मन्. III. Relation of XVIII. 17 with II. 19–21 must be kept in mind.

कर्मण फल न भवती युपपन्न तद्विपर्ययाच्चेतरेषा भवतीत्येतच्चापरिहार्यमित्येव गीताशास्त्रस्यार्थ उपसहृत । स एष सर्ववेदार्थसारो निपुणमतिभि पण्डितैर्विचार्य प्रतिपत्तव्य इति तत्र तत्र प्रकरणविभागेन दर्शितोऽस्माभि शास्त्र यायानुसारेण ॥ १७ ॥

अथेदानीं कर्मणा प्रवर्तकमुच्यते—

ज्ञान ज्ञेय परिज्ञाता त्रिविधा कर्मचोदना ।
करण कर्म कर्तेति त्रिविध कर्मसग्रह ॥ १८ ॥

ज्ञान ज्ञायतेऽनेनेति सर्वविषयमविशेषेणोच्यते । तथा ज्ञेय ज्ञातव्य तदपि सामान्येनैव सर्वमुच्यते । तथा परिज्ञातोपाधिलक्षणाऽविद्याकल्पितो भोक्ता, इत्येतत्त्रयमेषामविशेषेण सर्वकर्मणा प्रवर्तिका त्रिविधा त्रिप्रकारा कर्मचोदना । ज्ञानादीना हि त्रयाणा सनिपाते हानोपादानादिप्रयोजन सर्वकर्मारम्भ स्यात्तत पञ्चभिरधिष्ठानादिभिरारब्ध वाङ्मन कायाश्रयभेदेन त्रिधा राशीभूत त्रिषु करणादिषु सगृह्यत इत्येतदुच्यते । करण क्रियतेऽनेनेति बाह्य श्रोत्रादि, अन्तस्थ बुद्ध्यादि कर्मेप्सिततम कर्तु क्रियया व्याप्यमान, कर्ता करणाना व्यापारयितोपाधिलक्षण इति त्रिविधस्त्रिप्रकार कर्मसग्रह सगृह्यतेऽस्मिन्निति सग्रह कर्मण सग्रह कर्मसग्रह । कर्म हि त्रिषु समवैति तेनाय त्रिविध कर्मसग्रह ॥ १८ ॥

अथेदानीं क्रियाकारकफलाना सर्वेषा गुणात्मकत्वात्सत्त्वरजस्तमोगुणभेदत स्त्रिविधो भेदो वक्तव्य इत्यारभ्यते—

ज्ञान कर्म च कर्ता च त्रिधैव गुणभेदत ।
प्रोच्यते गुणसख्याने यथावच्छृणु तान्यपि ॥ १९ ॥

ज्ञान कर्म च, कर्म क्रिया, न कारक पारिभाषिकमीप्सिततम कर्म, कर्ता च निवर्तक क्रियाणा त्रिधैवावधारण गुणव्यतिरिक्तजात्यन्तराभावप्रदर्शनार्थं गुणभेदत सत्त्वादिभेदेनेत्यर्थ, प्रोच्यते कथ्यते गुणसख्याने कापिले शास्त्रे तदपि गुणसख्यान शास्त्र गुणभोक्तृविषये प्रमाणमेव परमार्थब्रह्मैकत्वविषये यद्यपि विरुध्यते । ते हि कापिला गुणगौणव्यापारनिरूपणेऽभियुक्ता इति तच्छास्त्रमपि वक्ष्यमाणार्थस्तुत्यर्थत्वेनोपादीयत इति न विरोध । यथावद्यथान्याय यथाशास्त्र शृणु तान्यपि ज्ञानादीनि तद्भेदजातानि गुणभेदकृतानि शृणु वक्ष्यमाणेऽर्थे मन समाधि कुर्वित्यर्थ ॥ १९ ॥

ज्ञानस्य तु तावत् त्रिविधत्वमुच्यते—

सर्वभूतेषु येनैक भावमव्ययमीक्षते ।
अविभक्त विभक्तेषु तज्ज्ञान विद्धि सात्त्विकम् ॥ २० ॥

सर्वभूतेष्वव्यक्तादिस्थावरान्तेषु भूतेषु येन ज्ञानेनैकं भाव वस्तु भावशब्दो वस्तुवाच्येकमात्मवस्त्वित्यर्थः । अव्यय न व्येति स्वात्मना धर्मैर्वा कूटस्थनित्यमित्यर्थः । ईक्षते येन ज्ञानेन पश्यति त च भावमविभक्त प्रतिदेह विभक्तेषु देहभेदेषु न विभक्तं तदात्मवस्तु व्योमवन्निरन्तरमित्यर्थः । तज्ज्ञानमद्वैतात्मदर्शनं सात्त्विकं सम्यग्दर्शन विद्धीति । यानि द्वैतदर्शनान्यसम्यग्भूतानि राजसानि तामसानि चेति न साक्षात्संसारोच्छित्तये भवन्ति ॥ २० ॥

पृथक्त्वेन तु यज्ज्ञान नानाभावान्पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञान विद्धि राजसम् ॥ २१ ॥

पृथक्त्वेनेति । पृथक्त्वेन तु भेदेन प्रतिशरीरमन्यत्वेन यज्ज्ञान नानाभावान्भिन्नात्मनः पृथग्विधान्पृथक्प्रकारान्भिन्नलक्षणानित्यर्थः । वेत्ति विजानाति यज्ज्ञानं सर्वेषु भूतेषु ज्ञानस्य कर्तृत्वासंभवाद्येन ज्ञानेन वेत्तीत्यर्थः । तज्ज्ञान विद्धि राजसं रजोनिर्वृत्तम् ॥ २१ ॥

यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहेतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥

यत्त्विति । यत्तु ज्ञान कृत्स्नवत्समस्तवत्सर्वविषयमिवैकस्मिन्कार्ये देहे बहिर्वा प्रतिमादौ सक्तमेतावानेवात्मेश्वरो वा नातः परमस्तीति यथा नग्नक्षपणकादीनां* शरीरानुवर्ती देहपरिमाणो जीव ईश्वरो वा पाषाणदार्वादिमात्र इत्येवमेकस्मिन्कार्ये सक्तमहेतुक हेतुवर्जित निर्युक्तिकमतत्त्वार्थवद्यथाभूतोऽर्थस्तत्त्वार्थोऽस्य ज्ञेयभूतोऽस्तीति तत्त्वार्थवन्न तत्त्वार्थवदतत्त्वार्थवदहेतुकत्वादेवाल्प चाल्पविषयत्वादल्पफलत्वाद्वा तत्तामसमुदाहृतम् । तामसाना हि प्राणिनामविवेकिनामीदृश ज्ञान दृश्यते ॥ २२ ॥

अथ कर्मणस्त्रैविध्यमुच्यते—

नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥

नियत नित्य सङ्गरहितमासक्तिवर्जितमरागद्वेषतः कृत रागप्रयुक्तेन द्वेषप्रयुक्तेन च कृत रागद्वेषतः कृत तद्विपरीत कृतमरागद्वेषतः कृतमफलप्रेप्सुना फल प्रेप्सतीति फलप्रेप्सुः फलतृष्णस्तद्विपरीतेनाफलप्रेप्सुना कर्त्रा कृत कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥

यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥

---

* POA has a v. l. नग्नश्रमणकादीनाम्. 'श्रमणक' might explain ईश्वरो वा पाषाणदार्वादिमात्रे, नग्न alone referring to देहपरिमाणो जीवः,

यत्विति । यत्तु कामेप्सुना फलप्रेप्सुनेत्यर्थ । कर्म साहङ्कारेण वा साहङ्कारेणेति न तत्वज्ञानापेक्षया किं तर्हि लौकिकश्रोत्रियनिरहङ्कारापेक्षया । यो हि परमार्थनिरहङ्कार आत्मवित्र तस्य कामेप्सुत्वबहुलायासकर्तृत्वप्राप्तिरस्ति । सात्विकस्यापि कर्मणोऽनात्मवित्साहङ्कार कर्ता किमुत राजसतामसयो । लोकेऽनात्मविदपि श्रोत्रियो निरहङ्कार उच्यते निरहङ्कारोऽयं ब्राह्मण इति । तस्मात्तदपेक्षयैव साहङ्कारेण वेत्युक्तम् । पुन शब्द पादपूरणार्थ । क्रियते बहुलायास कर्त्रा महतायासेन निवर्त्यते तत्कर्म राजसमुदाहृतम् ॥ २४ ॥

अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥

अनुबन्धमिति । अनुबन्ध पश्चाद्भावि यद्वस्तु सोऽनुबन्ध उच्यते त चानुबन्ध क्षयं यस्मिन्कर्मणि क्रियमाणे शक्तिक्षयोऽर्थक्षयो वा स्यात्त क्षय हिंसा प्राणिपीडा मनपेक्ष्य च पौरुष पुरुषकार शक्नोमीद कर्म समापयितुमित्येवमात्मसामर्थ्यम्, इत्येतान्यनुबन्धादान्यनपेक्ष्य पौरुषान्तानि मोहादविवेकत आरभ्यते कर्म यत्तत्तामस तमोनिर्वृत्तमुच्यते ॥ २५ ॥

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वित ।
सिद्ध्यसिद्ध्योर्निर्विकार कर्ता सात्विक उच्यते ॥ २६ ॥

मुक्तेति । मुक्तसङ्गो मुक्त परित्यक्त सङ्गो येन स मुक्तसङ्गोऽनहंवादी नाहंवदनशीलो धृत्युत्साहसमन्वितो धृतिर्धारणमुत्साह उद्यमस्ताभ्या समन्वित सयुक्तो धृत्युत्साहसमन्वित सिद्ध्यसिद्ध्यो क्रियमाणस्य कर्मण फलसिद्धावसिद्धौ च सिद्ध्यसिद्ध्योर्निर्विकार: केवल शास्त्रप्रमाणप्रयुक्तो न फलरागादिनायुक्तो य स निर्विकार उच्यते । एवभूत कर्ता य स सात्विक उच्यत ॥ २६ ॥

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचि ।
हर्षशोकान्वित कर्ता राजस परिकीर्तित ॥ २७ ॥

रागीति । रागी रागोऽस्यास्तीति रागी, कर्मफलप्रेप्सु कर्मफलार्थी, लुब्ध परद्रव्येषु सजाततृष्णस्तीर्थादौ च स्वद्रव्यापरित्यागी, हिंसात्मक परपीडास्वभावोऽशुचिर्बाह्यान्त'शौचवर्जिता हर्षशोकान्वित इष्टप्राप्तौ हर्षोऽनिष्टप्राप्तविष्टवियोगे च शोकस्ताभ्या हर्षशोकाभ्यामन्वित सयुक्तस्तस्यैव च कर्मण सपत्तिविपत्त्यो हर्षशोकौ स्याता ताभ्या सयुक्तो य कर्ता स राजस परिकीर्तित ॥ २७ ॥

अयुक्त: प्राकृत. स्तब्ध: शठो नैष्कृतिकोऽलस ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥

सर्वभूतेष्वव्यक्तादिस्थावरान्तेषु भूतेषु येन ज्ञानेनैकं भाव वस्तु भावशब्दो वस्तुवाच्येकमात्मवस्त्वित्यर्थं । अव्यय न व्येति स्वात्मना धर्मैर्वा कूटस्थनित्यमित्यर्थं । ईक्षते येन ज्ञानेन पश्यति त च भावमविभक्त प्रतिदेह विभक्तेषु देहभेदेषु न विभक्तं तदात्मवस्तु व्योमवन्निरन्तरमित्यर्थं । तज्ज्ञानमद्वैतात्मदर्शनं सात्त्विकं सम्यग्दर्शन विद्धीति । यानि द्वैतदर्शनान्यसम्यग्भूतानि राजसानि तामसानि चेति न साक्षात्संसारोच्छित्तये भवन्ति ॥ २० ॥

पृथक्त्वेन तु यज्ज्ञान नानाभावान्पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञान विद्धि राजसम् ॥ २१ ॥

पृथक्त्वेनेति । पृथक्त्वेन तु भेदेन प्रतिशरीरमन्यत्वेन यज्ज्ञान नानाभावान्भिन्नानात्मन पृथग्विधान्पृथक्प्रकारान्भिन्नलक्षणानित्यर्थं । वेत्ति विजानाति यज्ज्ञानं सर्वेषु भूतेषु ज्ञानस्य कर्तृत्वासंभवाद्येन ज्ञानेन वेत्तीत्यर्थं । तज्ज्ञान विद्धि राजस रजोनिर्वृत्तम् ॥ २१ ॥

यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहेतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥

यत्त्विति । यत्तु ज्ञान कृत्स्नवत्समस्तवत्सर्वविषयमिवैकस्मिन्कार्ये देहे बहिर्वा प्रतिमादौ सक्तमेतावानेवात्मेश्वरो वा नात परमस्तीति यथा नग्नक्षपणकादीना* शरीरानुवर्ती देहपरिमाणो जीव ईश्वरो वा पाषाणदार्वादिमात्र इत्येवमेकस्मिन्कार्ये सक्तमहेतुक हेतुवर्जित निर्युक्तिकमतत्त्वार्थवद्यथाभूतोऽर्थस्तत्त्वार्थं सोऽस्य ज्ञेयभूतोऽस्तीति तत्त्वार्थवन्न तत्त्वार्थवदतत्त्वार्थवदहेतुकत्वादेवाल्प चाल्पविषयत्वादल्पफलत्वाद्वा तत्तामसमुदाहृतम् । तामसानां हि प्राणिनामविवेकिनामीदृग् ज्ञान दृश्यते ॥ २२ ॥

अथ कर्मणस्त्रैविध्यमुच्यते—

नियतं सङ्गरहितमरागद्वेषत कृतम् ।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥

नियत नित्य सङ्गरहितमासक्तिवर्जितमरागद्वेषत कृत रागप्रयुक्तेन द्वेषप्रयुक्तेन च कृत रागद्वेषत कृत तद्विपरीत कृतमरागद्वेषत कृतमफलप्रेप्सुना फल प्रेप्सतीति फलप्रेप्सु फलतृष्णस्तद्विपरीतेनाफलप्रेप्सुना कर्त्रा कृत कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥

यत्तु कामेप्सुना कर्म साहंकारेण वा पुन ।
क्रियते बहुलायास तद्राजसमुदाहृतम् ॥ २४ ॥

* POA has a v. l. नग्नश्रमणकादीनाम् 'श्रमणक' might explain ईश्वरो वा पाषाणदार्वादिमात्रे, नग्न alone referring to देहपरिमाणो जीव,

यदिवेति । यत्तु कामेप्सुना फलप्रेप्सुनेत्यर्थः । कर्म साहङ्कारेण वा साहङ्कारेणेति न तत्त्वज्ञानापेक्षया किं तर्हि लौकिकश्रोत्रियनिरहंकारापेक्षया । यो हि परमार्थनिरहंकार आत्मवित्तस्य कामेप्सुत्वबहुलायासकर्तृत्वप्राप्तिरस्ति । सात्त्विकस्यापि कर्मणोऽनात्मवित्साहंकारः कर्ता किमुत राजसतामसयोः । लोकेऽनात्मविदपि श्रोत्रियो निरहंकार उच्यते निरहंकारोऽयं ब्राह्मण इति । तस्मात्तदपेक्षयैव साहंकारेण वेत्युक्तम् । पुनः शब्दः पादपूरणार्थः । क्रियते बहुलायासं कर्त्रा महतायासेन निर्वर्त्यते तत्कर्म राजसमुदाहृतम् ॥ २४ ॥

अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥

अनुबन्धमिति । अनुबन्धः पश्चाद्भावि यद्वस्तु सोऽनुबन्ध उच्यते तं चानुबन्धं, क्षयं यस्मिन्कर्मणि क्रियमाणे शक्तिक्षयोऽर्थक्षयो वा स्यात्तं क्षयं, हिंसां प्राणिपीडामनपेक्ष्य च पौरुषं पुरुषकारं शक्नोमीदं कर्म समापयितुमित्येवमात्मसामर्थ्यम्, इत्येतान्यनुबन्धादीन्यनपेक्ष्य पौरुषान्तानि मोहादविवेकत आरभ्यते कर्म यत्तत्तामसं तमोनिर्वृत्तमुच्यते ॥ २५ ॥

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६ ॥

मुक्तेति । मुक्तसङ्गो मुक्तः परित्यक्तः सङ्गो येन स मुक्तसङ्गोऽनहंवादी नाहंवदनशीलो धृत्युत्साहसमन्वितो धृतिर्धारणमुत्साह उद्यमस्ताभ्यां समन्वितः संयुक्तो धृत्युत्साहसमन्वितः सिद्ध्यसिद्ध्योः क्रियमाणस्य कर्मणः फलसिद्धावसिद्धौ च सिद्ध्यसिद्ध्योर्निर्विकारः केवलं शास्त्रप्रमाणप्रयुक्तो न फलरागादिनायुक्तो यः स निर्विकार उच्यते । एवंभूतः कर्ता यः स सात्त्विक उच्यते ॥ २६ ॥

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥

रागीति । रागी रागोऽस्यास्तीति रागी, कर्मफलप्रेप्सुः कर्मफलार्थी, लुब्धः परद्रव्येषु संजाततृष्णस्तीर्थादौ च स्वद्रव्यापरित्यागी, हिंसात्मकः परपीडास्वभावोऽशुचिर्बाह्यान्तःशौचवर्जितो हर्षशोकान्वित इष्टप्राप्तौ हर्षोऽनिष्टप्राप्ताविष्टवियोगे च शोकस्ताभ्यां हर्षशोकाभ्यामन्वितः संयुक्तस्तस्यैव च कर्मणः संपत्तिविपत्त्योः हर्षशोकौ स्यातां ताभ्यां संयुक्तो यः कर्ता स राजसः परिकीर्तितः ॥ २७ ॥

अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥

अयुक्त इति । अयुक्तोऽसमाहितः प्राकृतोऽत्यन्तासंस्कृतबुद्धिर्बालसमः, स्तब्धो दण्डवन्न नमति कस्मैचित्, शठो मायावी शक्तिगूहनकारी, नैष्कृतिकः परवृत्तिच्छेदनपरोऽलसोऽप्रवृत्तिशीलः कर्तव्येष्वपि, विषादी सर्वदावसन्नस्वभावो दीर्घसूत्री च कर्तव्यानां दीर्घप्रसारणो यदद्य श्वो वा कर्तव्यं तन्मासेनापि न करोति, यश्चैवंभूतः कर्ता स तामस उच्यते ॥ २८ ॥

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥ २९ ॥

बुद्धेर्भेदमिति । बुद्धेर्भेदं धृतेश्चैव भेदं गुणतः सत्त्वादिगुणतस्त्रिविधं शृण्विति सूत्रोपन्यासः । प्रोच्यमानं कथ्यमानमशेषेण निरवशेषतो यथावत्पृथक्त्वेन विवेकतो धनंजय । दिग्विजये मानुषं दैवं च प्रभूतं धनमजयत्तेनासौ धनंजयोऽर्जुनः ॥ २९ ॥

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ ३० ॥

प्रवृत्तिं चेति । प्रवृत्तिं च प्रवृत्तिः प्रवर्तनं बन्धहेतुः कर्ममार्गः, निवृत्तिं च निवृत्तिर्मोक्षहेतुः संन्यासमार्गः, बन्धमोक्षसमानवाक्यत्वात्प्रवृत्तिनिवृत्ती कर्मसंन्यासमार्गाविषयत्वगम्यते । कार्याकार्ये विहितप्रतिषिद्धे कर्तव्याकर्तव्ये करणाकरणे इत्येतत्, कस्य देशकालाद्यपेक्षया दृष्टादृष्टार्थानां कर्मणाम् । भयाभये बिभेत्यस्मादिति भयं तद्विपरीतमभयं भयं चाभयं च भयाभये दृष्टादृष्टविषययोर्भयाभययोः कारणे इत्यर्थः । बन्धं सहेतुकं मोक्षं च सहेतुकं या वेत्ति विजानाति बुद्धिः सा पार्थ सात्त्विकी । तत्र ज्ञानं बुद्धेर्वृत्तिर्बुद्धिस्तु वृत्तिमती । धृतिरपि वृत्तिविशेष एव बुद्धेः ॥ ३० ॥

यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥

ययेति । यया धर्मं शास्त्रचोदितमधर्मं च तत्प्रतिषिद्धं कार्यं चाकार्यमेव च पूर्वोक्ते एव कार्याकार्ये अयथावत्र यथावत्सर्वतो निर्णयेन न प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥

अधर्मं धर्ममिति या मन्यते तमसावृता ।
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२ ॥

अधर्ममिति । अधर्मं प्रतिषिद्धं धर्मं विहितमिति या मन्यते जानाति तमसावृता सती सर्वार्थान्सर्वानेव ज्ञेयपदार्थान्विपरीतांश्च विपरीतानेव विजानाति बुद्धिः सा पार्थ तामसी ॥ ३२ ॥

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥

धृत्येति । धृत्या यया्ऽव्यभिचारिण्येति व्यवहितेन संबन्धः, धारयते किं मनः-प्राणेन्द्रियक्रिया मनश्च प्राणश्चेन्द्रियाणि च मनःप्राणेन्द्रियाणि तेषां क्रियाश्चेष्टास्ता उच्छास्त्रमार्गप्रवृत्तेर्धारयति । धृता हि धार्यमाणा उच्छास्त्रविषया न भवन्ति । योगेन समाधिनाव्यभिचारिण्या नित्यसमाध्यनुगतयेत्यर्थः । एतदुक्तं भवत्यव्यभिचारिण्या धृत्या मनः प्राणेन्द्रियक्रिया धारयमाणो योगेन धारयतीति । यैवलक्षणा धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥

यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥

ययेति । यया तु धर्मकामार्थान्धर्मश्च कामश्चार्थश्च धर्मकामार्थास्तान्धर्मकामार्थान्धृत्या यया धारयते मनसि नित्यकर्तव्यरूपानवधारयते हेऽर्जुन प्रसङ्गेन यस्य यस्य धर्मादेर्धारणप्रसङ्गस्तेन तेन प्रसङ्गेन फलाकाङ्क्षी च भवति यः पुरुषस्तस्य धृतिर्या सा पार्थ राजसी ॥ ३४ ॥

यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा तामसी मता ॥ ३५ ॥

ययेति । यया स्वप्नं निद्रां भयं त्रासं शोकं विषादमवसादं विषण्णतां मदं विषयसेवामात्मनो बहु मन्यमानो मत्त इव मदमेव च मनसि नित्यमेव कर्तव्यरूपतया कुर्वंश्च विमुञ्चति धारयत्येव दुर्मेधा कुत्सितमेधाः पुरुषो यस्तस्य धृतिर्या सा तामसी मता ॥ ३५ ॥

गुणभेदेन क्रियाणां कारकाणां च त्रिधा भेद उक्तोऽथेदानीं फलस्य च सुखस्य त्रिधा भेद उच्यते—

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६ ॥

सुखं त्विदानीं त्रिविधं शृणु समाधानं कुर्वित्येतन्मे मम भरतर्षभ । अभ्यासात् परिचयादावृत्ते रमते रतिं प्रतिपद्यते यत्र यस्मिन्सुखानुभवे दुःखान्तं च दुःखावसानं दुःखोपशमं च निगच्छति निश्चयेन प्राप्नोति ॥ ३६ ॥

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥

यदिति । यत्तत्सुखमग्रे पूर्वं प्रथमसंनिपाते ज्ञानवैराग्यध्यानसमाध्यारम्भेऽत्यन्तायासपूर्वकत्वाद्विषमिव दुःखात्मकं भवति, परिणामे ज्ञानवैराग्यादिपरिपाकजं सुखममृतोपमं तत्सुखं सात्त्विकं प्रोक्तं विद्वद्भिरात्मनो बुद्धिरात्मबुद्धिरात्मबुद्धेः प्रसादो नैर्मल्यं सलिलवत्स्वच्छता ततो जातमात्मबुद्धिप्रसादजमात्मविषया वात्माल-

त्मना वा बुद्धिरात्मबुद्धिस्तत्प्रसादप्रकर्षाद्वा जातमित्येतत्तस्मात्सात्त्विकं तत् ॥३७॥

विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥

विषयेति । विषयेन्द्रियसंयोगाद्यत्तत्सुखं जायतेऽग्रे प्रथमक्षणेऽमृतोपमममृतसमं परिणामे विषमिव बलवीर्यरूपप्रज्ञामेधाधनोत्साहहानिहेतुत्वादधर्मतज्जनितनरकादिहेतुत्वाच्च परिणामे तदुपभोगविपरिणामान्ते विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥

यदग्रे चेति । यदग्रे चानुबन्धे चावसानोत्तरकाले सुखं मोहनं मोहकरमात्मनो निद्रालस्यप्रमादोत्थं निद्रा चालस्यं च प्रमादश्चेत्येतेभ्यः समुत्तिष्ठतीति निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥

अथेदानीं प्रकरणोपसंहारार्थः श्लोक आरभ्यते—

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥ ४० ॥

न तदस्ति तन्नास्ति पृथिव्यां वा मनुष्यादिषु सत्त्वं प्राणिजातमन्यद्वाप्राणिजातं दिवि देवेषु वा पुनः सत्त्वं प्रकृतिजैः प्रकृतितो जातैरेभिस्त्रिभिर्गुणैः सत्त्वादिभिर्मुक्तं परित्यक्तं यत्स्यात्तदेव न तदस्तीति पूर्वेण संबन्धः ॥ ४० ॥

सर्वः संसारः क्रियाकारकफललक्षणः सत्त्वरजस्तमोगुणात्मकोऽविद्यापरिकल्पितः समूलोऽनर्थ उक्तो वृक्षरूपकल्पनया चोर्ध्वमूलमित्यादिना, तं चासङ्गशस्त्रेण दृढेन छित्त्वा ततः पदं तत्परिमार्गितव्यमिति चोक्तं, तत्र च सर्वस्य त्रिगुणात्मकत्वात्संसारकारणनिवृत्त्यनुपपत्तौ प्राप्तायां यथा तन्निवृत्तिः स्यात्तथा वक्तव्यं, सर्वश्च गीताशास्त्रार्थ उपसंहर्तव्य एतावानेव च सर्वो वेदस्मृत्यर्थः पुरुषार्थमिच्छद्भिरनुष्ठेय इत्येवमर्थं च ब्राह्मणक्षत्रियविशामित्यादिरारभ्यते—

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥

ब्राह्मणाश्च क्षत्रियाश्च विशश्च ब्रा[illegible] ब्राह्मणक्षत्रियवि[illegible] [illegible]णां
च शूद्राणा[illegible] हे परंतप प्र[illegible]
भक्तानी[illegible] (1)
ईश्वरस्य [illegible] [illegible]माया[illegible]
वासै । २ [illegible] से २
अथवा

स्वभावस्य सत्त्वगुणः प्रभवः कारणं, तथा क्षत्रियस्वभावस्य सत्त्वोपसर्जनं रजः प्रभवः, वैश्यस्वभावस्य तमउपसर्जनं रजः प्रभवः, शूद्रस्वभावस्य रजउपसर्जनं तमः प्रभवः प्रशान्त्यैश्वर्येहामूढतास्वभावदर्शनाच्चतुर्णाम् । (iii) अथवा जन्मान्तरकृतसंस्कारः प्राणिनां वर्तमानजन्मनि स्वकार्याभिमुखत्वेनाभिव्यक्तः स्वभावः स प्रभवो येषां गुणानां ते स्वभावप्रभवा गुणाः । गुणप्रादुर्भावस्य निष्कारणत्वानुपपत्तेः स्वभावः कारणमिति कारणविशेषोपादानम् । एवं स्वभावप्रभवैः प्रकृतिप्रभवैः सत्त्वरजस्तमोभिर्गुणैः स्वकार्यानुरूपेण शमादीनि कर्माणि प्रविभक्तानि । ननु शास्त्रप्रविभक्तानि शास्त्रेण विहितानि ब्राह्मणादीनां शमादीनि कर्माणि कथमुच्यते सत्त्वादिगुणप्रविभक्तानीति । नैष दोषः शास्त्रेणापि ब्राह्मणादीनां सत्त्वादिगुणविशेषापेक्षयैव शमादीनि कर्माणि प्रविभक्तानि न गुणानपेक्ष्येवेति शास्त्रप्रविभक्तान्यपि कर्माणि गुणप्रविभक्तानीत्युच्यन्ते ॥ ४१ ॥

कानि पुनस्तानि कर्माणीत्युच्यन्ते—

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥

शमो दमश्च यथाव्याख्यातार्थौ, तपो यथोक्तं शारीरादि, शौचं व्याख्यातं, क्षान्तिः क्षमा, आर्जवमृजुतैव च, ज्ञानं विज्ञानम्, आस्तिक्यमास्तिभावः श्रद्धानतागमार्थेषु, ब्रह्मकर्म ब्राह्मणजातेः कर्म ब्रह्मकर्म स्वभावजम् । यदुक्तं स्वभावप्रभवैर्गुणैः प्रविभक्तानीति तदेवोक्तं स्वभावजमिति ॥ ४२ ॥

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षत्रकर्म स्वभावजम् ॥ ४३ ॥

शौर्यमिति । शौर्यं शूरस्य भावः । तेजः प्रागल्भ्यम् । धृतिर्धारणं सर्वावस्थास्वनवसादो भवति यया धृत्योत्तम्भितस्य । दाक्ष्यं दक्षस्य भावः सहसा प्रत्युत्पन्नेषु कार्येष्वव्यामोहेन प्रवृत्तिः । युद्धे चाप्यपलायनमपराङ्मुखीभावः शत्रुभ्यः । दानं देयेषु मुक्तहस्तता । ईश्वरभावश्चेश्वरस्य भावः प्रभुशक्तिप्रकटीकरणमीशितव्यान्प्रति । क्षत्रकर्म क्षत्रियजातेर्विहितं कर्म क्षत्रकर्म स्वभावजम् ॥ ४३ ॥

कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥

कृषीति । कृषिगौरक्ष्यवाणिज्यं कृषिश्च गौरक्ष्यं च वाणिज्यं च कृषिगौरक्ष्यवाणिज्यं कृषिर्भूमेर्विलेखनं गौरक्ष्यं गा रक्षतीति गोरक्षस्तद्भावो गौरक्ष्यं पाशुपाल्यं वाणिज्यं वणिक्कर्म । क्रयविक्रयादिलक्षणं वैश्यकर्म वैश्यजातेः कर्म वैश्यकर्म स्वभावजम्

परिचर्यात्मकं शुश्रूषास्वभावं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥

एतेषां जातिविहितानां कर्मणां सम्यगनुष्ठितानां स्वर्गप्राप्तिः फलं स्वभावतो वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलधर्मायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते ( Cf Gautama Dharma-sutra XI 29 ) इत्यादिस्मृतिभ्यः पुराणे च वर्णिनामाश्रमिणां च लोकफल-भेदविशेषस्मरणात्। कारणान्तरात्त्विदं फलम्—

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥

स्वे स्वे यथोक्तलक्षणभेदे कर्मण्यभिरतस्तत्परः स्वकर्मानुष्ठानादशुद्धिक्षये सति कायेन्द्रियाणां ज्ञाननिष्ठायोग्यतालक्षणां लभते प्राप्नोति नराऽधिकृतः पुरुषः । किं स्वकर्मानुष्ठानत एव साक्षात्संसिद्धिः । न । कथं तर्हि स्वकर्मनिरतः सिद्धिं यथा येन प्रकारेण विन्दति तच्छृणु ॥ ४५ ॥

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥

यत इति । यतो यस्मात्प्रवृत्तिरुत्पत्तिश्चेष्टा वा यस्मादन्तर्यामिण ईश्वराद् भूतानां प्राणिनां स्याद्येनेश्वरेण सर्वमिदं जगत्ततं व्याप्तं स्वकर्मणा पूर्वोक्तेन प्रतिवर्णं तमीश्वरमभ्यर्च्य पूजयित्वाराध्य केवलं ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं विन्दति मानवो मनुष्यः ॥ ४६ ॥

यत एवमत —

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४७ ॥

श्रेयान्प्रशस्यतरः स्वो धर्मः स्वधर्मो विगुणोऽपीत्यपिशब्दो द्रष्टव्य, परधर्मात्स्व-नुष्ठितात्स्वभावनियतं स्वभावेन नियतं, यदुक्तं स्वभावजमिति तदेवोक्तं स्वभावनियतमिति, यथा विषजातस्येव कृमेर्विषं न दोषकरं तथा स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषं पापम् ॥ ४७ ॥

स्वभावनियतं कर्म कुर्वाणो विषजात इव कृमिः किल्बिषं नाप्नोतीत्युक्तम् । परधर्मश्च भयावह इति। अनात्मज्ञश्च न हि कश्चित्क्षणमप्यकर्मकृत्तिष्ठतीति, अत —

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४८ ॥

सह जन्मनैवोत्पन्नं सहजं किं तत्कर्म कौन्तेय सदोषमपि त्रिगुणत्वान्न त्यजेत्सर्वारम्भा आरभ्यन्त इत्यारम्भाः सर्वकर्माणीत्येतत्प्रकरणात् । ये केचिदारम्भा

स्वधर्माः परधर्माश्च ते सर्वे हि यस्मात् त्रिगुणात्मकत्वमत्र हेतुस्त्रिगुणात्मकत्वाद्दोषेण धूमेन सहजेनाग्निरिवावृताः। सहजस्य कर्मणः स्वधर्माख्यस्य परित्यागेन परधर्मानुष्ठानेऽपि दोषान्नैव मुच्यते, भयावहश्च परधर्मः। न च शक्यतेऽशेषतस्त्यक्तुमज्ञेन कर्म यतस्तस्मान्न त्यजेदित्यर्थः।

किमशेषतस्त्यक्तुमशक्यं कर्मेति न त्यजेत्किं वा सहजस्य कर्मणस्त्यागे दोषो भवतीति* किंचातो, यदि तावदशेषतस्त्यक्तुमशक्यमिति न त्याज्य सहजं कर्मेत्यशेषतस्त्यागे गुण एव स्यादिति सिद्धं भवति। पू०-सत्यमेवमशेषतस्त्याग एव नोपपद्यते।

इति चेत् + किं नित्यप्रचलितात्मकः पुरुषो यथा साङ्ख्यानां गुणाः किंवा क्रियैव कारकं यथा बौद्धानां पञ्च स्कन्धाः क्षणप्रध्वंसिनः, उभयथापि कर्मणोऽशेषतस्त्यागो न भवति। अथ तृतीयोऽपि पक्षो यदा करोति तदा सक्रियं वस्तु यदा न करोति तदा निष्क्रियं वस्तु तदेव। तत्रैवं सति शक्यं कर्माशेषतस्त्यक्तुम्।

÷अयं त्वस्मिंस्तृतीये पक्षे विशेषो न नित्यप्रचलितं वस्तु नापि क्रियैव कारकं किं तर्हि व्यवस्थिते द्रव्येऽविद्यमाना क्रियोत्पद्यते विद्यमाना च विनश्यति, शुद्धं द्रव्यं शक्तिमदवतिष्ठत इत्येवमाहुः काणादास्तदेव च कारकमित्यस्मिन्पक्षे को दोष इति, अयमेव तु दोषो यतस्त्वभागवतं मतमिदम्। कथं ज्ञायते, यत आह भगवान्नासतो विद्यते भाव इत्यादि। काणादानां ह्यसतो भावः सत

---

* Sankara does not imagine the third possible reason, viz., the fact that even the परधर्म is सदोष and hence one should not abandon स्वधर्म even if it be सदोष

\+ Here Sankara unnecessarily enters upon a philosophical discussion, *not guaranteed by the context*. When the Gitā says, 'It is not possible to abandon all actions' (XVIII 11), it simply means, 'If a man were to abandon *all actions, he will have to die* (because breathing also is an action).'

÷ Sankara criticises the असत्कार्यवाद of the वैशेषिकs. He says -(1) *It is against the Gitā* (II. 16 a) and (2) it is against न्याय or reason (सर्वप्रमाणविरुद्ध). (i) The non-existent घट cannot be produced, nor can its production *depend* upon a cause, viz., मृत्तिका. (ii) Nobody will have any faith in a philosophy which believes in the existence (or production) of (what was) the non-existent and in the non-existence (of the effect) after it became the existent (=after it was produced). (iii) The nature of उत्पत्ति of

श्चाभाव इतीद मतम्। अभागवतत्वेऽपि न्यायवच्चेत्को दोष इति चेत्। उच्यते, दोषवत्त्विदं सर्वप्रमाणविरोधात्। कथं, यदि तावद् द्व्यणुकादि द्रव्यं प्रागुत्पत्तेरत्यन्तमेवासदुत्पन्नं च स्थितं कंचित्कालं पुनरत्यन्तमेवासत्त्वमापद्यते। तथा च सत्यसदेव सज्जायते सदेवासत्त्वमापद्यतेऽभावो भावो भवति भावश्चाभाव इति। तत्राभावो जायमानः प्रागुत्पत्तेः शशविषाणकल्पः समवाय्यसमवायिनिमित्ताख्यं कारणमपेक्ष्य जायत इति। (I) न चैवमभाव उत्पद्यते कारणं चापेक्षत इति शक्यं वक्तुमसतां शशविषाणादीनामदर्शनात्। भावात्मकाश्चेद् घटादय उत्पद्यमाना किंचिदभिव्यक्तिमात्रकारणमपेक्ष्योत्पद्यन्त इति शक्यं प्रतिपत्तुम्। (II) किंचासतश्च सद्भावे सतश्चासद्भावे न कश्चित्प्रमाणप्रमेयव्यवहारे विश्वासः कस्यचित्स्यात्। सत्सदेवासदसदेवेति निश्चयानुपपत्तेः (III) किंचोत्पद्यत इति द्व्यणुकादेर्द्रव्यस्य स्वकारणसत्तासंबन्धमाहुः। प्रागुत्पत्तेश्चासत्पश्चात्स्वकारणव्यापारमपेक्ष्य स्वकारणैः परमाणुभिः सत्तया च समवायलक्षणेन संबन्धेन संबध्यते संबद्धं सत्कारणसमवेतं सद्भवति। तत्र वक्तव्यं कथमसतः सत्कारणं भवेत्संबन्धो वा केनचित्। नहि वन्ध्यापुत्रस्य सत्ता संबन्धो वा कारणं वा केनचित्प्रमाणतः कल्पयितुं शक्यम्। ननु नैव वैशेषिकैरभावस्य संबन्धः कल्प्यते द्व्यणुकादीनां हि द्रव्याणां स्वकारणेन समवायलक्षणः संबन्धः सतामेवोच्यत इति। न, संबन्धात्प्राक्सत्त्वानभ्युपगमात्। नहि वैशेषिकैः कुलालदण्डचक्रादिव्यापारात्प्राग्घटादीनामस्तित्वमिष्यते। न च मृद एव घटाद्याकारप्राप्तिमिच्छन्ति। ततश्चासत एव संबन्धः पारिशेष्यादिष्टो भवति। (III a) नन्वसतोऽपि समवायलक्षणः संबन्धो न विरुद्धः। न, वन्ध्यापुत्रादीनामदर्शनात्। घटादेरेव प्रागभावस्य स्वकारणसंबन्धो भवति, न वन्ध्यापुत्रादेः, अभावस्य तुल्यत्वेऽपीति विशेषोऽभावस्य वक्तव्यः। एकस्याभावो द्वयोरभावः सर्वस्याभावः प्रागभावः प्रध्वंसाभाव इतरेतराभावोऽत्यन्ताभाव इति लक्षणतो न केनचिद्विशेषो दर्शयितुं शक्यः। असति च विशेषे घटस्य प्रागभाव एव कुलालादिभिर्घटभावमापद्यते संबध्यते च भावेन कपालाख्येन स्वकारणेन संबद्धश्च सर्वव्यवहारयोग्यश्च भवति, न तु घटस्यैव प्रध्वंसाभावोऽभावत्वे सत्यपीति प्रध्वंसाद्यभावानां न कश्चिद्व्यवहारयोग्यत्वं प्रागभावस्यैव द्व्यणुकादिद्रव्याख्यस्योत्पत्त्यादिव्यवहारार्हत्वमिति नदसमञ्जसमभावत्वाविशेषादत्यन्तप्रध्वंसाभावयोरिव। (III b) ननु नैवास्माभिः प्रागभावस्य भावापत्तिरुच्यते। भावस्यैव हि तर्हि भावापत्तिर्यथा घटस्य घटापत्तिः पटस्य वा पटापत्तिः। एतदप्यभावस्य भावापत्तिवदेव प्रमाणविरुद्धम्।

*साङ्ख्यस्यापि यः परिणामपक्षः सोऽप्यपूर्वधर्मोत्पत्तिविनाशाङ्गीकरणाद्वैशेषिकपक्षादविशिष्टः।

---

द्व्यणुकादि द्रव्य is explained by वैशेषिकs as the union ( संबन्ध ) of द्व्यणुकादि द्रव्य with the सत्ता of its cause But this relation ( संबन्ध ) between cause and effect is in no way possible in the वैशेषिक system itself

* Likewise, the साङ्ख्यपरिणामवाद, अभिव्यक्तितिरोभाववाद and

क्षान विशिष्यते । अभिव्यक्तितिरोभावाङ्गीकरणेऽप्यभिव्यक्तितिरोभावयोर्विद्यमानत्वाविद्यमानत्वनिरूपणे पूर्ववन्नेव प्रमाणविरोध । एतेन कारणस्यैव सस्थानमुत्पत्त्यादीत्येतदपि प्रत्युक्तम् ।

+ पारिशेष्यात्सदेकमेव वस्त्वविद्ययोत्पत्तिविनाशादिधर्मैर्नटवदनेकधा विकल्प्यत इतीद भागवत मतमुक्त नासतो विद्यते भाव ( II 16 ) इत्यस्मिञ्श्लोके । सत्प्रत्ययस्याव्यभिचाराद् व्यभिचाराच्चेतरेषामिति ।

× कथ तर्हि आत्मनोऽविक्रियत्वेऽशेषत कर्मणस्त्यागो नोपपद्यत इति । यदि वस्तुभूता गुणा यदि वाविद्याकल्पितास्तद्धर्म कर्म तदात्मन्यविद्याध्यारोपितमेवेत्यविद्वान्न हि कश्चित्क्षणमप्यशेषतस्त्यक्तु शक्नोतीत्युक्तम् ( III 5 ) । विद्वास्तु पुनर्विद्ययाविद्याया निवृत्ताया शक्नोत्यशेषत कर्म परित्यक्तुमाविद्याध्यारोपितस्य शेषानुपपत्ते । नहि तैमिरिकदृष्ट्याध्यारोपितस्य द्विचन्द्रादेस्तिमिरापगमे शेषोऽवतिष्ठते । एव च सतीद वचनमुपपन्न सर्वकर्माणि मनसास्यादि । ( V 13 ) 'स्वे स्वे कर्मण्यभिरत ससिद्धिं लभते नर ' ( XVIII 45 ) स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव ( XVIII 46 ) इति च ॥ ४८ ॥

या च कर्मजा सिद्धिरुक्ता ज्ञाननिष्ठायोग्यतालक्षणा तस्या फलभूता नैष्कर्म्यसिद्धिर्ज्ञाननिष्ठालक्षणा वक्तव्यति श्लोक आरभ्यते—

असक्तबुद्धि सर्वत्र जितात्मा विगतस्पृह ।
नैष्कर्म्यसिद्धिं परमा सन्यासेनाधिगच्छति ॥ ४९ ॥

असक्तबुद्धिरसक्ता सङ्गरहिता बुद्धिरन्त करण यस्य सोऽसक्तबुद्धि सर्वत्र पुत्रदारादिष्वासक्तिनिमित्तेषु जितात्मा जिता वशीकृत आत्मान्त करण यस्य स जितात्मा विगतस्पृहो विगता स्पृहा तृष्णा देहजीवितभोगेषु यस्मात्स विगतस्पृह । य एवभूत आत्मज्ञ स न नैष्कर्म्यसिद्धिं निर्गतानि कर्माणि यस्मान्निष्क्रियब्रह्मात्म

---

the theory that उत्पत्ति etc is a peculiar state of the cause itself can be refuted

+ Therefore Bh GI II 16A means that उत्पत्ति, विनाश etc are धर्म्स of the One Existence due to अविद्या

× Interpretation of the verse (49) continued–An ignorant man cannot give up all actions because they are superimposed on the Ātman by अविद्या —But, in our opinion, the *Gita* means that *even a विद्वान् cannot give* up all actions as that will mean 'committing suicide' ( vide our Notes on XVIII 11 )

सबोधात्म निष्कर्मा तस्य भावो नैष्कर्म्यं नैष्कर्म्यं च तत्सिद्धिश्च सा नैष्कर्म्य-सिद्धिर्नैष्कर्म्यस्य वा सिद्धिर्निष्क्रियात्मस्वरूपावस्थानलक्षणस्य सिद्धिर्निष्पत्ति-स्ता नैष्कर्म्यसिद्धिं परमां प्रकृष्टां कर्मजसिद्धिविलक्षणां सद्योमुक्त्यवस्थानरूपां सन्यासेन सम्यग्दर्शनेन तत्पूर्वकेण वा सर्वकर्मसन्यासेनाधिगच्छति प्राप्नोति। तथा चोक्तं " सर्वकर्माणि मनसा सन्यस्य नैव कुर्वन्न कारयन्नास्ते " ( V. 13 ) इति ॥ ४९ ॥

पूर्वोक्तेन स्वकर्मानुष्ठानेनेश्वराभ्यर्चनरूपेण जनितां प्रागुक्तलक्षणां सिद्धिं प्राप्तस्योत्पन्नात्मविवेकज्ञानस्य केवलात्मज्ञाननिष्ठारूपा नैष्कर्म्यलक्षणा सिद्धि येन क्रमेण भवति तद्वक्तव्यमित्याह—

सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥

सिद्धिं प्राप्तः स्वकर्मणेश्वरं समभ्यर्च्य तत्प्रसादजां कायेन्द्रियाणां ज्ञाननि-ष्ठायोग्यतालक्षणां सिद्धिं प्राप्तः। सिद्धिं प्राप्त इति तदनुवाद उत्तरार्थः। किं तदुत्तरं यदर्थोऽनुवाद इत्युच्यते। यथा येन प्रकारेण ज्ञाननिष्ठारूपेण ब्रह्म परमात्मानमाप्नोति तथा तं प्रकारं ज्ञाननिष्ठाप्राप्तिक्रमं मे मम वचनान्निबोध त्वं निश्चयेनावधार-यस्वेतत्। किं विस्तरेण नेत्याह समासेनैव संक्षेपेणैव हे कौन्तेय। यथा ब्रह्म प्राप्नोति तथा निबोधेति। अनेन या प्रागुक्ता ब्रह्मप्राप्तिस्तामिदंतया दर्शयितुमाह निष्ठा ज्ञानस्य या परेति। निष्ठा पर्यवसानं परिसमाप्तिरित्येतत्। कस्य, ब्रह्मज्ञानस्य या परा परिसमाप्तिः। कीदृशी सा यादृश आत्मा। कीदृक्चासौ, यादृशो भगवतोक्त उपनिषद्वाक्यैश्च न्यायतश्च।

I पूर्वपक्ष –ननु विषयाकारं ज्ञानं न विषयो नाप्याकारवानात्मेष्यते क्वचित् (a) ननु आदित्यवर्णं Sve Upa III 8) मारूपं ( C a Upa III. 14. 3 ) स्वयंज्योतिः ( Br Upa IV 3 9 ) इत्याकारवत्त्वमात्मनः श्रूयते, न, तमोरूपत्वप्रतिषे-धार्थत्वात्तेषां वाक्यानाम्। द्रव्यगुणाद्याकारप्रतिषेधे आत्मनस्तमोरूपत्वे प्राप्ते तत्प्रतिषेधार्थान्यादित्यवर्णमित्यादिवाक्यानि, ( b ) अरूपमिति ( Katha Upa III 15 ) च विशेषतो रूपप्रतिषेधात्। (c) अविषयत्वाच्च " न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् " ( Sve Upa IV 20 ), " अशब्द-मस्पर्शम् " ( Katha Upa. III 15 ) इत्यादेः। तस्मादात्माकारं ज्ञानमित्य-

I An Opponent's view that आत्मज्ञान ( निष्ठा ) is not possible because आत्मा is neither an object ( विषय ), nor has it any form ( आकार or रूप ), while a ज्ञान ( cognition ) must always be विषयाकार. Four arguments (a, c, d) are given for this statement

**नुपपन्नम्** । कथं तर्ह्यात्मनो ज्ञानम्, सर्वं हि यद्विषयं यज्ज्ञानं तत्तदाकारं भवति निराकारश्चात्मेत्युक्तम् । **ज्ञानात्मनोश्चोभयोर्निराकारत्वे कथं तद्भावनानिष्ठेति।** *सिद्धान्तः*—न* ( a ) अत्यन्तनिर्मलत्वस्वच्छत्वसूक्ष्मत्वोपपत्तेरात्मनो बुद्धेश्चात्मसमनैर्मल्याद्युपपत्तेरात्मचैतन्याकाराभासत्वोपपत्तिः । ( b ) बुद्ध्याभासं मनस्तदाभासानीन्द्रियाणीन्द्रियाभासश्च देहोऽतो लौकिकैर्देहमात्र एवात्मदृष्टिः क्रियते । देहचैतन्यवादिनश्च लोकायतिकाश्चैतन्यविशिष्टः कायः पुरुष इत्याहुः, तथान्ये इन्द्रियचैतन्यवादिनः । अन्ये मनश्चैतन्यवादिनः । अन्ये बुद्धिचैतन्यवादिनः । ततोऽप्यन्तरमव्यक्तमव्याकृताख्यमविद्यावस्थमात्मत्वेन प्रतिपन्नाः केचित् ( प्रकृतिचैतन्यवादिनः ) । **सर्वत्र हि बुद्ध्यादिदेहान्ते आत्मचैतन्याभासतात्मभ्रान्तिकारणमित्यत आत्मविषयं ज्ञानं न विधातव्यं** किं तर्हि नामरूपाद्यनात्माध्यारोपणनिवृत्तिरेव कार्या नात्मचैतन्यविज्ञानम**विद्याध्यारोपितसर्वपदार्थाकारैरेव अविशिष्टतया गृह्यमाणत्वात्** । (c) अत एव हि विज्ञानवादिनो बौद्धा विज्ञानव्यतिरेकेण वस्त्वेव नास्तीति प्रतिपन्नाः **प्रमाणान्तरनिरपेक्षतां च स्वसंविदितत्वाभ्युपगमेन** । ( d ) तस्मादविद्याध्यारोपणनिराकरणमात्रं ब्रह्मणि कर्तव्यं न तु ब्रह्मविज्ञाने यत्नोऽत्यन्तप्रसिद्धत्वात् । अविद्याकल्पितनामरूपविशेषाकारापहृतबुद्धीनामत्यन्तप्रसिद्धं सुविज्ञेयमासन्नतरमात्मभूतमप्यप्रसिद्धं दुर्विज्ञेयमतिदूरमन्यदिव च प्रतिभात्यविवेकिनाम् । बाह्याकारनिवृत्तबुद्धीनां तु लब्धगुर्वात्मप्रसादानां नातः परं सुखं सुप्रसिद्धं सुविज्ञेयं स्वासन्नतरमस्ति । ( e ) तथाचोक्तम् 'प्रत्यक्षावगमं धर्म्यम्, इत्यादि ।

---

* Reply to the above पूर्वपक्ष.—It is possible to realise the consciousness which is the form ( आकार nature ) of आत्मन्. Five arguments are given to support this सिद्धान्त —(a) It is possible to have the nature ( आकार ) of आत्मन्, *viz.*, चैतन्य ( consciousness ) reflected in बुद्धि (b) Everywhere, from Buddhi down to the physical body, the cause of illusory identification of each with the Self is its wearing a semblance of the consciousness of the Self, and it is therefore unnecessary to impart directly a knowledge of the Self. (c) The Bauddhas also do not require any प्रमाण for the knowledge of आत्मन् except आत्मन् itself. (d) आत्मन् is self-evident ( अत्यन्तप्रसिद्ध ) to those who are बाह्याकारनिवृत्तबुद्धिs (and ब्रह्मन् is itself आत्मन् ). Hence in order to know आत्मन् what is to be done is अविद्याध्यारोपणनिराकरणमात्र ( only the removal of the false super-imposition of अविद्या, etc. on आत्मन्) (e) The Gītā also says the same.

II केचित्तु पण्डितंमन्या निराकारत्वादात्मवस्तु नोपैति बुद्धिरतो दुःसाध्या सम्यग्ज्ञाननिष्ठेत्याहुः । (a) सत्यमेव गुरुसम्प्रदायरहितानामश्रुतवेदान्तानामत्यन्तबहिर्विषयासक्तबुद्धिना सम्यक्प्रमाणेष्वकृतश्रमाणां, तद्विपरीतानां तु लौकिकग्राह्यग्राहकद्वैतवस्तुनि सद्बुद्धिर्नितरां दुःसम्पाद्यात्मचैतन्यव्यतिरेकेण वस्त्वन्तरस्यानुपलब्धेः । यथा चैतदेवमेव नान्यथेत्यवोचाम । (b) उक्तं च भगवता—'यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' (II 69) इति । (c) तस्माद्बाह्याकारभेदबुद्धिनिवृत्तिरेवात्मस्वरूपावलम्बने कारणम् । न ह्यात्मा नाम कस्यचित्कदाचिदप्रसिद्धः प्राप्यो हेय उपादेयो वा । अप्रसिद्धे हि तस्मिन्नात्मनि (अ)स्वार्थाः सर्वाः प्रवृत्तयः प्रसज्येरन् । न च देहाद्यचेतनार्थत्वं शक्यं कल्पयितुम् । न च सुखार्थं सुखं दुःखार्थं वा दुःखमात्मावगत्यवसानार्थत्वाच्च सर्वव्यवहारस्य । तस्माद्यथा स्वदेहस्य परिच्छेदाय न प्रमाणान्तरापेक्षा ततोऽप्यात्मनोऽन्तरतमत्वात्तदवगतिं प्रति न प्रमाणान्तरापेक्षेत्यात्मज्ञाननिष्ठा विवेकिनां सुप्रसिद्धैवेति सिद्धम् ।

III येषामपि निराकारं ज्ञानमप्रत्यक्षं तेषामपि (a) ज्ञानवशैव ज्ञेयावगतिरिति ज्ञानमत्यन्तप्रसिद्धं सुखादिवदेवेत्यभ्युपगन्तव्यम् । (b) जिज्ञासानुपपत्तेश्च । (c) अप्रसिद्धं चेज्ज्ञानं ज्ञेयवज्जिज्ञास्येत । यथा ज्ञेयं घटादिलक्षणं ज्ञानेन ज्ञाता व्याप्तुमिच्छति तथा ज्ञानमपि ज्ञानान्तरेण ज्ञाता व्याप्तुमिच्छेत् । न चैतदस्ति । अतोऽत्यन्तप्रसिद्धं ज्ञानं ज्ञाताऽप्यत एव प्रसिद्ध इति । तस्माज्ज्ञाने यत्नो न कर्तव्यः किं त्वनात्मबुद्धिनिवृत्तावेव ।

---

II. Another Purvapaksa—आत्मन् being निराकार, the Intellect cannot reach (comprehend) it, and hence आत्मज्ञाननिष्ठा is not possible. Three arguments (a, b, c) are given to refute this पूर्वपक्ष –(a) We have already replied to this above 112, the बहिर्विषयासक्तबुद्धय: cannot understand the आत्मन्, but others can (b) The Gitā says the same (c) आत्मन् is self-evident (स्वयंप्रसिद्ध; not अप्रसिद्ध) If आत्मन् were अप्रसिद्ध, all our actions will be without meaning (अस्वार्थाः).

III. To those who hold that ज्ञान (cognition) is itself निराकार and अप्रत्यक्ष (and hence no ज्ञाननिष्ठा of any kind is ever possible), we reply that ज्ञान will have to be accepted as self-evident (अत्यन्तं प्रसिद्धम्) like सुखादि. Three arguments (a, b, c) can be given:—(a) Any object to be known (ज्ञेय) can be known (अवगति) directly by ज्ञान itself (ज्ञानवशैव). (b) If ज्ञान were not self-evident, there will be

* तस्माज्ज्ञाननिष्ठा सुसंपाद्या ॥ ५० ॥

सेयं ज्ञानस्य परा निष्ठोच्यते कथं कार्येति—

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥

बुद्ध्याऽध्यवसायात्मिकया विशुद्धया मायारहितया युक्तः संपन्नो भूत्वा धैर्येणात्मानं कार्यकरणसंघातं नियम्य च नियमनं कृत्वा वशीकृत्य शब्दादीञ्शब्द आदिर्येषां ते शब्दादयस्तान्विषयांस्त्यक्त्वा । सामर्थ्याच्छरीरस्थितिमात्रान्केवलान्मुक्त्वा ततोऽधिकान्सुखार्थांस्त्यक्त्वेत्यर्थः । शरीरस्थित्यर्थत्वेन प्राप्तेषु च रागद्वेषौ व्युदस्य च परित्यज्य ॥ ५१ ॥

ततः—

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥

विविक्तसेव्यरण्यनदीपुलिनगिरिगुहादीन्विविक्तान्देशान्सेवितुं शीलमस्येति विविक्तसेवी । लघ्वाशी लघ्वशनशीलः । विविक्तसेवालघ्वशनयोर्निद्रादिदोषनिवर्तकत्वेन चित्तप्रसादहेतुत्वाद् ग्रहणम् । यतवाक्कायमानसो वाक्च कायश्च मानसं च यतानि संयतानि यस्य ज्ञाननिष्ठस्य स ज्ञाननिष्ठो यतिर्यतवाक्कायमानसः स्यात् । एवमुपरतसर्वकरणः सन्ध्यानयोगपरो ध्यानमात्मस्वरूपचिन्तनं योग आत्मविषय एवैकाग्रीकरणं तौ ध्यानयोगौ परत्वेन कर्तव्यौ यस्य स ध्यानयोगपरः । नित्यं नित्यग्रहणं मन्त्रजपाद्यन्यकर्तव्याभावप्रदर्शनार्थम् । वैराग्यं विरागभावो दृष्टादृष्टेषु विषयेषु वैतृष्ण्यं समुपाश्रितः सम्यगुपाश्रितो नित्यमेवेत्यर्थः ॥ ५२ ॥

किंच—

अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥

अहंकारमहंकरणमहंकारो देहेन्द्रियादिषु तं बलं सामर्थ्यं कामरागादियुक्तं नेतरच्छरीरादिसामर्थ्यं स्वाभाविकत्वेन तस्यागस्याशक्यत्वात् । दर्पो नाम हर्षानन्तरभावी

---

जिज्ञासानुपपत्तिदोष. (c) If ज्ञान were really अप्रसिद्ध ( required to be proved ), it will be sought after like the ज्ञेय पदार्थs, *e. g.*, घट etc.

* This सिद्धान्त is established by refuting all the three पूर्वपक्ष

धर्मातिक्रमहेतुः 'हृष्टो दृप्यति दृप्तो धर्ममतिक्रामति' (Apastamba Dh. Su. I 4. 13 4) इति स्मरणाच्च। कामम् इच्छां क्रोधं द्वेषं परिग्रहम् इन्द्रियमनोगतदोषपरित्यागेऽपि शरीरधारणप्रसङ्गेन धर्मानुष्ठाननिमित्तेन वा बाह्यपरिग्रहः प्राप्तस्तं च विमुच्य परित्यज्य परमहंसपरिव्राजको भूत्वा देहजीवनमात्रेऽपि निर्गतममभावो निर्ममोऽत एव शान्त उपरतः। यः संहृतायासो यतिर्ज्ञाननिष्ठो ब्रह्मभूयाय ब्रह्मभवनाय कल्पते समर्थो भवति ॥ ५३ ॥

अनेन क्रमेण—

> ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
> समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥

ब्रह्मभूतो ब्रह्म प्राप्तः प्रसन्नात्मा लब्धाध्यात्मप्रसादस्वभावो न शोचति किंचिदर्थवैकल्यमात्मनो वैगुण्यं चोद्दिश्य न शोचति न संतप्यते न काङ्क्षति। ब्रह्मभूतस्यायं स्वभावोऽनूद्यते न शोचति न काङ्क्षतीति। न ह्यप्राप्तविषयाकाङ्क्षा ब्रह्मविद उपपद्यते। न हृष्यतीति वा पाठः। समः सर्वेषु भूतेष्वात्मौपम्येन सर्वेषु भूतेषु सुखं दुःखं वा सममेव पश्यतीत्यर्थः नात्मसमदर्शनमिह तस्य वक्ष्यमाणत्वाद्भक्त्या मामभिजानातीति। (XVIII 55) एवंभूतो ज्ञाननिष्ठः मद्भक्तिं मयि परमेश्वरे भक्तिं भजनं परामुत्तमां ज्ञानलक्षणां चतुर्थीं लभते चतुर्विधा भजन्ते मामित्युक्तम् (VII 16)॥५४॥

ततो ज्ञानलक्षणया—

> भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
> ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥

भक्त्या मामभिजानाति यावानहमुपाधिकृतविस्तरभेदो यश्चाहं विध्वस्तसर्वोपाधिभेद उत्तमपुरुष आकाशकल्पस्तं मामद्वैतं चैतन्यमात्रैकरसमजरममरमभयमनिधनं तत्त्वतोऽभिजानाति। ततो मामेवं तत्त्वतो ज्ञात्वा विशते तदनन्तरं मामेव। नात्र ज्ञानानन्तरप्रवेशक्रिये भिन्ने विवक्षिते ज्ञात्वा विशते तदनन्तरमिति, किं तर्हि फलान्तराभावज्ञानमात्रमेव, क्षेत्रज्ञं चापि मां विद्धीत्युक्तत्वात्। (XIII. 2)

पूर्वपक्षः—ननु विरुद्धमिदमुक्तं ज्ञानस्य या परा निष्ठा तया मामभिजानातीति, कथं विरुद्धमिति चेदुच्यते, यदैव यस्मिन्विषये ज्ञानमुत्पद्यते ज्ञातुस्तदैव तं विषयमभिजानाति ज्ञातेति न ज्ञाननिष्ठां ज्ञानावृत्तिलक्षणामपेक्षते (विरोध)। सिद्धान्तः नैष दोषः ज्ञानस्य *(1) स्वात्मोत्पत्तिपरिपाकहेतुयुक्तस्य

* Note the six qualifications of ज्ञान

(2)प्रतिपक्षविहीनस्य यदात्मानुभवनिश्चयावसानत्वं तस्य निष्ठाशब्दाभिलापाच्छास्त्राचार्योपदेशेन (3) ज्ञानोत्पत्तिपरिपाकहेतु सहकारिकारण बुद्धिविशुद्ध्यादमानित्वादि (Bha. Gi XIII.7) चापेक्ष्य जनितस्य (4) क्षेत्रज्ञपरमात्मैकत्वज्ञानस्य (5) कर्त्रादिकारकभेदबुद्धिनिबन्धनसर्वकर्मसंन्याससहितस्य (6) स्वात्मानुभवनिश्चयरूपेण यदव स्थानं सा परा ज्ञाननिष्ठेत्युच्यते। सेयं ज्ञाननिष्ठार्तादिभक्तित्रयापेक्षया परा चतुर्थी भक्तिरित्युक्ता ( Bha Gi VII 16–17 ) तया परया भक्त्या भगवन्तं तत्त्वतोऽभिजानाति । यदनन्तरमेवेश्वरक्षेत्रज्ञभेदबुद्धिरशेषतो निवर्तते। अतो ज्ञाननिष्ठालक्षणया भक्त्या मामभिजानातीति वचन न विरुध्यते। अत्र च सर्वं निवृत्तिविधायि शास्त्र वेदान्तेतिहासपुराणस्मृतिलक्षणमर्थवद्भवति, " विदित्वा व्युत्थायाथ भिक्षाचर्यं चरन्ति ( Br. Upn. IV. 4. 22 ) तस्मान्न्यासमेषां तपसामतिरिक्तमाहुर्न्यास एवात्यरेचयत् ( Mahana 24 and 21 )" इति संन्यासः कर्मणां न्यासो वेदानिम च लोकममु च परित्यज्य ( Āpastamba Dh II. 23 13 ) त्यज धर्ममधर्मं चेत्यादि । इह च दर्शितानि वाक्यानि ( Bha. Gi V. 12 ) । न च तेषां वाक्यानामानर्थक्यं युक्तम्, न चार्थवादत्वं स्वप्रकरणस्थत्वात्, प्रत्यगात्माविक्रियस्वरूपनिष्ठत्वाच्च मोक्षस्य। न हि पूर्वसमुद्रं जिगमिषोः प्रातिलोम्येन प्रत्यक्समुद्रं जिगमिषुणा समानमार्गत्वं संभवति। प्रत्यगात्मविषयप्रत्ययसंतानकरणाभिनिवेशश्च ज्ञाननिष्ठा। सा च प्रत्यक्समुद्रगमनवत्कर्मणा सहभावित्वेन विरुध्यते। पर्वतसर्षपयोरिवान्तरवान्विरोधः प्रमाणविदां निश्चितः। तस्मात्सर्वकर्मसंन्यासेनैव ज्ञाननिष्ठा कार्येति सिद्धम् ॥ ५५ ॥

स्वकर्मणा भगवतोऽभ्यर्चनभक्तियोगस्य सिद्धिप्राप्तिः फलं ज्ञाननिष्ठायोग्यता। यन्निमित्ता ज्ञाननिष्ठा मोक्षफलावसाना स भगवद्भक्तियोगोऽधुना स्तूयते शास्त्रार्थोपसंहारप्रकरणे शास्त्रार्थनिश्चयदार्ढ्याय—

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।

मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥

सर्वकर्माणि प्रतिषिद्धान्यपि सदा कुर्वाणोऽनुतिष्ठन्मद्व्यपाश्रयोऽहं वासुदेव ईश्वरो व्यपाश्रयो यस्य स मद्व्यपाश्रयो मय्यर्पितसर्वात्मभाव इत्यर्थः । सोऽपि मत्प्रसादान्ममेश्वरस्य प्रसादादवाप्नोति शाश्वतं नित्यं वैष्णवं पदमव्ययम् ॥ ५६ ॥

यस्मादेवं तस्मात्—

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।

बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥

चेतसा विवेकबुद्ध्या सर्वकर्माणि दृष्टादृष्टार्थानि मयीश्वरे संन्यस्य यत्करोषि यदश्नासीत्युक्तन्यायेन मत्परोऽहं वासुदेवः परो यस्य तव स त्वं मत्परः सन्बुद्धियोगं मयि

समाहितबुद्धित्वं बुद्धियोगस्तं बुद्धियोगमुपाश्रित्याश्रयोऽनन्यशरणत्वं मच्चित्तो मय्येव चित्तं यस्य तव स त्वं मच्चित्तः सततं सर्वदा भव ॥ ५७ ॥

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
अथ चेत्त्वमहंकारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ ५८ ॥

मच्चित्त सर्वदुर्गाणि सर्वाणि दुस्तराणि संसारहेतुजातानि मत्प्रसादात्तरिष्यस्यतिक्रमिष्यसि । अथ चेद्यदि त्वं मदुक्तमहंकारात्पण्डितोऽहमिति न श्रोष्यसि न ग्रहीष्यसि ततस्त्वं विनङ्क्ष्यसि विनाशं गमिष्यसि ॥ ५८ ॥

इदं च त्वया न मन्तव्यं स्वतन्त्रोऽहं किमर्थं परोक्तं करिष्यामीति—

यदहंकारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥

यच्चैतत्त्वमहंकारमाश्रित्य न योत्स्य इति न युद्धं करिष्यामीति मन्यसे चिन्तयसि निश्चयं करोषि मिथ्यैष व्यवसायो निश्चयस्ते तव यस्मात्प्रकृतिः क्षत्रस्वभावस्त्वां नियोक्ष्यति ॥ ५९ ॥

यस्माच्च—

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥ ६० ॥

स्वभावजेन शौर्यादिना यथोक्तेन कौन्तेय निबद्धो निश्चयेन बद्धः स्वेनात्मीयेन कर्मणा कर्तुं नेच्छसि यत्कर्म मोहादविवेकतः करिष्यस्यवशोऽपि परवश एव तत्कर्म ॥ ६० ॥

यस्मात्—

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१ ॥

ईश्वर ईशनशीलो नारायण सर्वभूतानां सर्वप्राणिनां हृद्देशे हृदयदेशेऽर्जुन शुद्धान्तरात्मस्वभावो विशुद्धान्तःकरण इति, 'अहश्च कृष्णमहरर्जुनं च' ( Rg. VI. 9. 1 ) इति दर्शनात् । तिष्ठति स्थितिं लभते । स कथं तिष्ठतीत्याह भ्रामयन्भ्रमणं कारयन्सर्वभूतानि यन्त्रारूढानि यन्त्राण्यारूढान्यधिष्ठितानीवेतीवशब्दोऽत्र द्रष्टव्यः । यथा दारुकृतपुरुषादीनि यन्त्रारूढानि मायया छद्मना भ्रामयंस्तिष्ठतीति संबन्धः ॥ ६१ ॥

तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२ ॥

तमेवेश्वरं शरणमाश्रयं संसारान्निस्तरणार्थं गच्छाश्रय सर्वभावेन सर्वात्मना हे भारत ततस्तत्प्रसादादीश्वरानुग्रहात्परां प्रकृष्टां शान्तिं परामुपरतिं स्थानं च मम विष्णोः परमं पदमवाप्स्यसि शाश्वतं नित्यम् ॥ ६२ ॥

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥

इत्येतत्ते तुभ्यं ज्ञानमाख्यातं कथितं गुह्याद्गोप्याद्गुह्यतरमतिशयेन गुह्यं रहस्यमित्यर्थः । मया सर्वज्ञेनेश्वरेण विमृश्य विमर्शनमालोचनं कृत्वैतद्यथोक्तं शास्त्रमशेषेण समस्तं यथोक्तं चार्थजातं यथेच्छसि तथा कुरु ॥ ६३ ॥

भूयोऽपि मयोच्यमानं शृणु—

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४ ॥

सर्वगुह्यतमं सर्वगुह्येभ्योऽत्यन्तरहस्यमुक्तमप्यसकृद्भूयः पुनः शृणु मे मम परमं प्रकृष्टं वचो वाक्यम् । न भयान्नाप्यर्थकारणाद्वा वक्ष्यामि किं तर्हीष्टः प्रियोऽसि मे मम दृढमव्यभिचारेणेति कृत्वा ततस्तेन कारणेन वक्ष्यामि कथयिष्यामि ते हितं परं ज्ञानप्राप्तिसाधनम् । तद्धि सर्वहितानां हिततमम् ॥ ६४ ॥

किं तदित्याह—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥

मन्मना भव मच्चित्तो भव मद्भक्तो भव मद्भजनो भव मद्याजी मद्यजनशीलो भव मां नमस्कुरु नमस्कारमपि ममैव कुरु । तत्रैव वर्तमानो वासुदेव एव सर्वसमर्पितसाध्यसाधनप्रयोजनो मामेवैष्यस्यागमिष्यसि । सत्यं ते तव प्रतिजाने सत्यां प्रतिज्ञां करोम्येतस्मिन्वस्तुनीत्यर्थः । यतः प्रियोऽसि मे । एवं भगवतः सत्यप्रतिज्ञत्वं बुद्ध्वा भगवद्भक्तेरवश्यंभाविमोक्षफलमवधार्य भगवच्छरणैकपरायणो भवेदिति वाक्यार्थः ॥ ६५ ॥

कर्मयोगनिष्ठायाः परमरहस्यमीश्वरशरणतामुपसंहृत्याथेदानीं कर्मयोगनिष्ठाफलं सम्यग्दर्शनं सर्ववेदान्तविहितं वक्तव्यमित्याह—

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥

सर्वधर्मान्सर्वे च ते धर्माश्च सर्वधर्मास्तान् । धर्मशब्देनात्राधर्मोऽपि गृह्यते नैष्कर्म्यस्य विवक्षितत्वात् "नाविरतो दुश्चरितात्" ( Katha Upa II. 24 ) "त्यज धर्ममधर्मं च" ( MBh. XII. 329. 40 ) इत्यादिश्रुतिस्मृतिभ्यः ।

सर्वधर्मान्परित्यज्य सन्न्यस्य सर्वकर्माणीत्येतत् । मामेकं सर्वात्मानं सम सर्वभूतस्थमीश्वरमच्युत गर्भजन्मजरामरणविवर्जितमहमेवेत्येवमेकं शरण व्रज न मत्तोऽन्यदस्तीत्यवधारयेत्यर्थः । अहं त्वा त्वामेवंनिश्चितबुद्धिं सर्वपापेभ्यः सर्वधर्माधर्मबन्धनरूपेभ्यो मोक्षयिष्यामि स्वात्मभावप्रकाशीकरणेन । उक्तं च—'नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ' ( Bha Gi. X. 11 ) इति। अतो मा शुचः शोकं मा कार्षीरित्यर्थ ।

I The Problem अस्मिन्हि गीताशास्त्रे परं निःश्रेयससाधनं निश्चितं किं ज्ञानं किं कर्म वाहोस्विदुभयमिति। कुत सदेह' 'यज्ज्ञात्वामृतमश्नुते' (Bha. Gi XIII 12 ) 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' ( Bha. Gi. XVIII. 55 ) इत्यादीनि वाक्यानि केवलाज्ज्ञानान्निःश्रेयसप्राप्तिं दर्शयन्ति । 'कर्मण्येवाधिकारस्ते' (Bha Gi II 47 ) कुरु कर्मैवेत्येवमादीनि ( Bha Gi. IV. 15 ) कर्मणामवश्यकर्तव्यतां दर्शयन्ति । एवं ज्ञानकर्मणोः कर्तव्यतोपदेशात्समुच्चितयोरपि निःश्रेयसहेतुत्वं स्यादिति भवत्सशय । किं पुनरत्र मीमांसाप्रस्थम् । नन्वेतदेवैषामन्यतमस्य परमनिःश्रेयससाधनत्वावधारणम् । अतो विस्तीर्णतरं मीमांस्यमेतत् ।

× सिद्धान्त —आत्मज्ञानस्य तु (केवलस्य) निःश्रेयसहेतुत्वं (1) भेदप्रत्ययनिवर्तकत्वेन कैवल्यफलावसानत्वात् । क्रियाकारकफलभेदबुद्धिरविद्ययात्मनि नित्यप्रवृत्ता, मम कर्माहं कर्तामुष्मै फलायेदं कर्म करिष्यामीतीयमविद्यानादिकालप्रवृत्ता । अस्या अविद्याया निवर्तकमयमहमस्मि केवलोऽकर्ताक्रियोऽफलो न मत्तोऽन्योऽस्ति कश्चिदित्येवरूपमात्मविषय ज्ञानमुत्पद्यमान कर्मप्रवृत्तिहेतुभूताया भेदबुद्धेर्निवर्तकत्वात् । तुशब्द पक्षद्वयव्यावृत्त्यर्थो न केवलेभ्यः कर्मभ्यो न च ज्ञानकर्मभ्यां समुच्चिताभ्यां निःश्रेयसप्राप्तिरिति पक्षद्वय निवर्तयति । ( ii ) अकार्यत्वाच्च निःश्रेयसस्य कर्मसाधनत्वानुपपत्ति । न हि नित्य वस्तु कर्मणा ज्ञानेन वा क्रियते । केवल ज्ञानमप्यनर्थकं तर्हि । नाविद्यानिवर्तकत्वे सति दृष्टकैवल्यफलावसानत्वात् । अविद्यातमोनिवर्तकस्य ज्ञानस्य दृष्ट कैवल्यफलावसानत्वम् । रज्ज्वादिविषये सर्पाद्यज्ञानतमोनिवर्तकप्रदीपप्रकाशफलवत् । विनिवृत्तसर्पादिविकल्परज्ज्वैवस्यावसानं हि प्रकाशफल तथा ज्ञानम् । ( iii ) दृष्टार्थानां च च्छिदादिक्रियाग्निमन्थनादीनां

I Sankara finds it necessary to discuss whether (1) ज्ञान alone, or (2) कर्मन् alone, or (3) both ज्ञान and कर्मन् combined together get Moksa

× Sankara's Siddhanta —The knowledge (ज्ञान) of Atman alone leads to Moksa Four arguments (i) It stops the cognition of duality (भेदप्रत्यय) and then ends in the achievement of मोक्ष (ii) As मोक्ष is not an effect, it (मोक्ष) cannot be achieved by means of Action (iii) ज्ञाननिष्ठा by its very nature cannot be combined with कर्मनिष्ठा (iv) Nor does ज्ञान require the help of कर्मन्.

व्यापृतकर्मादिकारत्वाणो 'द्वैधीभावाभिदर्शनादिफलादन्यफले कर्मान्तरे व्यापारानुपपत्तिर्यथा तथा ज्ञाननिष्ठाक्रियाया दृष्टार्थाया व्यापृतस्य ज्ञात्रादिकारकस्यात्मकैवल्यफलादन्यफले कर्मान्तरे प्रवृत्तिरनुपपन्नेति न ज्ञाननिष्ठा कर्मसहितोपपद्यते। भुज्यग्निहोत्रादिक्रियावत्स्यादिति चेत्। न कैवल्यफले ज्ञाने क्रियाफलार्थित्वानुपपत्तेः। कैवल्यफले हि ज्ञाने प्राप्ते सर्वतः सम्प्लुतोदके फले कूपतडागादिक्रियाफलार्थित्वाभाववत्फलान्तरे तत्साधनभूतायां वा क्रियायामर्थित्वानुपपत्तिः। नहि राज्यप्राप्तिफले कर्मणि व्यापृतस्य क्षेत्रप्राप्तिफले व्यापारोपपत्तिस्तद्विषयचार्थित्वम्। तस्मान्न कर्मणोऽस्ति निःश्रेयससाधनत्वम्। न च ज्ञानकर्मणोः समुच्चितयोः। (१४) नापि ज्ञानस्य कैवल्यफलस्य कर्मसाहाय्यापेक्षाविद्यानिवर्तकत्वेन विरोधात्। नहि तमस्तमसो निवर्तकमतः केवलमेव ज्ञानं निःश्रेयससाधनमिति।

II § पूर्वपक्ष०-न, नित्याकरणे प्रत्यवायप्राप्तेः कैवल्यस्य च नित्यत्वात्। यत्तावत्केवलज्ञानात्कैवल्यप्राप्तिरित्येतदसत्। यतो नित्यानां कर्मणां श्रुत्युक्तानामकरणे प्रत्यवायो नरकादिप्राप्तिलक्षणः स्यात्। नन्वेवं तर्हि कर्मभ्यो मोक्षो नास्तीत्यनिर्मोक्ष एव। नैष दोषो नित्यत्वान्मोक्षस्य। नित्यानां कर्मणामनुष्ठानात्प्रत्यवायस्याप्राप्तिः। प्रतिषिद्धस्य चाकरणादनिष्टशरीरानुपपत्तिः। काम्यानां च वर्जनादिष्टशरीरानुपपत्तिः। वर्तमानशरीरारम्भकस्य च कर्मणः फलोपभोगक्षये पतितेऽस्मिञ्शरीरे देहान्तरोत्पत्तौ च कारणाभावादात्मनो रागादीनां चाकरणात्स्वरूपावस्थानमेव कैवल्यमित्ययत्नसिद्धं कैवल्यमिति। अतिक्रान्तानेकजन्मान्तरकृतस्य स्वर्गनरकादिप्राप्तिफलस्यानारब्धकार्यस्योपभोगस्य तत्फलोपभोगानुपपत्तेः क्षयाभाव इति चेत्। न, नित्यकर्मानुष्ठानायासदुःखोपभोगस्य तत्फलोपभोगत्वोपपत्तेः। प्रायश्चित्तवद्वा पूर्वोपात्तदुरितक्षयार्थत्वान्नित्यकर्मणाम्। आरब्धानां चोपभोगेनैव कर्मणां क्षीणत्वादपूर्वाणां च कर्मणामनारम्भेऽयत्नसिद्धं कैवल्यमिति।

---

II § A पूर्वपक्षिन् who is undoubtedly a पूर्वमीमांसक offers a scheme according to which मोक्ष can be achieved in and through the performance of actions only —His objections to Sankara's doctrine of मोक्ष through ज्ञान are two, *viz*, (1) Sankara's scheme allows the मुमुक्षु to abandon नित्यकर्मन्s (which according to the Scripture must be performed for the whole life) and (2) As मोक्ष or कैवल्य *exists eternally according* to Sankara, no ज्ञान or कर्मन् is required to achieve it

The पूर्वपक्षिन् explains his scheme of कर्मन्s achieving मोक्ष by proper division of कर्मन्s into *नित्य, प्रतिषिद्ध, काम्य प्रारब्ध* and संचित कर्मन्s.

* सिद्धान्त :—(1) न "तमेव विदित्वातिमृत्युमेति नान्य पन्था विद्यतेऽयनाय" (Sve. Upa. III 8) इति विद्याया अन्य पन्था मोक्षाय न विद्यत इति श्रुतेश्च-र्मवदाकाशवेष्टनासमभववदविदुषा (Sve. Upa. VI 20) मोक्षासंभवश्रुतेर्ज्ञानात्कैवल्यमाप्नोतीति च पुराणस्मृते"। (2) अनारब्धफलानां पुण्यानां कर्मणा क्षयानुपपत्तेश्च। यथा पूर्वोपात्तानां दुरितानामनारब्धफलानां संभवस्तथा पुण्यानामप्यनारब्धफलानां स्यात्संभव। तेषां च देहान्तरमकृत्वा क्षयानुपपत्तौ मोक्षानुपपत्ति। (3) धर्माधर्महेतूनां च रागद्वेषमोहानामन्यत्रात्मज्ञानादुच्छेदानुपपत्तेर्धर्माधर्मोच्छेदानुपपत्ति। (4 a) नित्यानां च कर्मणां (i) पुण्यलोकफलश्रुतेर्वर्णा आश्रमाश्च स्वकर्मनिष्ठा इत्यादिस्मृतेश्च (Gau. Dha Sū XI 29) कर्मक्षयानुपपत्ति। (ii) ये त्वाहुर्नित्यानि कर्माणि दुःखरूपत्वात्पूर्वकृतदुरितकर्मणां फलमेव न तु तेषां स्वरूपव्यतिरेकेणान्यत्फलमस्त्यश्रुतत्वाज्जीवनादिनिमित्ते च विधानादिति। न, अप्रवृत्तानां फलदानासंभवाद् दुःखफलविशेषानुपपत्तिश्च स्यात्। यदुक्तं पूर्वजन्मकृतदुरितानां कर्मणां फलं नित्य-

* Siddhanta —(1) The Sruti (e. g Śve. Upa. III, 8) and Smrti definitely say that the ज्ञान (= विद्या) is the only means to मोक्ष The attainment of मोक्ष by an ignorant man is, according to the Sruti, as impossible as the act of rolling up आकाश (in the way in which one can roll up a piece of leather).

(2) The religious merits which are अनारब्धफल (= संचित) cannot be destroyed in the Opponent's scheme. (Just as there is the possibility of अनारब्धफल पूर्वोपात्त sins, so there is also the possibility of अनारब्धफल पुण्यs.)

(3) धर्माधर्मs cannot be destroyed by any kind of कर्मन्s because the causes of धर्माधर्मs are राग, द्वेष and मोह which can be destroyed by आत्मज्ञान only

(4 a) About नित्यकर्मन्s there are two views, viz, (i) that their reward is a holy world, e g, the heaven, or (ii) that they are the result of पूर्वकृतदुरितकर्मन्s. In (i) the नित्यकर्मन्s cannot be destroyed by any action at all. In (ii) they cannot give their result because they are अनारब्ध (lit अप्रवृत्त). And, also, the fact why the दुरितs give this particular kind of trouble (in the form of नित्यकर्मन्s 'compulsory duties') cannot be explained; i. e., you cannot say that नित्यकर्मानुष्ठानदुःख and not शिरसा पाषाणवहनादि-दुःख, is the only फल of पूर्वदुरित.

कर्मानुष्ठानायासदुःख भुज्यत इति तदसत्। न हि मरणकाले फलदानायानङ्कुरीभूतस्य कर्मण फलमन्यकर्मारब्धे जन्मन्युपभुज्यत इत्युपपत्ति । अन्यथा स्वर्गफलोपभोगायाग्निहोत्रादिकर्मारब्ध जन्मनि नरककर्मफलोपभोगानुपपत्तिर्न स्यात् । तस्य दुरितदु खविशेषफलत्वानुपपत्तश्च, अनकेषु हि दुरितेषु सभवत्सु भिन्नदु खसाधनफलेषु नित्यकर्मानुष्ठानायासदु खमात्रफलेषु कल्प्यमानषु ह्रद्रागादिबाधानिमित्त न हि शक्यते कल्पयितु नित्यकर्मानुष्ठानायासदु खमेव पूर्वकृतदुरितफल न शिरसा पाषाणवहनादि दु खमिति । [ 4 b ] अप्रकृत चेदमुच्यते नित्यकर्मानुष्ठानायासदु ख पूर्वकृतदुरितकर्मफलमिति । कथम्, अप्रसूतफलस्य पूर्वकृतदुरितस्य क्षयो नोपपद्यत इति प्रकृत, तत्र प्रसूतफलस्य कर्मण फल नित्यकर्मानुष्ठानायासदु खमाह भवान्नाप्रसूतफलस्येति । अथ सर्वमेव पूर्वकृत दुरित प्रसूतफलमेवेति मन्यत भवास्ततो नित्यकर्मानुष्ठानायासदुःखमेव फलमिति विशेषणमयुक्त नित्यकर्मविध्यानर्थक्यप्रसङ्गश्चोपभोगेनैव प्रसूतफलस्य दुरितकर्मण क्षयोपपत्ते । [ 4 c ] किंच श्रुतस्य नित्यस्य दु ख कर्मणश्चफल नित्यकर्मानुष्ठानायासादेव तद्दृश्यते व्यायामादिवत्तदन्यस्येति कल्पनानुपपत्ति । [4 d] जीव

[ 4 b ] The matter in hand is the fact that अनारब्धफल पूर्वकृतदुरित *is not destroyed* while you say that नित्यकर्मदु ख is the result of आरब्धफल पूर्वकृतदुरित Thus your statement is irrelevant —If, however, all the पूर्वकृतदुरितs are आरब्धफल then the specification that only the नित्यकर्मानुष्ठानायासदु ख is the result of all the दुरितs is improper —And as आरब्धकार्यदुरितs will be naturally exhausted by उपभोग the injunction of नित्यकर्मन्s will be futile

[ 4 c ] The misery (दुःख) which is the result of the श्रौत नित्यकर्मन्s is due to the trouble ( आयास ) involved in the very performance of the नित्य rites So, it is wrong to assume that it is due to पूर्वकृतदुरित

[ 4 d ] As the नित्यकर्मन्s are laid down on account of the very life ( of the sacrificer ) it is unreasonable to say that they are the result of पूर्वकृतदुरित, just like the प्रायश्चित्तs which are also the result of पूर्वकृतदुरितs (And, to be more exact the प्रायश्चित्त prescribed for a certain sin is not the result of committing that sin —If the प्रायश्चित्त is said to be the फल *of* पाप *which is the* निमित्त of the प्रायश्चित्त it will follow that the नित्यकर्मानुष्ठानायासदु ख is the फल of जीवन which is the निमित्त of नित्यकर्मन्s, because both नित्यकर्मन्s and प्रायश्चित्त are equally the effects ( नैमित्तिकs )

नादिनिमित्ते च विधानाश्रित्याना कर्मणा प्रायश्चित्तवत्पूर्वकृतदुरितफलत्वानुपपत्तिः। यस्मिन्पापकर्मनिमित्ते यद्विहित प्रायश्चित्तं न तु तस्य पापस्य तत्फलम्। अथ तस्यैव पापस्य निमित्तस्य प्रायश्चित्तदुःख फल, जीवनादिनिमित्तमपि नित्यकर्मानुष्ठानायासदुःखं जीवनादिनिमित्तस्यैव तत्फल प्रसज्येत नित्यप्रायश्चित्तयोर्नैमित्तिकत्वाविशेषात्। [4 e] किंचान्यन्नित्यस्य काम्यस्य चाग्निहोत्रादेरनुष्ठानायासदुःखस्य तुल्यत्वान्नित्यानुष्ठानायासदुःखमेव पूर्वकृतदुरितस्य फल, न तु काम्यानुष्ठानायासदुःखमिति विशेषो नास्तीति तदपिपूर्वकृतदुरितफल प्रसज्येत। तथा च सति नित्याना फलाश्रवणात्तद्विधानान्यथानुपपत्तेश्च नित्यानुष्ठानायासदुःख पूर्वकृतदुरितफलमित्यर्थापत्तिकल्पनानुपपत्ता। एव विधानान्यथानुपपत्तेरनुष्ठानायासदुःखव्यतिरिक्तफलत्वानुमानाच्च नित्यानाम्। [4 f] विरोधाच्च। विरुद्ध चेदमुच्यते नित्यकर्मण्यनुष्ठीयमानेऽन्यस्य कर्मण फल भुज्यत इत्यभ्युपगम्यमाने स एवापभोगो नित्यस्य कर्मण फलमिति, नित्यस्य कर्मण फलाभाव इति च विरुद्धमुच्यते [4 g] किंच काम्याग्निहोत्रादावनुष्ठीयमाने नित्यमप्यग्निहोत्रादि तन्त्रेणैवानुष्ठितं भवतीति तदायासदुःखेनैव काम्याग्निहोत्रादिफलमुपक्षीण स्यात्तत्तन्त्रत्वात्। अथ काम्याग्निहोत्रादिफलमन्यदेव स्वर्गादि तदनुष्ठानायासदुःखमपि भिन्न प्रसज्येत। न च तदस्ति

[4 e] The same trouble is involved in the performance of नित्य अग्निहोत्रादि as well as the काम्य अग्निहोत्रादि, so the काम्य अग्निहोत्रादि will also be the पूर्वकृतदुरितफल. And this would also mean that the very assumption of नित्यकर्मानुष्ठानायासदुःख as the result of पूर्वकृतदुरित is wrong.

[4 f] This wiew about नित्यकर्मन्s involves a self-contradiction. To say that पूर्वकृतदुरितफलोपभोग is the result (फल) of नित्यकर्मन्s and at the same time that नित्यकर्मन्s give no फल is the contradiction.

[4 g] According to the Sāstra, when and if a man performs a काम्य अग्निहोत्रादि, he need not separately perform नित्य-अग्निहोत्रादि, because "the latter is granted as performed by the Sastra in the very performance of the former". And as the पूर्वपक्ष holds नित्यकर्मानुष्ठानायासदुःख to be the फल of नित्य अग्निहोत्रादि, the same will be the फल of काम्य अग्निहोत्रादि, and hence there will be no स्वर्ग etc. from काम्य अग्निहोत्रादि. If, however, the पूर्वपक्ष distinguishes between the फल of काम्य अग्निहोत्रादि, viz., स्वर्ग and the फल of नित्य अग्निहोत्रादि, he will have to distinguish also between the अनुष्ठानायासदुःख of काम्य अग्निहोत्रादि and that of नित्य अग्निहोत्रादि, but this is contrary to our experience.

इष्टविरोधात्। न हि काम्यानुष्ठानायासदुःखात्केवलनित्यानुष्ठानायासदुःखं भिद्यते। [4 h] किंचान्यदविहितमप्रतिषिद्धं च कर्म तत्कालफलं न तु शास्त्रचोदितं प्रतिषिद्धं वा तत्कालफलम्। भवद्यदि तदा स्वर्गादिष्वप्यदृष्टफलशास्त्रे प्रयत्नो न स्यात्। [4 i] अग्निहोत्रादीनामेव कर्मस्वरूपाविशेषेऽनुष्ठानायासदुःखमानेनोपक्षय काम्यानां च स्वर्गादिमहाफलत्वमङ्गेतिकर्तव्यताधिक्ये सत्यपि फलकामित्वमात्रेणेति न शक्यं कल्पयितुम्। तस्मात् नित्यानां कर्मणामदृष्टफलाभाव कदाचिदप्युपपद्यते।

III. **अतश्चाविद्यापूर्वकस्य कर्मणो विद्यैव शुभस्याशुभस्य वा क्षयकारणमशेषतो न नित्यकर्मानुष्ठानम्** अविद्याकामबीजं हि सर्वमेव कर्म। (i) **तथाचोपपादितम्। अविद्वद्विषयं कर्म विद्वद्विषया च सर्वकर्मसंन्यासपूर्विका ज्ञाननिष्ठा।** उभौ तौ न विजानीतः (Bha. Gi II 19), वेदाविनाशिनं नित्यम् (Bha Gi II 21), ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् (Bha Gi III 3), अज्ञानां कर्मसङ्गिनाम् (Bha Gi III 26), तत्त्ववित्तु... ..गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते (Bha Gi III 28) नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् (Bha Gi. V 8), सर्वकर्माणि मनसा संन्यस्यास्ते (Bha Gi V 13), **अर्थादहं करोमीति।** आरुरुक्षोः कर्म कारणमारूढस्य योगारूढस्य शम एव कारणम् (Bha. Gi VI 3)। उदारास्त्रयोऽप्यज्ञा ज्ञानी त्वात्मैव मे मतम् (Bha Gi. VII. 18)। अज्ञा

---

[4 h] Only अविहित and अप्रतिषिद्ध कर्मन्s give an immediate result but you say that अग्निहोत्रादि नित्यकर्मन् immediately gives नित्यकर्मानुष्ठानायासदुःखरूप फलम्. This is wrong because शास्त्रविहित and शास्त्रप्रतिषिद्ध कर्मन्s never give an immediate result If शास्त्रविहित and शास्त्रप्रतिषिद्ध कर्मन्s give an immediate result, the Scripture would not have taken the trouble of preaching an अदृष्टफल

[4 i] It is not proper to presume that the whole sacrificial procedure of काम्य or नित्य अग्निहोत्रादि being the same, the फल differs only because in काम्य अग्निहोत्रादि the sacrificer has a desire for the reward.

III. Sankara's Siddhanta about the nature of all kinds of actions whatsoever: All actions originate from a desire due to Avidyā.

(i) This has been amply explained on the strength of the verses of the Gitā, e. g.,

कर्मिणो गतागतं कामकामा लभन्ते ( Bha Gi IX. 21 )। अनन्याश्चिन्तयन्तो ( Bha Gi IX. 22 ) मां नित्ययुक्ता यथोक्तमात्मानमाकाशकल्पमक्षरमुपासते। ददामि बुद्धियोगं तं येन मामुपयान्ति ते ( Bha Gi X. 10 )। अर्थात्‌ कर्मिणोऽज्ञा उपयान्ति। (d) भगवत्कर्मकारिणो ये युक्ततमा अपि कर्मिणोऽज्ञास्त उत्तरोत्तरहीनफलत्यागावसानसाधना ( Bha Gi. XII. 6-11 )। अनिर्देश्याक्षरोपासकास्त्वद्वेष्टा ( Bha Gi XII. 13-20 ) सर्वभूतानामित्याद्यध्यायपरिसमाप्त्युक्तसाधना क्षेत्राध्यायाद्यध्यायत्रयोक्तज्ञानसाधनाश्च ( Bha Gi. XIII. 7-11, XIV 22, XV 3-5 )। अधिष्ठानादिपञ्चहेतुकसर्वकर्मसन्यासिनामात्मैकत्वाकर्तृत्वज्ञानवतां ( Bha Gi XVIII 14 ) परस्यां ज्ञाननिष्ठायां वर्तमानानां भगवत्तत्त्वविदामनिष्टादिकर्मफलत्रयं ( Bha Gi XVIII. 12 ) परमहंसपरिव्राजकानामेव लब्धभगवत्स्वरूपात्मैकत्वशरणानां न भवति भवत्येवान्येषामज्ञानां कर्मिणामसन्यासिनामित्येष गीताशास्त्रार्थस्य कर्तव्याकर्तव्यार्थस्य विभागः। (ii) अविद्यापूर्वकत्वं सर्वस्य कर्मणोऽसिद्धमिति चेत्‌। न, (a) ब्रह्महत्यादिवत्‌। यद्यपि शास्त्रावगतं नित्यं कर्म तथाप्यविद्यावत एव भवति।

(a) Verses which say that the ज्ञानिन् renounces all actions (Bha Gi II. 21 III 28, V 8, V 13 IX 22, X. 10)

(b) Verses which say that those who do actions are ignorant (Bha Gi II 19, III 24, IX 21).

(c) Verses which contrast the सांख्य ज्ञाननिष्ठा (= सांख्ययोग) with कर्मनिष्ठा। (Bha Gi III 3 आवश्यक VII. 18)

(d) Bha Gi XII 6 11 says that those who do भगवत्कर्मन्s, though best-guided among those who do their duties are yet ignorant and their means is फलत्याग which is the last in a series of means in which each succeeding means is inferior to each preceding one But those who meditate on the indescribable Aksara are mentioned in Bha Gi XII 13-20 and also in XIII-XIV-XV.

(e) Only the सन्यासिन्s do not get the कर्मफलत्रय while the कर्मिन्s who are ignorant do get them, as stated in Bha. Gi XVIII 12.

This (a-e) is the distinction between कर्तव्य and अकर्तव्य taught in the Gitā It means that only the ignorant is concerned with duties (कर्तव्य) while the ज्ञानिन् is to renounce all duties

(ii) All actions can be proved to be inspired by Ignorance (अविद्यापूर्वक)—

यथा प्रतिषेधशास्त्रावगतमपि ब्रह्महत्यादिलक्षणं कर्मानर्थकारणमविद्याकामादिदोषवतो भवत्यन्यथा प्रवृत्त्यनुपपत्तेस्तथा नित्यनैमित्तिककाम्यान्यपीति । (b) देहव्यतिरिक्तात्मन्यज्ञाते प्रवृत्तिर्नित्यादिकर्मस्वनुपपन्नेति चेत्। न, चलनात्मकस्य कर्मणोऽनात्मकर्तृकस्याहं करोमीतिप्रवृत्तिदर्शनात् । (c) देहादिसंघातेऽहंप्रत्ययो गौणो न मिथ्येति चेत्। न, तत्कार्येष्वपि गौणत्वोपपत्तः। (1) पूर्वपक्ष.—आत्मीये देहादिसंघातेऽहंप्रत्ययो गौणो यथात्मीये पुत्र आत्मा वै पुत्रनामासीति, लोके चापि मम प्राण एवाय गौरिति तद्वत्। नैवाय मिथ्याप्रत्ययः। मिथ्याप्रत्ययस्तु स्थाणुपुरुषयोरगृह्यमाणविशेषयो'। सिद्धान्त.—न, गौणप्रत्ययस्य न मुख्यस्यार्थास्तित्वमधिकरणतुल्यधर्मत्वाद्धोपमाशब्देन । यथा सिंहो देवदत्तोऽग्निर्माणवक इति सिंह इवाग्निरिव क्रौर्यपैङ्गल्यादिसामान्यवत्त्वेदेवदत्तमाणवकाधिकरणस्तुत्यर्थमेव, न तु सिंहकार्यमग्निकार्यं वा गौणशब्दप्रत्ययनिमित्तं किंचित्साध्यते मिथ्याप्रत्ययकार्यं स्वानर्थमनुभवति । गौणप्रत्ययविषयं च जानाति नैव सिंहो देवदत्त' स्यान्नाग्निर्माणवक इति। तथा गौणेन देहादिसंघातेनात्मना कृतं कर्म न मुख्येनाहंप्रत्ययविषयेण कृतं स्यात्। न हि गौणसिंहाग्निभ्यां कृत कर्म मुख्यसिंहाग्निभ्यां कृत स्यात्। न च क्रौर्येण पैङ्गल्येन वा मुख्यसिंहाग्न्यो' कार्यं किंचित्क्रियते स्तुत्यर्थत्वेनोपक्षीणत्वात्। स्तूयमानौ च जानीतो नाहं सिंहो नाहमग्निरिति न सिंहस्य कर्म ममाग्नेश्चेति तथा न संघातस्य कर्म मम मुख्यस्यात्मन इति प्रत्ययो युक्ततर' स्यात्, न पुनरहं कर्ता मम कर्मेति। (2) यच्चाहुरात्मीयै' स्मृतीच्छाप्रयत्नै' कर्महेतुभिरात्मा कर्म करोतीति ।

---

(a) Both the प्रतिषिद्धकर्मन् like ब्रह्महत्यादि and the विहितकर्मन् like अग्निहोत्रादि (including all नित्य, नैमित्तिक and काम्यकर्मन्s) are possible only of a man who is ignorant and has desires, because, otherwise, there is no explanation for activity.

(b) It is not that the man who performs the नित्यादिकर्मन्s knows the Atman as an entity different from the body. कर्मन् is "a kind of movement (चलन)" and the activity involved in that कर्मन् is seen to be of the nature of "*I* do this" and *to be done by one who is not the Atman* (i. e., by the body)

(c) "The cognition 'I (do this),' taking place with reference to the body is secondary but not illusory"—a Purvapaksa. This view is refuted by Sankara by *seven arguments*; and *he* concludes that गौणकर्मन् will produce गौणफलसंबन्ध and so आत्मा is अकर्तृ and अभोक्तृ.

न, तेषां मिथ्याप्रत्ययपूर्वकत्वात् । मिथ्याप्रत्ययनिमित्तेष्टानिष्टानुभूतक्रियाफलजनितसंस्कारपूर्वका हि स्मृतीच्छाप्रयत्नादयः । यथास्मिञ्जन्मनि देहादिसंघाताभिमानरागद्वेषादिकृतौ धर्माधर्मौ तत्फलानुभवश्च तथातीतेऽतीततरेऽपि जन्मनीत्यनादिरविद्याकृतः संसारोऽतीतोऽनागतश्चानुमेयः । ततश्च सर्वकर्मसंन्यासाज्ज्ञाननिष्ठाया आत्यन्तिकः संसारोपरम इति सिद्धम् । अविद्यात्मकत्वाच्च देहाभिमानस्य तन्निवृत्तौ देहानुपपत्तेः संसारानुपपत्तिः । देहादिसंघाते आत्माभिमानोऽविद्यात्मकः । न हि लोके गवादिभ्योऽन्योऽहं मत्तश्चान्ये गवादय इति जानंस्तेष्वहमिति प्रत्ययं मन्यते कश्चित् । अजानंस्तु स्थाणौ पुरुषविज्ञानवदविवेकतो देहादिसंघाते कुर्यादहमिति प्रत्ययं, न विवेकतो जानन् । यस्त्वात्मा वै पुत्र नामासीति पुत्रेऽहंप्रत्ययः स तु जन्यजनकसंबन्धनिमित्तो गौणः । गौणेन चात्मना भोजनादिवत्परमार्थकार्यं न शक्यते कर्तुं, गौणसिंहाग्निभ्यां मुख्यसिंहाग्निकार्यवत् । (3) अदृष्टविषयचोदनाप्रामाण्यादात्मकर्तव्यं गौणैर्देहेन्द्रियात्मभिः क्रियत इति चेत् । न, अविद्याकृतात्मकत्वात्तेषाम् । न गौणा आत्मानो देहेन्द्रियादयः । कथं तर्हि मिथ्याप्रत्ययेनैवानात्मनः सतस्यात्मन संघात्यात्मत्वमापाद्यते तद्भावे भावात्तदभावे चाभावात् । अविवेकिना ह्यज्ञानकाले बालानां दृश्यते दीर्घोऽहं गौरोऽहमिति देहादिसंघातेऽहंप्रत्ययो, न तु विवेकिनामन्योऽहं देहादिसंघातादिति जानतां तत्काले देहादिसंघातेऽहंप्रत्ययो भवति । तस्मान्मिथ्याप्रत्ययाभावेऽभावात्तत्कृत एव न गौणः । पृथग्गृह्यमाणविशेषसामान्ययोर्हि सिंहदेवदत्तयोरग्निमाणवकयोर्वा गौणः प्रत्ययः शब्दप्रयोगो वा स्यान्नागृह्यमाणसामान्यविशेषयोः । (4) यत्तूक्तं श्रुतिप्रामाण्यादिति । न, तत्प्रामाण्यस्यादृष्टविषयत्वात् । प्रत्यक्षादिप्रमाणानुपलब्धे हि विषयेऽग्निहोत्रादिसाध्यसाधनसंबन्धे श्रुतेः प्रामाण्यं न प्रत्यक्षादिविषयेऽदृष्टदर्शनार्थत्वात्प्रामाण्यस्य । तस्मान्न दृष्टमिथ्याज्ञाननिमित्तस्याहंप्रत्ययस्य देहादिसंघाते गौणत्वं कल्पयितुं शक्यम् । न हि श्रुतिशतमपि शीतोऽग्निरप्रकाशो वेति ब्रुवत्प्रामाण्यमुपैति । यदि ब्रूयाच्छीतोऽग्निरप्रकाशो वेति तथाप्यर्थान्तरं श्रुतेर्विवक्षितं कल्प्यं प्रामाण्यान्यथानुपपत्तेर्न तु प्रमाणान्तरविरुद्धं स्ववचनविरुद्धं वा [ कल्प्यम् ] । (5) कर्मणो मिथ्याप्रत्ययवत्कर्तृकत्वात्कर्तुरभावे श्रुतेरप्रामाण्यमिति चेत् । न, ब्रह्मविद्यायामर्थवत्त्वोपपत्तेः । (6) कर्मविधिश्रुतिवद्ब्रह्मविद्याविधिश्रुतेरप्रामाण्यप्रसङ्ग इति चेत् । न, बाधकप्रत्ययानुपपत्तेः । यथा ब्रह्मविद्याविधिश्रुत्यात्मन्यवगते देहादिसंघातेऽहंप्रत्ययो बाध्यते तथात्मन्येवात्मावगतिर्न कदाचित्केनचित्कथंचिदपि बाधितुं शक्या, फलाव्यतिरेकादवगतेर्यथाग्निरुष्णः प्रकाशश्चेति । (5 continued ) न च कर्मविधिश्रुतेरप्रामाण्यं, पूर्वपूर्वप्रवृत्तिनिरोधेनोत्तरोत्तरापूर्वप्रवृत्तिजननस्य प्रत्यगात्माभिमुख्येन प्रवृत्त्युत्पादनार्थत्वात् । मिथ्यात्वेऽप्युपायस्योपेयसत्यतया सत्यत्वमेव स्याद्यथार्थवादानां विधिशेषाणाम् । लोकेऽपि बालोन्मत्तादीनां पयआदौ पाययितव्ये चूडावर्धनादिवचनम् । प्रकारान्तरस्थानां [ कर्मश्रुतीनाम् ] च साक्षा-

देव प्रामाण्यंसिद्धिः, प्रागात्मज्ञानाद्देहाभिमाननिमित्तप्रत्यक्षादिप्रामाण्यवत् । ( ?
यत्तु मन्यसे स्वयमव्याप्रियमाणोऽप्यात्मा संनिधिमात्रेण करोति तदेव च मुख्यं कर्तृत्वमात्मनः । यथा राजा युध्यमानेषु योधेषु युध्यत इति प्रसिद्धं स्वयमयुध्यमानोऽपि संनिधानादेव जितः पराजितश्चेति च तथा सेनापतिर्वाचैव करोति क्रियाफलसंबन्धश्च राज्ञः सेनापतेश्च दृष्टः, यथा च ऋत्विक्कर्म यजमानस्य, तथा देहादीनां कर्मात्मकृतं स्यात्तत्फलस्यात्मगामित्वात् । यथा च भ्रामकस्य लोहभ्रामयितृत्वादव्यापृतस्यैव मुख्यमेव कर्तृत्वं तथा चात्मन इति । तदसत्, अकुर्वतः कारकत्वप्रसङ्गात् । कारकमनेकप्रकारमिति चेत् । न, राजप्रभृतीनां मुख्यस्यापि कर्तृत्वस्य दर्शनात् । राजा तावत्स्वव्यापारेणापि युध्यते योधानां योधयितृत्वेन धनदानेन च मुख्यमेव कर्तृत्वं तथा जयपराजयफलोपभोगे । तथा यजमानस्यापि प्रधानत्यागेन दक्षिणादानेन च मुख्यमेव कर्तृत्वम् । तस्मादव्यापृतस्य कर्तृत्वोपचारो यः स गौण इत्यवगम्यते । यदि मुख्यं कर्तृत्वं स्वव्यापारलक्षणं नोपलभ्येत राजयजमानप्रभृतीनां तदा संनिधिमात्रेणापि कर्तृत्वं मुख्यं परिकल्प्येत, यथा भ्रामकस्य लोहभ्रामणेन न तथा राजयजमानादीनां स्वव्यापारो नोपलभ्यते । तस्मात्संनिधिमात्रेणापि कर्तृत्वं गौणमेव । तथा च सति तत्फलसंबन्धोऽपि गौण एव स्यात् । न गौणेन मुख्यं कार्यं निर्वर्त्यते । तस्मादसदेवैतद्गीयते देहादीनां व्यापारेणाव्यापृत आत्मा कर्ता भोक्ता च स्यादिति । भ्रान्तिनिमित्तं तु सर्वमुपपद्यते । यथा स्वप्ने मायायां चैवम् । न च देहाद्यात्मप्रत्ययभ्रान्तिसंतानविच्छेदेषु सुषुप्तिसमाध्यादिषु कर्तृत्वभोक्तृत्वाद्यनर्थ उपलभ्यते । तस्माद्भ्रान्तिप्रत्ययनिमित्त एवायं संसारभ्रमो न तु परमार्थ इति सम्यग्दर्शनादत्यन्तमेवोपरम इति सिद्धम् ॥ ६६ ॥

सर्वं गीताशास्त्रार्थमुपसंहृत्यास्मिन्नध्याये विशेषतश्चान्त इह शास्त्रार्थंदार्ढ्याय संक्षेपत उपसंहारं कृत्वाथेदानीं शास्त्रसंप्रदायविधिमाह—

इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥

इदं शास्त्रं ते तव हिताय मयोक्तं संसारविच्छित्तयेऽतपस्काय तपोरहिताय न वाच्यमिति व्यवहितेन संबध्यते । तपस्विनेऽप्यभक्ताय गुरुदेवभक्तिरहिताय कदाचन कस्यांचिदप्यवस्थायां न वाच्यम् । भक्तस्तपस्व्यपि सन्नशुश्रूषुर्यो भवति तस्मा अपि न वाच्यम् । न च यो मां वासुदेवं प्राकृतं मनुष्यं मत्वाभ्यसूयत्यात्मप्रशंसादिदोषाध्यारोपणेन ममेश्वरत्वमजानन्न सहतेऽसावप्ययोग्यस्तस्मा अपि न वाच्यम् । भगवति भक्ताय तपस्विने शुश्रूषवेऽनसूयवे च वाच्यं शास्त्रमिति सामर्थ्याद्गम्यते । तत्र मेधाविने तपस्विने वेत्यनयोर्विकल्पदर्शनात् ( ) शुश्रूषाभक्तियुक्ताय तपस्विने तद्युक्ताय मेधाविने वा वाच्यम्, शुश्रूषाभक्तिवियुक्ताय न तपस्विने नापि मेधाविने वाच्यम् । भगवत्यसूयायुक्ताय समस्तगुणवतेऽपि न वाच्यम् । गुरुशुश्रूषाभक्तिमते च वाच्यमित्येष शास्त्रसंप्रदायविधिः ॥ ६७ ॥

संप्रदायस्य कर्तुः फलमिदानीमाह—

य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८ ॥

य इमं यथोक्तं परमं निःश्रेयसार्थं केशवार्जुनयोः संवादरूपं ग्रन्थं गुह्यं गोप्यं मद्भक्तेषु मयि भक्तिमत्स्वभिधास्यति वक्ष्यति ग्रन्थतोऽर्थतश्च स्थापयिष्यतीत्यर्थः। यथा त्वयि मया। भक्तेः पुनर्ग्रहणाद्भक्तिमात्रेण केवलेन शास्त्रसंप्रदाने पात्रं भवतीति गम्यते। कथमभिधास्यतीत्युच्यते भक्तिं मयि परां कृत्वा भगवतः परमगुरोः शुश्रूषा मया क्रियत इत्येवं कृत्वेत्यर्थः। तस्येदं फलं मामेवैष्यति मुच्यत एवात्र संशयो न कर्तव्यः ॥ ६८ ॥

किंच—

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥

न च तस्माच्छास्त्रसंप्रदायकृतो मनुष्येषु मनुष्याणां मध्ये कश्चिन्मे मम प्रियकृत्तमोऽतिशयेन प्रियकृत्तरोऽन्यः प्रियकृत्तमो नास्त्येवेत्यर्थो वर्तमानेषु। न च भविता भविष्यत्यपि काले तस्माद्द्वितीयोऽन्यः प्रियतरो भुवि लोकेऽस्मिन् ॥ ६९ ॥

योऽपि—

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥

अध्येष्यते च पठिष्यति य इमं धर्म्यं धर्मादनपेतं संवादरूपं ग्रन्थमावयोस्तेनेदं कृतं स्यात्। ज्ञानयज्ञेन विधिजपोपांशुमानसानां यज्ञानां ज्ञानयज्ञो मानसत्वाद्विशिष्टतम इत्यतस्तेन ज्ञानयज्ञेन गीताशास्त्रस्याध्ययनं स्तूयते। फलविधिरेव वा देवतादिविषयज्ञानयज्ञफलतुल्यमस्य फलं भवतीति। तेनाध्ययनेनाहमिष्टः पूजितः स्यां भवेयमिति मे मम मतिर्निश्चयः ॥ ७० ॥

अथ श्रोतुरिदं फलम्—

श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥ ७१ ॥

श्रद्धावाञ्छ्रद्दधानोऽनसूयश्चासूयावर्जितः सन्निमं ग्रन्थं शृणुयादपि यो नरोऽपिशब्दात्किमुतार्थज्ञानवान्सोऽपि पापान्मुक्तः शुभान्प्रशस्ताँल्लोकान्प्राप्नुयात्पुण्यकर्मणामग्निहोत्रादिकर्मवताम् ॥ ७१ ॥

शिष्यस्य शास्त्रार्थग्रहणाग्रहणविवेकबुभुत्सया पृच्छति। तदग्रहणे ज्ञाते पुनर्ग्राहयिष्याम्युपायान्तरेणापीति प्रष्टुरभिप्रायः। यत्नान्तरमास्थाय शिष्यः कृतार्थः कर्तव्य इत्याचार्यधर्मः प्रदर्शितो भवति—

राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥

हे राजन्धृतराष्ट्र संस्मृत्य संस्मृत्य संवादमिममद्भुतं केशवार्जुनयोः पुण्यं श्रवणादपि पापहरं श्रुत्वा हृष्यामि च मुहुर्मुहुः प्रतिक्षणम् ॥ ७६ ॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः ॥ ७७ ॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेर्विश्वरूपं विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः ॥ ७७ ॥

किं बहुना—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसंन्यासयोगो नाम अष्टादशोऽध्यायः ॥ १८ ॥

यत्र यस्मिन्पक्षे योगेश्वरः सर्वयोगानामीश्वरस्तत्प्रभवत्वात्सर्वयोगबीजश्च कृष्णो यत्र पार्थो यस्मिन्पक्षे धनुर्धरो गाण्डीवधन्वा तत्र श्रीस्तस्मिन्पाण्डवानां पक्षे विजयस्तत्रैव भूतिः श्रिया विशेषो विस्तारो भूतिर्ध्रुवाऽव्यभिचारिणी नीतिर्नय इत्येवं मतिर्मम ॥ ७८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमदाचार्यशंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये मोक्षसंन्यासयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥

---

समाप्तमिदं गीताशास्त्रम् ।

# Adhyāya IX.

1. ( 1 ) धारणायोग :–Here Sankara calls the योग of Adh. VIII धारणायोग, this need rot be taken as inconsistent with 'ब्रह्माक्षरनिर्देशः' which is Sankara's title of Adhyāya VIII. Sankara does not seem to take every Adhyaya as dealing with a particular योग *or a particular aspect of* योग; *he takes* Adhyāya VIII as treating of a particular metaphysical topic, *viz.*, ब्रह्माक्षर the Syllable of Brahman, i. e., the Symbol OM. According to him Adhyāya V is called प्रकृतिगर्भः ( v. l. संन्यासयोग ). Also, when he gives a title ending with "योग" to the other Adhyayas he does not seem to attach any particular importance to that word; so that क्षेत्रक्षेत्रज्ञयोग or श्रद्धात्रयविभागयोग titles of Adhyāya XIII and Adhyāya XVII respectively are, according to Sankara, as good as क्षेत्रक्षेत्रज्ञ or श्रद्धात्रयविभाग.

Tilak was the first to emphasize the relation of योग as the title of each Adhyāya with reference to योगशास्त्र the title of the Bhagavadgīta itself in the colophon He takes each Adhyāya as bringing out a point left unclear in a previous Adhyāya, so that all the Adhyayas are, according to him, called योगs, because each of them contains one item of कर्मयोग and thus we have 18 items in the 18 Adhyāyas, which taken collectively make up the one कर्मयोग. In our opinion each Adhyāya gives one phase or aspect of योग, which taken by itself is sufficient for the guidance of a man; and these phases, though sometimes apparently inconsistent with one another, are not intended to be reconciled, since they are each of them to be looked upon as independent of the rest

( 2 ) अनेनैव क्रमेण मोक्षप्राप्तिफलमधिगम्यते नान्यथा—According to

Śaṅkara Adhyāya IX teaches a ज्ञान which not only leads to Mokṣa in a way different from the one taught in Adhyāya VIII, but which is rather the only ज्ञान which can directly lead to Mokṣa. This is the sense of तु (तुशब्दो विशेषनिर्धारणार्थः । इदमेव सम्यग्ज्ञानं साक्षान्मोक्षसाधनम्—in Śāṅkara Bhāṣya on v. 1).

( 3 ) इदं महाज्ञानं वक्ष्यमाणमुक्तं च पूर्वेष्वध्यायेषु—Sankara does not seem to be correct in explaining इदं as उक्तं पूर्वेष्वध्यायेषु, because इदम् is followed by प्रवक्ष्यामि. So, instead of trying to identify the ज्ञान and विज्ञान, etc. of Adhyāya IX with those of the preceding Adhyāyas, it is perhaps better to explain the teaching of Adhyāya IX as an independent and self-sufficient piece by itself, as is probably implied by इदं प्रवक्ष्यामि.

( 4 ) तु—This also shows that the topic of this Adhyāya differs from that of the preceding Adhyāya. For Śankara's explanation of तु vide Note 2 above. He takes the ज्ञान of Adhyāyas I-VIII as the same as that of Adhyāya IX and then says that this ज्ञान alone can directly lead to Mokṣa.

( 5 ) नान्यत्—Śankara must be excluding ( by तु ) the ज्ञान taught in Adhyāya VIII, because, he would argue, that ज्ञान does not directly lead to Mokṣa. His explanation of इदम् as referring to 'वासुदेवः सर्वम्' and अन्यत् as referring to अथ येऽन्यथाऽतः......भवन्ति (Chā. Upa VII. 25. 2) is not consistent with the Gītā itself.

( 6 ) ज्ञानं विज्ञानसहितम्—In Adhyāya VII also we are told

that Adhyāya VII gives one of them and Adhyāya IX gives *another.*

(7) गुह्यतमम्—In the Upaniṣads the philosophical truths are called "secret doctrines" (गुह्यः आदेशः); the Gītā here (IX. 1) seems to call the Bhakti Doctrine "the most secret doctrine". In Bha. Gī. XVIII. 64-65 the doctrine of self-surrender is said to be "the greatest of all secrets".

2. (1) राजविद्या-राजगुह्यम्—It is argued by some modern scholars that the Vedanta and the Bhakti Schools originated and developed among the Ksatriyas. Also the Philosophy of Action taught in the Gītā is associated with Ksatriyas, *viz.*, Vivasvat, Manu and Īksavāku. Dr. Bhandarkar writing about the origin of the religion of devotion to Vāsudeva says as follows:—"The Ksatriyas engaged themselves in active speculations on religious matters about the time of the Upanisads and are mentioned even as the original possessors of the new knowledge" (*Vaisnavism, Śaivism, etc.*, P. 9). Deussen in his Religion and Philosophy of the Upanisads makes a similar observation. (But, see Belvalkar and Ranade, History of Indian Philosophy, Vol. II, pp. 136-137.)

As to the origin of the Vedanta doctrine, we may say that in the principal Upanisads there is hardly any name as important as that of Yajñavalkya, though, of course, some Ksatriyas are mentioned as teachers of some original doctrines. As to the origin of the Bhakti School of the Bhagavata or Nārāyana Religion, Dr. Bhandarkar has pointed out that the earliest mention of that school is found in the Nārāyanīya Section of the Śāntiparvan (MBh. VII. 334-351) where the Bhagavadgītā called there the Harigītā) is referred to as the work authoritative for the Dharma which Nārada got from Nārāyana himself in all its details and peculiarities (MBh. XII. 346) and where, again, it is claimed that this Ekāntika Dharma which Nārada got from Nārāyana

is represented to be the same as that which was com municated to Arjuna at the beginning of the war ( MBh XII 348, Vide Dr Bhandarkar's Vaisnavism, Saivism, etc, P 7, and Prof Das Gupta's H I P, Vol II, P. 545 ff ) Dr Bhandarkar has also pointed out that this Narayaniya Section contains two accounts of the origin of the religion of devotion One of them where the religion is said to have been first taught by the seven sages called 'Citrasikhandins' is older than the other (Vaisna vism, P 5, P 7-8) Dr Bhandarkar seems to think that the more ancient of these two accounts which does not refer to the Gitā as its authority treats of a religion of devotion in a form more ancient than its form in the Gita itself which is declared as its authority by the other account ( viz, that of Narada s visit to the Svetadvipa ) which seems to be the later of the two Thus, the seven sages called the Citrasikhandins were the originators of the Bhagavata Dharma and not the Ksatriyas (Manu, Iksa vaku—cf Bha Gi IV 1) It is however, not unlikely that the Ksatriyas had their share in the development of the Vedanta Doctrine as well as in that of the reli gion of devotion ( Bhakti )

For the above reasons the compound राजविद्या and राज गुह्यम् cannot be solved as राज्ञां विद्या and राज्ञां गुह्यम्, as would be proposed by those who hold that the Ksatriyas were the originators of this doctrine Moreover this religion of devotion and jnāna and vijnana is said to be very easy to be observed and practised ( कर्तुं सुसुखम्—v 2 ) This fact would suggest that राजविद्या and राजगुह्यम् should be solved as विद्यानां राजा and गुह्यानां राजा the easiest Lore and the greatest secret. 'गुह्यानां राजा' would be supported by गुह्यतमम् Sankara also does not connect the Vidya with the kings

( 2 ) It will be seen from the verses of this Adhyaya that though it professes to describe "ज्ञानं विज्ञानसहितम्",

it mainly deals with the religion of devotion (*bhakti*), and in this Adhyaya IX corresponds to Adhyaya VII (Cf VII 2 16-19 with IX 1, 13-14, 22, 26-27, 31-34) The fact seems to us to be that the doctrine of *bhakti* 'devotion' was in the days of the Gita a new one and it was being taught as the proper *knowledge and experience*—"jnana and vijnana" Not only in Adhyayas VII and IX, but also elsewhere in the Gita *bhakti* is mentioned as jnana (Cf e g XIII 10-11 where भक्ति is called ज्ञान)

Sankara has generally explained *bhakti* as nothing else but *jnana*, but by doing so he has not done justice to the new doctrine of devotion which the Gita was for the first time teaching under an old name (of jnana) The Gita does not say that its bhakti doctrine is the same as the old jnana doctrine it rather means that its doctrine of devotion is the proper jnana and thus it tries to substitute its *bhakti* for the Upanisadic *jnana*

(3) पवित्रमिदमुत्तमम्—Here a greater degree of the power of purification seems to have been claimed for *bhakti* than is done for *jnana* in Bha Gita IV 38 *viz*, नहि ज्ञानेन सदृशं पवित्रमिह विद्यते । or for *yajna dana* and *tapas* in Bha Gi XVIII 5, *viz*,

यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥

*Bhakti* directly touches the heart of a man, and IX 32 mentions persons to whom a better appeal can be made through the heart than through the head The sinner would be easily purified by bhakti (IX 30-31) In the Path of Jnana purification of heart precedes the rise of knowledge while in the Path of Bhakti the attainment of devotion itself drives away all sins and makes the greatest sinner the greatest devotee though the Jnani bhakta first frees himself from his sins and then takes to devotion (VII 18)

Principal Das Gupta has laid special emphasis on this

aspect of the Path of ( Pure ) Devotion of the Gītā ( Vide H I P, Vol 2, pp 530-531 ) In Bha Gi XVIII. 65 the Lord undertakes to free Arjuna from all his sins if he setting aside all his duties surrenders himself to Him

( 4 ) प्रत्यक्षावगमम्—The knowledge and devotion of this Adhyaya is to be directly cognized. The beings are in the Lord and are also not in the Lord ( v 4-5 ) and this Yoga of the Lord can be seen ( pasya in v 5b ), and Arjuna actually wishes to see with his eyes the Universal Form of the Lord and does see it through His grace ( XI. 3-8, cf पश्य मे योगमैश्वरम् in IX 5 and repeated in XI. 8 )

We may note that Madhusudana Sarasvati explains अश्नामि in v 26 ( तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ) as the Lord receiving in person what a devotee lovingly offers to Him

प्रत्यक्षावगमम् may have been used to criticise the results of the कर्मकाण्ड and also those of the ज्ञानकाण्ड as we and all except Sankara understand them The Svarga was not to be attained in this very life, nor was the Mukti derived from Jnana enjoyable in this life But the bliss of Bhakti, the love and grace of the Lord for the devotee, could be experienced in this very world

In the Bra. Su the words प्रत्यक्ष and अनुमान are respectively used for the authority of Sruti and Smrti, but the word प्रत्यक्ष in this verse of the Gita has nothing to do with its use in the Brahmasutra

( 5 ) Sankara explains विद्या as ब्रह्मविद्या and he explains राजविद्या as the most shining Lore He also says that ब्रह्मज्ञान is the highest means of purification, since it burns to ashes in a moment good and bad deeds of a man Thus, he explains v 2 in the light of Bha Gi IV. 17 rather than in that of the context of Adhyāya IX itself

( 6 ) धर्म्यम्—The author of the Gitā takes much trouble to show that his doctrine of *bhakti* is a part of *dharma* and not foreign to dharma, though he discards

the Vedavāda and Trayīdharma as leading to *bondage* (saṃsāra) and though he prefers Disinterested Action to Renunciation of Actions taught in the Upanisads.

Sankara takes आत्मज्ञान to be the विशेष्य of धर्म्यम् and says that आत्मज्ञान is not धर्मविरोधि.

(7) सुसुखं कर्तुम्—About ज्ञान we read क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति (Katha Upa III. 14). The complicated procedure of Ritualism is already stated in Bha Gī II. 43 (क्रियाविशेषबहुलाम्...). But about the simplicity of the religion of devotion we read in this very Adhyaya as follows —

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ (v. 26).

Not only this, but one can dedicate whatever he happens to do, to the Lord instead of doing any special rite for Him, e g., one can dedicate his own food to the Lord and then eat it as His gift (यदश्नासि—v. 27).

Sankara has taken आत्मज्ञानम् as the topic of the verse so, he explains सुसुखं कर्तुम् as सुसुखं कर्तुं यथा रत्नविवेकविज्ञानम् ! Is not क्षुरस्य धारा निशिता . . ..spoken of आत्मज्ञान ?

(8) अव्ययम्—Sankara says that a rite or sacrifice perishes when its reward perishes or comes to an end, but the reward of आत्मज्ञान never perishes

But 'कर्तुं सुसुखम्' shows that the means taught here is itself such as would never perish. *It is not the end* or the goal which when won is to be eternally enjoyed But the Gītā says that the means if left incomplete will not perish but will bear a fruit, unlike the rites which give a reward *only* if and when they are finished in their entirety (Cf Bha Gī II. 40—नेहाभिक्रमनाशोऽस्ति). The fruit of *bhakti*, like that of Disinterested Actions is sure to accrue to the devotee, even though *he may not complete* the course of devotion, in the way in which a योगभ्रष्ट gets the reward of his disinterested performance of actions (VI. 45).

3 (1) This may be a criticism of the Karmakāndins (Ritualists) rather than that of Buddhism or Jainism The ritualists are mentioned in this Adhyāya (v. 20-21) and it is said that they remain in the circle of going to heaven and returning In Bha Gī XVI 7-20 some kind of atheists are mentioned and among them ritualists are included (XVI 15) In this Adhyaya (v 11-12) the atheists are called 'those who have resorted to demonaic nature' and also in Adhyaya XVI. 6 the atheists are described as 'demonaic creation'.

From v 4 and those which follow it we learn that these atheists are those who do not believe in a universal form (विश्वरूप) of the Lord which was of a human shape (v 11) and in which all beings existed but which was also without all beings Devotion to this form of the Lord seems to have been meant by this religion (dharma v 3) There might have been opposition to this religion for a long time from the side of the Vedic Ritualists, just as they had opposed also the teaching of the Upanisads They seem to be referred to in v. 3

(2) Sankara takes the materialists (देहमात्रात्मदर्शनमेव प्रपन्ना) as the atheists of this verse In explaining 'अप्राप्य माम्' he says that the doubt whether these atheists reach the Lord or not is not the doubt raised here and so 'अप्राप्य माम्' must be interpreted to mean that they do not get (the conviction of following) the Path of Devotion which is a particular Path to reach the Lord (मत्प्राप्तिमार्ग साधनभेदभक्तिमात्रमप्यप्राप्य)

We think that we need not change the literal sense of "अप्राप्य माम्" and that if we take the atheists here as the Vedic Ritualists we can explain 'अप्राप्य माम्' in a satisfactory way.

(3) मृत्युसंसारवर्त्मनि-Instead of taking this to mean the cycle of births and deaths in this world, Sankara interprets it as the Path of being born in the Hell and in

the form of the lower animals ( नरकतिर्यगादिप्रतिमार्गं ) So, here also he gives up the usual and literal sense of मृत्युसंसारवर्त्मन् )

4 (1) We have already explained the sense of this statement which is made in various places in the Gita (Vide our Notes on Bha GI VII 12) It is meant to establish the immanence and at the same time transcendence of the Lord It is intended to assert that Krsna is *higher than* the Aksara We believe this will be very clear if we compare Bha GI VIII 22 with this verse The former establishes the *transcendence* of the Purusa who is *higher than* the Aksara the embodied souls or beings being mentioned with reference to both the Aksara (v 20) and the Purusa (v 22) while the latter (IX 4) repeats the same with reference to the Lord Krsna Himself Verses 5-10 are concerned with an explanation of how the beings (भूतs) *are associated* with Krsna, while v 11 *asserts the* fact that the Lord *has a human body* (*Cf* पुरुष in VIII 22) and that that form of His is *higher* (*para*) i e higher than everything including the Aksara or nirakara (aspect of) Brahman So in all passages like this the author of the Gita (or the revisor ?) emphasizes the *higherness* (*paratva*) of the Lord

( 2 ) मया ततम्—Sankara *explains* ततम् *as* व्याप्तम्, but though this may suit the sense of v 4 B, we do not think that Sankara's explanation is authentic ततम् means 'spread out' and so it would mean 'created' It is the Avyakta from which the world is created and here the Avyakta is said to be the body of the Lord If this interpretation be correct, we can easily understand the mention of beings in the latter half of v 4, because the beings are created from the Avyakta or the Aksara This interpretation will be consistent also with the Upanisads, where the beings are declared to be produced from the Aksara or Brahman.

Principal Das Gupta also takes अव्यक्तमूर्तिना as one whose body is the Avyakta ( HIP., Vol. 2, P. 473 ).

Sankara takes अव्यक्तमूर्तिना as करणागोचरस्वरूपेण. He explains मत्स्थानि सर्वभूतानि as follows:—Since a being without a body ( निरात्मक वस्तु ) cannot fulfil any function, मत्स्थानि should mean that the beings have an existence through my own existence ( = the beings cannot exist if I do not exist ) According to him ' न चाहं तेष्ववस्थितः ' denies that Brahman which is a formless and therefore unassociable being ( असंसर्गि वस्तु ) could be contained in the beings ( i. e., Brahman could be आधेय and the beings आधार ) Thus, ' न चाहं तेष्ववस्थित ' denies the आधेयाधारभाव between ब्रह्मन् and the beings, in short he takes the locative plural of तेषु in a literal sense.

We may say that if we take अव्यक्त as a principle, viz, the चेतन प्रकृति of the Lord as we have taken, the Lord will be spoken of as having a body, and consequently the verse will describe the production ( ततम् ) and existence ( स्थ ) of beings from and in the Lord, and न चाहं तेष्ववस्थित will mean transcendence of the Lord and so both the statements in 4B will be literally true.

Rāmānuja explains ततम् as व्याप्तम् and says that the Lord as the Inner-controller pervades the world as the Possessor ( शेषित्वेन ) and thus sustains it ( धारणार्थम् ). He also explains the latter half by quoting the अन्तर्यामिब्राह्मण ( Br. Upa. III 7 ) मत्स्थानि सर्वभूतानि means that the beings are the body of the Lord and are hence controlled by the Lord, न चाहं तेष्ववस्थित shows that the Lord is the Whole or the Possessor ( शेषित्वेन ), i. e, the beings do not help the Lord in any way, the Lord exists of His own accord.

We do not think the verse deals with the Lord's inner-control of the beings. The sustenance of the beings by the Lord is mentioned in the next verse It is strange the Rāmānuja does not explain अव्यक्तमूर्तिना in agreement

with his doctrine of अचित् and चित् being the body (मूर्ति) of the Lord and tries to find it in 4B where it is not possible to find.

**5.** (1) न च मत्स्थानि भूतानि—We have pointed out that this part of the statement of the relation of the beings and the Lord occurs in this place only (IX. 5a) and not in any other passage about this relation. We have also explained it as being a way of expressing the Lord's transcendence. Three-fourths of the Purusa are without the beings and only one-fourth *creates* and *contains* the beings (पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि । Rg X. 90. 3). So, 5a is as much a fact as are 4c and 4d.

Śaṅkara does not add any explanation to 5a. Perhaps he would argue that *from the esoteric standpoint* the beings do not exist at all in Brahman. We do not think that the division of the esoteric and exoteric standpoints taught in the system of Śaṅkara were intended by the author of the Gītā.

Rāmānuja.—" I do not hold the beings in Me, in the way in which the water-pot holds the water " He says that the Lord holds or sustains the beings by His thought only (सङ्कल्प) We think the verse 5a deals with only the creation and not sustenance of the beings

(2) पश्य मे योगमैश्वरम्—Sankara—योग is युक्ति, i e., घटन, i. e, constitution or formation of the Lord, i e., the exact nature of the Atman (आत्मनो याथात्म्यम्) He means that the real nature of Atman is a wonder and so he takes योग also in the sense of wonder, as is clear from his introduction to 5B (इदं चाश्चर्यमन्यत्पश्य). He connects पश्य मे योगमैश्वरम् with 5a and 5B and in this he seems to be right

Rāmānuja connects योग with only 5B and explains it as a wonder peculiar to the Lord only.

We think, there is no reason to give up here the usual sense of the word योग, because the *presence* of beings *in* the Lord and the real nature of the Lord's

relation with the beings give rise to विश्वरूपदर्शनयोग an aspect of योग (= कर्मयोग) based upon the realization of the Lord's universe-form (विश्वरूप of the Lord) It is because the Lord here asked Arjuna to see this Yoga that the latter actually requests the Lord to show him His Yoga concerning His relation with the beings who constitute the universe We must explain IX 5b in connection with XI 8d

(3) भूतभृन्न च भूतस्थः—Saṅkara explains न च भूतस्थः in the sense that the Lord is not the आधेय, nor are the beings the आधार, as he does in the case of 4d ( न चाहं तेष्ववस्थितः ) He explains भूतभृत् by saying that the Lord, though not associated with the beings, governs the beings and that this is another wonder ( योग = आश्चर्यम् )

Rāmānuja in explaining न च भूतस्थः sticks to his interpretation of 4d and says that the beings do not in any way help the Lord i e the Lord exists independently of the beings He takes भूतभृत् literally

We suggest that the force of the विरोध ( expression of an inconsistency ) in भूतभृत् न च भूतस्थः can be explained as follows —It was generally believed by Vedantins that Brahman enters the created world and thus sustains it. Cf Bha Gī XV 17 ::

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

There are several passages in the Upanisads about the entrance of Brahman into the created world and they may mean that by entrance into the world Brahman sustains the world But in IX 5c the Lord says that He sustains the beings (during their existence or continuation–स्थिति ) without being present in the beings i e, with His transcendent form, i.e. with that form which is known as पुरुष and which is higher than the Akṣara–Avyakta from which the beings are produced Cf Bra Sū अक्षरमम्बरान्तधृतेः । and सा च प्रशासनात् (Bra Sū I 3 10–11) Not that the Lord is

not immanent in the beings, but at the same time He is transcendent and this fact must not be neglected

(4) ममात्मा भूतभावन —*This seems to us to explain the* statement in 5c (भूतभृन्न च भूतस्थ ). The Lord distinguishes between His self (आत्मा—Cf मूर्ति in अव्यक्तमूर्तिना in v 4) and *Himself and so He says that* " My self is the originator of beings ". Since the Reality has two aspects one of which (the पुरुषविध aspect) is higher than the other the Avyakta aspect), the higher aspect may be looked upon as the sustainer of the beings without being present in the beings.—In Bra. Su. I 2-3 this kind of sustenance of the created world is often given by the Sutrakara to show that the topic of the Sruti in question is the Purusa (or पुरुषविध aspect) Vide *our Interpretation of the* Brahmasutra

*Sankara remarks that the Lord is Himself the Atman* (Self-) and so He cannot think of some one else being His Atman (self), as ordinary ignorant people do There fore, the Lord, *Sankara concludes, only uses the language* of the people without holding the belief of the people So, 5(d) really means ' The Lord Himself (not the Lord's Self) *is the originator or developer of the beings* " He is, thus both भूतभृत् and also भूतभावन

*We believe,* Sankara has by his *explanation of* ममात्मा missed the point emphasized by the Gita

Ramanuja explains ममात्मा as मम मनोमम सङ्कल्प एव and भावन as भावयितृ, i e धारयितृ and नियन्तृ We do not see any justification here for the doctrine of God being the Inner-controller, nor *also for introducing the* सङ्कल्प-power of the Lord No word in the verse supports it

(5) *Verse 6 also further explains* the relation of the beings and the Lord, so as to prove that the Lord is much more than the beings i e, He transcends His creation

(6) There is hardly any doubt that here the Gita discusses the relation of the beings and the Reality.

